क्षपकश्रेणिमारूढः, प्राप्य केवलमुज्ज्वलम् । प्राग्वर्णितं महाराज !, लभते शाश्वतं पदम् ॥ ३०३ ॥ भावपावकनिर्दग्ध-भूरिकर्मेन्धनस्तदा । गुणसेननृपोवाच-मुवाच रचिताञ्जलिः ॥ ३०४ ॥ धन्योऽस्मि भगवन् ! कर्ण-निपीतत्वद्वचःसुधः । सौमनस्यमवापं त्वां, निर्निमेषं विलोकयन् ॥ ३०५ ॥ तन्मे प्रयच्छ सम्यक्त्वं, व्रतानि द्वादशापि च । उक्त्वेति गुरुदत्त-द्विधिना सर्वमग्रहीत् ॥ ३०६ ॥ ततः शिक्षामवाप्यैष, नत्वा च सपरिच्छदम् । गुरुं पुरं प्रविष्टोऽथ, भोजनं विदधे सुधीः ॥ ३०७ ॥ पुनः समेत्य संध्याया-मुपदेशरसायनम् । अपादऽपारसंसार-गदविच्छेदकोविदम् ॥ ३०८ ॥ इति द्विसंध्यमप्यस्य, पर्युपास्तिं वितन्वतः । त्रिंशता दिवसैर्जज्ञे, श्रावकत्वं सुनिश्चलम् ॥ ३०९ ॥ मासकल्पेऽथ संपूर्णे, सूरयः कल्पवेदिनः । विहारं विदधुर्भव्या-म्भोजबोधनभानवः ॥ ३१० ॥ गुरौ विहितवीहारे, गतैः कतिपयैर्दिनैः । गुणसेननृपोऽन्येद्युः, स्वप्रासादतलस्थितः ॥ ३११ ॥ दिग्यात्राकरणे नित्यो-द्यतस्य यमभूपतेः । ढक्कामिव प्रयाणाय, जीवलोकरिपुं प्रति ॥ ३१२ ॥ अट्टहासं भवाभिख्य-रक्षसः खरवक्षसः । निर्घातमिव निर्मन्तु-जन्तुष्वपि भयप्रदम् ॥ ३१३ ॥ हाहाकाररवापूर्णं, परिदेवितगर्भितम् । डामरं डिण्डिमध्वानं, शुश्राव श्रुतिदुःश्रवम् ॥ ३१४ ॥ [कलापकम्] अद्राक्षीच्च क्षणादेव, चतुर्भिः पुरुषैर्धृतम् । शवं स्वबन्धुवर्गेण, क्रोशता सर्वतो वृतम् ॥ ३१५ ॥ ततः परमसंवेग-भावितात्मा भुवो विभुः । इन्द्रजालनिभं मत्वा, जीवलोकं व्यचिन्तयत् ॥ ३१६ ॥ इत्थं विरसपर्यन्ते, भवे धन्यास्त एव हि । त्रैलोक्यबन्धुभूतं ये. समासाद्य जिनागमम् ॥ ३१७ ॥ प्राप्ताऽनगारताः पञ्च-महाव्रतधृतौ रताः । सर्वदोषपरित्यक्त पिण्डतः पिण्डधारिणः ॥ ३१८ ॥ अष्टभिश्चिन्त्यमानाश्च, नित्यं शासनमातृभिः । चतुर्धाभिग्रहांस्तेभ्यो, बिभ्राणास्त्रिगुणं तपः ॥ ३१९ ॥ धूननिः-

प्रतिकर्मत्वात्, सर्वत्र समताजुषः । कष्टाष्टादशशीलाङ्ग-सहस्रभरधारिणः ॥३२०॥ प्रशमामृतसंपूर्णा, विहरन्तो महीतले । प्रबोध्य भव्यपद्मानि, सद्धर्मकथनांशुना ॥३२१॥ प्रान्ते संलेखनापूर्वं, जिनोद्दिष्टेन वर्त्मना । पादपोपगमादीनि, श्रित्वा देहं त्यजन्त्यदः ॥३२२॥ [षड्भिः कुलकम्] ततोऽहमपि संप्राप्य, भवाम्भोराशितारकम् । गुरुं विजयसेनाख्यं, मोहसेनाविदारकम् ॥३२३॥ समीपेऽस्य समादाय, महाव्रतभरं परम् । पूर्वोक्तविधिना देहं, त्यक्ष्याम्यक्षामभावनः ॥३२४॥ इति ध्यात्वा समाहूय, सुबुद्ध्यादिकमन्त्रिणः । तेषां निजमभिप्राय-मयमाऽऽख्यन्महामनाः ॥३२५॥ तेऽथ तत्सङ्गविज्ञातजैनसारा महाधियः । अन्वमन्यन्त धन्यं त-मादरेण व्रतार्थिनम् ॥३२६॥ अथ प्रतत्य चैत्येषु, स्पष्टमष्टाहिकामहम् । दीनादीनां महादानं, दापयित्वा च सादरम् ॥३२७॥ संमान्य प्रणयिव्रातं, नागरान् बहुमानयन् । चन्द्रसेनाभिधे ज्येष्ठपुत्रे राज्यं निवेश्य सः ॥३२८॥ भावेनाऽऽत्तव्रतः प्रातर्गन्ताऽस्मि गुरुसन्निधौ । ध्यात्वेति विजने तस्थौ, निशि प्रतिमया स्थिरः ॥३२९॥ [विशेषकम्] इतः कृतनिदानत्वा-त्क्रूरितापः स तापसः । अग्निशर्माऽऽत्तदुष्कर्मा-ऽनशनोज्झितजीवितः ॥३३०॥ जातो विद्युत्कुमारेषु, सार्धपल्योपमस्थितिः । सर्वं पूर्वभवोदन्तं, परिज्ञाय विभङ्गतः ॥३३१॥ कुपितो गुणसेनाय, रभसेनाऽयमागतः । तं तत्राऽप्रतिमक्रोधोऽपश्यत्प्रतिमया स्थितम् ॥३३२॥ [विशेषकम्] प्राच्यक्षुद्वेदनातप्तः, सरजस्कभवं निजम् । शंसन्निवाऽस्य तप्तेन, रजसा वृष्टवानयम् ॥३३३॥ दह्यमानोऽप्यसह्येन, रजसा तेन सात्त्विकः । स दध्यौ विशदध्यान-संतानस्थिरमानसः ॥३३४॥ शारीरमानसैर्दुःखैः, परितः पूरिते भवे । दुःखं हि सुलभं धर्म-प्रतिपत्तिस्तु दुर्लभा ॥३३५॥ धन्योऽस्म्यहं मया येना-ऽपारे संसारसागरे । धर्मचिन्तामणिर्लेभे, भवकोट्याऽपि दुर्लभः ॥३३६॥

एतस्य हि प्रभावेण दौर्गत्यं न कदाचन । आम्यतस्तद्भवेऽनादौ, सफलोऽयं भवोऽभवत् ॥३३७॥ यच्चाग्निशर्मणश्चक्रेऽभिसयो नर्मकर्मणा । प्रचुरीकारितः क्रोध-स्तन्मां स्पृशति मर्मणि ॥३३८॥ मैत्री सर्वेषु सत्त्वेषु, प्रतिपन्नाऽधुना मया । पुराऽत्यन्तं पराभूते, विशेषादग्निशर्मणि ॥३३९॥ इत्थं शुभपरीणाम-स्तेन पातकिना हतः । मृत्वाऽसौ धर्ममर्मज्ञः, कल्पे सौधर्मनामनि ॥३४०॥ विमाने नामतश्चन्द्रा-नन एकाब्धिजीवितः । क्षणादेव क्षणातुल्य-दिव्यदेहधरोऽजनि ॥३४१॥ [युग्मम्] अज्ञानज्ञानयोर्भेदा-त्तापसस्याऽग्निशर्मणः । विद्युत्त्वं गुणसेनस्य, गृहस्थस्याऽपि नाकिता ॥३४२॥ तत्र पूर्वजनान्तसंगत-श्रीजिनेश्वरवचःप्रभावतः । दिव्यनाट्यरसदिव्यसुन्दरी-भूरिभोगभवनं भवेऽभवत् ॥३४३॥ इति श्रीहरिभद्रोक्त्या, प्रद्युम्नाचार्यगुम्फिते । समरादित्यसंक्षेपे, कथितः प्रथमो भवः ॥३४४॥

---

## [ अथ द्वितीयो भवः ]

इहैव जम्बूद्वीपेऽस्ति, वसुमत्या विशेषके । क्षेत्रे वरविदेहाऽऽख्ये, नाम्ना जयपुरं पुरम् ॥१॥ सुवर्णश्रीभृता नित्यं, येन पुण्यजनश्रिता । स्वतुल्यत्वधृताऽऽशङ्का, शधौ लङ्काऽपतद् ध्रुवम् ॥२॥ क्लीबः परस्य दारेषु, गताक्षश्छिद्रवीक्षणे । अवर्णे यत्र मूकश्च, नरवर्गो निसर्गतः ॥३॥ मेरुणा मण्डलाग्रेण, निर्मथ्य प्रधनाम्बुधिम् । यः स्वायत्तां श्रियं चक्रे, प्रत्यक्षः पुरुषोत्तमः ॥४॥ नृपः पुरुषदत्ताख्यः, स तत्र परुषो द्विषाम् । अस्त्यवामनरूपोऽपि, बलिबन्धविधिक्षमः ॥५॥ [युग्मम्]

श्रीकान्ता निजरूपेण, कान्ताय सतताऽऽनता । श्रीकान्ता नाम तस्याऽस्ति, कान्ता गुणगणान्विता ॥ ६ ॥ छाययेव तया सार्धमवियुक्तस्य गोपतेः । गोपतेरिव तस्याऽगु-र्वासराः सुखवासराः ॥ ७ ॥ च्युत्वाऽथ गुणसेनः श्रीकान्तायाः कुक्षिमासदत् । तदाऽपश्यच्च सा ज्वाला-जालपिङ्गलकेसरम् ॥ ८ ॥ स्फटिकाचलचूलाव-द्दधतं विशदां तनुम् । शशिरेखाभनिर्गच्छ-दंष्ट्रं पिङ्गललोचनम् ॥ ९ ॥ पृथुं वक्षःस्थले तुच्छं, मध्ये वृत्तकटीतटम् । प्रलम्बवालधिं सिंह-पोतं सर्वाङ्गसुन्दरम् ॥ १० ॥ स्वप्ने वदनमार्गेण, प्रविश्य जठरे स्थितम् । वीक्ष्य प्रबुद्धा कथयां-बभूव पृथिवीभुजे ॥ ११ ॥ [कलापकम्] नृपः प्राह द्विषद्वर्ग-द्विपद्विपरिपूपमः । यशःप्रसरवान् देवि !, भविताऽङ्गभवस्तव ॥ १२ ॥ तदाकर्ण्य प्रहृष्टा सा, क्रमाद्गर्भानुभावतः । तृतीये मासि संजात-दोहदाऽऽख्यन्महीभुजे ॥ १३ ॥ जिनार्चा पात्रदानं च, दीनानाथानुकम्पनम् । सर्वसत्त्वाभयं चेति, मम नाथ ! मनोरथाः ॥ १४ ॥ ततोऽभ्यधिकसंजात-प्रमोदः पृथिवीपतिः । विदधे तत्तथा सर्वमिष्टवैद्योपदिष्टवत् ॥ १५ ॥ अथ प्रमुदिता देवी, परिपुष्टवपुष्टमा । दिनेषु परिपूर्णेषु, सुमुहूर्ते शुभे दिने ॥ १६ ॥ सुखेन सुषुवे सूनु-मन्यूनतनुतेजसम् । अर्चिरर्चिष्मतो दीप-मिव स्निग्धदशाश्रयम् ॥ १७ ॥ तज्जन्म नृपतेश्चेट्या, शुभंकर्यभिधानया । न्यवेदि तेन सा चक्रे, दारिद्र्यद्वेषिणी क्षणात् ॥ १८ ॥ नृपतिर्मुदितः पुत्र-जन्मोत्सवमकारयत् । त्रिंशतं दिवसान् वाद्यगीतनृत्यमनोहरम् ॥ १९ ॥ प्रजापार्णिधमे तस्मिन्, वर्तमाने महोत्सवे । शून्यभावो निराधारः, कारागारं समाश्रितः ॥ २० ॥ व्यतीते मासि बालस्य, सिंहस्वप्नानुसारतः । सिंह इत्यभिधा चक्रे, महोत्सवपुरःसरम् ॥ २१ ॥ क्रमात्कलाकलापेन, देहस्योपचयेन च । वर्धमानो रतिक्रीडा-वनं प्राप स यौवनम् ॥ २२ ॥ अन्यदा पुष्पचापस्य, पुष्पकालः परः सुहृत् । उपायन-

मुपादाय, पुष्पबाणान्युपागमत् ॥२३॥ दीप्तं दिग्मण्डलं यत्र, कुसुमैः किंशुकोद्भवैः। प्रोषितप्रेयसीचित्यां, ज्वलितज्वलनैरिव ॥२४॥ परितः सहकारेषु, भ्रान्ता भ्रमरधोरणी। धूम्येव विरहार्चिष्म-द्दह्यमानाध्वगावलेः ॥२५॥ पुरस्कृतरतिः पुष्प-चापे न्यस्तशिलीमुखः। मनो विश्वस्य विश्वास्य, मनोभूर्यत्र विध्यति ॥२६॥ जगज्जिगीषोः कामस्य, स्फुटं जयजयध्वनिम्। कोकिलाः कलयांचक्रुः, कलं कलकलं किल ॥२७॥ एवंविधे वसन्ततौं, निजैः सहचरैः सह। ययौ कुमार उद्याने, क्रीडासुन्दरनामनि ॥२८॥ तत्राऽस्य कुर्वतः क्रीडां, दृष्टिगोचरमागता। वेणीभ्रमरमालाभृन्नामतः कुसुमावली ॥२९॥ लक्ष्मीकान्ताभिधानस्य, मातुलस्य सुता कनी। रम्भास्तम्भायमानोरु-युगा कमललोचना ॥३०॥ सखीजनेन दक्षेण, परितः परिवारिता। उद्यानश्रीरिवाध्यक्षा, ऋतुलक्ष्मीगणावृता ॥३१॥ [विशेषकम्] साभिलाषमनेनैषा, चिरकालं विलोकिता। तयाऽपि तं चिरं वीक्ष्या-ऽपसरन्त्या विचिन्तितम् ॥३२॥ किं क्रीडासुन्दरोद्यान-सौन्दर्याद्भगवान् स्वयम्। क्रीडासुखस्याऽनुभवं, तनोति मकरध्वजः ॥३३॥ दूरादपसरन्तीं तां, प्राह चेटी प्रियंकरा। अपसर्तुमलं स्वामि-न्नयं सिंहः कुमारराट् ॥३४॥ सुतः पुरुषदत्तस्य, महीभर्तुर्महायशाः। श्रीकान्तायाः समुद्भूतो, गर्भे तव पितृष्वसुः ॥३५॥ तदयं त्वामदाक्षिण्यां, कलयिष्यति मानसे। स्थिरीभूय कुमारस्यो-पचारः क्रियतामतः ॥३६॥ सोचे सखि! त्वमेवात्र, कुशला कथ्यतां ततः। किं किमस्य करोमीति, ततः प्रोचे प्रियंकरा ॥३७॥ आसनं स्वागतप्रश्नो, वसन्तकुसुमैः सह। ताम्बूलं च स्वहस्तेन, दीयतामस्य साऽवदत् ॥३८॥ सकण्टकवपुः स्विन्न-कम्पमानकरद्वया। नास्य कालोचितं कर्तुमहं किंचिदपि क्षमा ॥३९॥ तत्त्वमेव हले! सर्वं, निर्वर्तय यथोचितम्। इत्युक्तया तयाऽऽसन्ने, कुमारेऽसज्जि विष्टरः ॥४०॥

ऊचे च स्वागतं रत्या, विहीनस्य मनोभुवः। प्रसादः क्रियतामत्राऽऽसने समुपविश्यताम् ॥४१॥ तुष्टो राजाङ्गजः स्मित्वा, रत्या हीनोऽभवं पुरा । नाऽधुनेति वदंस्तत्रो-पविष्टो विष्टरे वरे ॥४२॥ प्रियंकराऽथ वासन्ती-पुष्पमालासमन्वितम् । स्वर्णस्थालेन ताम्बूल-मार्पयत्तच्च सोऽग्रहीत् ॥४३॥ युक्तं तेन हृदि न्यस्ता, कुमारी कुसुमावली । तया तु च्छेकयाप्यत्र, न्यस्तः सिंहस्तदद्भुतम् ॥४४॥ अत्रान्तरे च कुसुमा-वलीमातुर्निदेशतः । सम्भरायणनामाऽगा-त्कन्यान्तःपुरकञ्चुकी ॥४५॥ अप्रेक्षमाणमर्धाक्षि-प्रेक्षितैर्नृपनन्दनम् । अनुरागेण पश्यन्तीं, सोऽपश्यत्कुसुमावलीम् ॥४६॥ अभ्यायच्च समं रत्या, मनोभूर्मिलितश्चिरात् । मानयिष्यति यद्येनं, विधिं निरुपधिर्विधिः ॥४७॥ ततः समीपमागत्य, कुमारमभिनन्द्य च । उवाच वत्से! त्वां देवी, मुक्तावल्यादिशत्यदः ॥४८॥ सुचिरं क्रीडया खेदो, मा भूत्तव शरीरके । वत्से! तच्छीघ्रमागच्छ, यदहं विरहासहा ॥४९॥ यदादिशति मेऽम्बेति, वदन्ती कुसुमावली । चिरं कुमारमालोकमानोद्यानाद्विनिर्ययौ ॥५०॥ गृहं गत्वा प्रणम्याऽम्बां, सदनस्योपरि स्थिते । निषीदति स्म पल्यङ्के, कुमारं हृदि बिभ्रती ॥५१॥ सर्वं विसर्जयामास, मा सन्मान्य सखीजनम् । ध्यानानीतकुमारेणैकान्तवार्ताचिकीरिव ॥५२॥ सा मुक्तदीर्घनिःश्वासा, विषमायुधबाधया । चित्ते तमेव पश्यन्ती, नापरं चित्रमातनोत् ॥५३॥ तत्प्रेमहृदनिर्मग्ना नाऽमज्जद्दीर्घिकादिषु । कुमारे सानुरागत्वान्नाङ्गरागे दधौ मनः ॥५४॥ न क्रीडयति चक्राङ्गान्न क्रीडति च कन्दुकैः । न च पाठयति प्रीतिकारिकाः शुकसारिकाः ॥५५॥ ताम्बूलं त्र्यूषणं देहभूषणं दूषणं परम् । मन्यते सा वियोगेन, दूना मलयजं मलम् ॥५६॥ अत्रान्तरे च तद्धात्र्या, समादिष्टा कृतादरम् । पुत्री मदनरेखाख्या, द्वितीयमिव तन्मनः ॥५७॥ यदद्योद्यानतः श्रान्ता, समेता कुसुमावली । सतालवृ-

स्सकर्पूरवीटका भज तन्मुहम् ॥५८॥ तत्क्षणं मातुरादेशाद्गतोपकुसुमावलि । सा चिन्तानिस्सहामेनां, शून्यचित्तां व्यलो-
कत ॥५९॥ सोचे स्वामिनि! केन, त्वमुद्विग्नेवासि हेतुना । पितरौ किं न तुष्टौ ते, किं न रक्तः सखीजनः ॥६०॥ मनः-
समीहितं किंचित्, किं न संपद्यतेऽथवा । ममास्ति यदि कथ्यं तत्, कथ्यतां भर्तृदारिके! ॥६१॥ स्वहस्तेनाऽलकांस्तस्याः,
संयम्य कुसुमावली । ऊचे सखि! तवाप्यस्ति, किमकथ्यं किमप्यलम् ॥६२॥ तदाकर्ण्य पुष्पावचयोत्पन्नपरिश्रमात् ।
ज्वरस्तज्जनितस्तापस्तन्निमित्ता ममाऽरतिः ॥६३॥ सख्यूचे तर्हि कर्पूरवीटकस्यादमातनु । खेदजस्वेदविच्छेदं, व्यजनेन
तनोमि ते ॥६४॥ ऊचेऽथ कुसुमावल्या वीटकव्यजनैरलम् । बालरम्भागृहे यामि, तापश्चेत्तत्र शाम्यति ॥६५॥ तत्र
गत्वा कृता शय्या, सज्जा मदनरेखया । कदलीनां दलैस्तस्यां, न्यषीदत्कुसुमावली ॥६६॥ सख्या समर्पयांचक्रे, तस्यै
कर्पूरवीटकम् । वीजिता व्यजनेनैषा, तापनिर्वापणेच्छया ॥६७॥ शून्यचित्ता पुनर्दृष्टा, पृष्टा सख्या त्वया कथम् ।
गच्छन्त्याऽऽगतयोद्याने, दृष्टं किमपि कौतुकम् ॥६८॥ सोचे सखि! मयोद्याने, रत्या विरहितः स्मरः । रोहिणीरहितश्चन्द्रः,
कामपाल इवानिरः ॥६९॥ स्वर्णवर्णो नखज्योतिरुद्द्योतिचरणाङ्गुलिः । सुनिगूढसिरासन्धिर्विशङ्कटकटीतटः ॥७०॥
कृशो मध्ये बृहद्वक्षा, उन्नतस्कन्धबन्धुरः । पद्मध्वजाङ्कुशच्छत्ररेखाङ्कितकरद्वयः ॥७१॥ अच्छिद्राङ्गुलिराताम्रकरजः
कम्बुकन्धरः । पक्वबिम्बाधरः शुद्धदन्तः कमललोचनः ॥७२॥ समकर्णः समुत्तुङ्गनासावंशोऽलिके पृथुः । सोष्णीषशीर्षः
सुस्निग्धश्यामकुञ्चितकुन्तलः ॥७३॥ श्रीचन्दनविलिप्ताङ्गो, दुकूलद्वयशोभितः । आमुक्तमुक्तालतिकश्चूडारत्नविभूषितः
॥७४॥ लावण्यस्याऽपि लावण्यं, रूपं रूपस्य पश्यताम् । सौन्दर्यस्याऽपि सौन्दर्यं, यौवनस्याऽपि यौवनम् ॥७५॥ श्रीमत्पु-

रुषदत्तस्य, महाराजस्य नन्दनः । दृष्टः सिंहकुमाराख्यः, श्रियेव मधुसूदनः ॥७६॥ [ अष्टभिः कुलकम् ] स्थानेऽनुरागः स्वामिन्या, अनुरूपो ह्ययं वरः । इयं तस्यैव योग्येति, ध्यात्वा धात्रीसुताऽवदत् ॥७७॥ यथाऽस्य सह देवेन, सुबुद्धिर्मन्त्रयञ्श्रुतः । देव्यादेशेन गतया, मया चेज्ञावि तत्तथा ॥७८॥ तत्संगतः स्मरो रत्या, रोहिण्या सहितः शशी । इरया कलितः कामपालो न्यूनं न किंचन ॥७९॥ [ युग्मम् ] कुसुमावल्युवाचाऽथ, किं श्रुतं सखि! साऽवदत् । उवाचाऽऽर्यसुबुद्धिर्यद्देव! राज्ञः सुतां तव ॥८०॥ कृते सिंहकुमारस्य, निर्वन्धो याचने महान् । वरश्च कुसुमावल्या, नापरस्तं विना वरः ॥८१॥ [ युग्मम् ] ऊचे ततः कृतालीकक्रोधा तां कुसुमावली । ब्रवीषि किमसंबद्धं, सा प्राह किमसंगतम् ॥ ८२ ॥ युज्यते कलहंसेन, कलहंसी हि संगतम् । सुबुद्धिं प्राह देवोऽथ, प्राणेभ्योऽपि प्रभुः प्रभुः ॥८३॥ इति यावद्वदन्त्यौ स्तस्तावदुद्यानपालिका । चेटी पल्लविका नाम, प्रोवाच कुसुमावलीम् ॥८४॥ त्वामाऽऽदिशति देवीदं, त्वं दन्तवलभीं व्रज । देवेनाऽस्ति यदाऽऽदिष्टं, भवनोद्यानसज्जनम् ॥८५॥ अत्र सिंहकुमारेण, महाराजस्य सूनुना । आगम्यमिति सा श्रुत्वा, देव्यादेशं व्यधात्तथा ॥८६॥ इतश्च भवनोद्याने, सज्जितेऽसौ निमन्त्रितः । एतश्च त्वरितस्तत्र, कुमारीदर्शनोत्सुकः ॥८७॥ प्रविष्टो भवनोद्याने, भोजनावसरात्परम् । मृद्वीकामण्डपस्तत्र, दृष्टस्तेन सुशीतलः ॥८८॥ तत्र कङ्केलिमाकन्दपूगनागलतादिकम् । सर्वं निरीक्ष्य वासन्तीलतामण्डपमाश्रयत् ॥८९॥ अत्रान्तरे च कुसुमावली मदनरेखया । ऊचे स्वामिनि! संवन्धः, स्वाजन्यादेव तिष्ठति ॥९०॥ संभाषपुष्पताम्बूलदानाद्यैस्तं प्रकाशय । किं च हंसोत्सुकां हंसीं

१ मृद्वीका० द्राक्षा ।

चित्रे लिख वियोगिनीम् ॥९१॥ उक्त्वेति वर्तिकावर्णपट्टिकाधमुपानयत् । सा विज्ञातसखीभावा, यथोक्तामलिखच्च ताम्
॥९२॥ निरीक्ष्य सुचिरं चित्रं, ततो मदनरेखया । श्लोकस्तदुपरिन्यस्तस्तदवस्थानिवेदकः ॥९३॥ "विसग्रासेऽप्यना-
शंसा सोत्कण्ठा प्रियदर्शने । पद्मखण्डमपश्यन्ती, वाढं ताम्यति हंसिका" ॥९४॥ आदाय प्राभृतं चित्रपट्टिकां च समा-
गता । राजपुत्र्याः सखीत्येषा, कुमारेणाऽभिनन्दिता ॥९५॥ तं नत्वा सादरं प्रोचे, राजपुत्राऽवधारय । त्वद्योग्यं कुसु-
मावल्या, प्रहितं प्राभृतं वरम् ॥९६॥ प्रियङ्गुमञ्जरी नव्या, कंक्कोलकफलानि च । कर्पूरवीटकान्युच्चैश्चित्रस्था राजहंसिका
॥९७॥ कुमारेण सकक्कोलं, ताम्बूलं स्वादितं कृता । प्रियङ्गुमञ्जरी कर्णे, वीक्षिता कलहंसिका ॥९८॥ शिरो धुनानः
सोऽवादीदहो चित्रस्य कौशलम् । तदवस्था द्विरूचे तु श्लोकेनेत्यथ साऽवदत् ॥९९॥ स्वामिन्या लिखिता वीक्ष्य, प्रियो-
त्कां कलहंसिकाम् । लिखितोऽयं मया श्लोकस्तदवस्थानिवेदकः ॥१००॥ कुमारः प्राह युक्तं हि, रूपे लिखितवीक्षिते ।
सखीनां हृदयालूनां, तत्स्वरूपप्रकाशनम् ॥१०१॥ अथैष पत्रच्छेद्येषु, निष्णातः पत्रकर्त्तरीम् । लात्वा नागलतापत्रे,
हंसं पत्रलमादधे ॥१०२॥ तं न्यस्य पट्टिकायां च, तस्यां हंसीपुरःस्थितम् । श्लोकत्रयं लिलेखैष, श्लोकयोग्यो मनीषिणाम्
॥ १०३ ॥ "प्राणेषु प्रोषितेषु स्यात्प्रियया नैव संगमः । अनेन हेतुना हंसो, न विमुञ्चति जीवितम् ॥१०४॥ चित्रानु-
रागिणी त्वं चाऽहं च चित्रानुरागवान् । प्रिये! पुनः पुनर्ज्ञाप्यं, तत्त्वया चित्रकौशलम् ॥१०५॥ इदं तु प्रकृतं मात्रा-
धिकं चित्रं विचार्यताम् । स्वयं हि निपुणाऽसि त्वं, निपुणस्ते सखीजनः" ॥१०६॥ लिखित्वेत्यर्पयित्वा च, तस्यै तां

१ विस० कमलतन्तु । २ कक्कोल० कक्कोलवृक्ष । ३ प्रवासगतेषु ।

चित्रपट्टिकाम् । कण्ठादुत्तार्य हारं चार्पयदिन्दुकरामलम् ॥ १०७॥ तं नत्वा साऽऽगताऽऽचख्यौ, सर्वं वृत्तान्तमुज्ज्वलम् । मुदिता सा पुनः श्लोकौ, लिखित्वा प्राहिणोदिमाम् ॥ १०८ ॥ ततो मदनरेखाऽस्मै, गत्वा श्लोकौ समर्पयत् । तावित्थं वाचयामास, मुदितो नृपनन्दनः ॥ १०९ ॥ "अरं चित्रं विचार्येदं, प्रागेव प्रहितं प्रिय! । अरं सूत्रस्य वृत्तिस्तु, तव श्लोकद्वयादभूत् ॥ ११० ॥ चित्रं चित्तस्थिते सूत्रे, वृत्तिर्मतिमता कृता । किं चित्रं पूरयन्त्येव, समस्यां चिन्तितां बुधाः" ॥ १११ ॥ प्रेयसीतः प्रसूतं स, श्लोकतोकद्वयं नवम् । सुधामधुरया वाचा, पुनः पुनरलालयत् ॥ ११२॥ ऊचे च पदशय्याऽसौ, कर्णपीयूषसारणिः । अर्थदृष्टिश्च गुप्ताऽपि, प्रकाशैव प्रकाशते ॥ ११३ ॥ ज्ञानविज्ञानसौरभ्यसुन्दरा कुसुमावली । उचिता हृदये धर्तुं, प्रथिता ग्रथिता गुणैः ॥ ११४॥ इत्थं प्रशस्य तां प्रीतः, प्रीतिदानपुरःसरम् । पुनर्विसर्जयामास, कुमारः प्रेयसीसखीम् ॥ ११५॥ इत्थं रथाङ्गभृङ्गादियुग्मालेखनतो मिथः । तयोः प्रीतिरवर्धिष्ट, तटिनीव पदे पदे ॥ ११६॥ अन्यदा च महाराजप्रार्थितेन महीभुजा । कुमाराय ददे लक्ष्मीकान्तेन कुसुमावली ॥ ११७॥ दत्ते नैमित्तिकेनाऽथ, पाणिग्रहणवासरे । सा बन्धुस्त्रीभिरासन्द्यां, प्राङ्मुखी विनिवेशिता ॥ ११८॥ नखकर्म विधाप्याऽथ, कौसुम्भवसनावृता । म्रक्षिता सधवस्त्रीभिः, स्नपिता कुङ्कुमाम्बुभिः ॥ ११९॥ ततश्च पूर्णचित्रेणाऽवमिताऽसौ समन्ततः । अक्षताः शिरसि न्यस्ता, गुरुभिः परितोषिभिः ॥ १२० ॥ तस्यां वदनवक्षोजकरेषु घुसृणद्रवः । रागेऽधिकेऽपि नीचत्वाद्यावकः पदयोरभूत् ॥ १२१ ॥ विन्यस्तं कज्जलं चक्षूरक्षणायेव चक्षुषोः । मधुश्रिय इवैतस्या, विहितस्तिलको मुखे ॥ १२२॥ हंसकौ पदयो-

१ तोक० पुत्र । २ यावकः-अलक्तः ।

ग्नौ, गतिस्वरजिताविव । तदङ्गुलीषु विन्यस्ता, ऊर्मिका मणिनिर्मिताः ॥१२३॥ नद्धं कौञ्चीपदे काञ्चीदाम वलभचित्तवत् । अङ्गदे भुजयोर्नद्धे, पाशौ इव मनोभुवः ॥१२४॥ कण्ठस्तननितम्बस्पृक्, पद्मरागमणीमयम् । दाम मर्कटबन्धेन, न्यस्तं चञ्चलचक्षुषः ॥१२५॥ मुक्ताहारोऽपि संजातकामराग इवाधिकम् । तत्कण्ठमवलम्ब्याऽहो, नीवीस्पर्शे समुद्यतः ॥१२६॥ न्यस्तं ग्रैवेयकं कण्ठे, कर्णयोः कर्णवेष्टके । शिरोदेशे शिरोरत्नं, तस्या गात्रे नवांशुकम् ॥१२७॥ मां हित्वा पूर्वमप्येषा, दृश्यतामेति मत्सरात् । सा रत्नच्छायया ऽऽच्छन्ना नूनमाभरणस्थया ॥१२८॥ तस्यां प्रसाध्यमानायां, कुमारे च प्रसाधिते । राज्ञे व्यज्ञपि दैवज्ञैर्लग्नवेला समीपगा ॥१२९॥ अथ तूर्यरवाहूतपौरपूरितदिग्मुखः । श्वेतहस्तिनमारूढः, सितच्छत्रेण शोभितः ॥१३०॥ प्रतिबिम्बैरिव स्वस्य, कुमारैः परितो वृतः । पौरीभिरीक्ष्यमाणोऽग्रे, मण्डपद्वारमागमत् ॥१३१॥ [ युग्मम् ] तत्र श्वश्रूजनाऽऽभाव्यमाचारेण स याचितः । दत्त्वा तदधिकं स्तम्बेरमादुत्तीर्णवानयम् ॥१३२॥ सौवर्णमुसलेनाऽथ, रत्नकाञ्ची द्युतिस्पृशा । श्वश्रूजनेन सानन्दं, भग्ना भृकुटिरस्य च ॥१३३॥ निरुध्य मण्डपे लोकं, नीतो मातृगृहं वरः । यत्राऽस्ति विशदस्वच्छक्षौमच्छन्नमुखी वधूः ॥१३४॥ वदनाच्छादनस्याऽपनयनाभाव्यमर्थितः । सखीभिः कार्यमेतद्धि, ममैवेति हसन्नयम् ॥१३५॥ तत्तदभ्यधिकं दत्त्वाऽपानाययदयं मुदा । तामपश्यच्च कङ्केलिपल्लवोत्तंससुन्दराम् ॥१३६॥ परिस्मेरमुखाम्भोजां, हर्षसाध्वसनिर्भराम् । वहन्तीं विभ्रमं किञ्चिन्मनोहरमनोहरम् ॥१३७॥ [ विशेषकम् ] अथ तस्याः करः कालविलम्बं सोढुमक्षमः । वरस्य मिलितो मन्ये, नखचन्द्रकरोत्करैः ॥१३८॥ सानुरागे

१ अङ्गुलिकाः । २ वदने । ३ कटिमेखला । ४ गजात् ।

पुरा चित्ते, पश्चात्तेन करे धृता । अन्तश्चतुरिकं नीता, चतुरा चतुरेण सा ॥ १३९ ॥ तारामैत्री पुराप्यस्ति, तयोर्विश्वस्त-चेतसोः । सा तारामेलके विश्वविदिता समपद्यत ॥ १४० ॥ तदातनस्य ताम्बूलवस्त्रमाल्यविभूषणैः । चक्रे जनस्य सर्वस्यो-पचारं दुहितु पिता ॥ १४१ ॥ अथो हुताशने सर्पिर्मधुलाजसमाहते । ज्वलति भ्रमितुं लग्नं, मङ्गलानि वधूवरम् ॥ १४२ ॥ आद्ये वधूपिता स्वर्णभारलक्षं ददौ मुदा । हारकुण्डलकेयूरभूषणानि द्वितीयके ॥ १४३ ॥ तृतीये मङ्गले रूप्यस्थालकच्चो-लकादिकम् । तुर्ये नानाप्रकाराणि, महार्घ्यवसनानि च ॥ १४४ ॥ मुदितं हास्तिकाश्वीयैर्हस्तमोचनपर्वणि । लक्ष्मीकान्त-नृपः पुत्रीकान्तमेकान्ततो व्यधात् ॥ १४५ ॥ वरस्याऽपि पिता सर्वं, यथोचितमुपाचरत् । ददौ वध्वै महामूल्यं, वसना-भरणादि च ॥ १४६ ॥ इति संपूर्णतां याते, दारकर्ममहोत्सवे । वर्षलक्षा ययुर्वह्व्यस्तयोर्विषयसेवया ॥ १४७ ॥ कुमारः कौतुकी वाहवाहनाय गतोऽन्यदा । उद्याने नागदेवस्य, प्रदेशे प्रासुके स्थितम् ॥ १४८ ॥ आवृतं साधुवर्गेण, साधुधर्म-मिवाङ्गिनम् । सूरिं श्रीधर्मघोषाऽऽख्यमद्राक्षीद् द्वादशाङ्गिनम् ॥ १४९ ॥ तत्र गत्वा च नत्वा च, तमपृच्छदतुच्छधीः । आददे भवता दीक्षा, कुतो निर्वेदतः प्रभो ! ॥ १५० ॥ गुरुः प्रोवाच संसारे, सर्वं निर्वेदकारणम् । विशेषादवधिज्ञानिच-रित्रं यन्मया श्रुतम् ॥ १५१ ॥ तथाहि विजयेऽत्रैव, पुरे राजपुरे सदा । स्वभावेन भवोद्विग्नचित्त एव वसाम्यहम् ॥ १५२ ॥ तत्र जातावधिज्ञानोऽमरगुप्तो गणेश्वरः । बहुसाधुपरीवार, उद्याने समवासरत् ॥ १५३ ॥ मत्वा तमागतं राजा, सपौरो-ऽप्यरिमर्दनः । आगत्य नत्वा तद्दत्तधर्मलाभ उपाविशत् ॥ १५४ ॥ अपृच्छच्च समुत्पन्नमवधिज्ञानमद्भुतम् । युष्माकं चरितं स्वं तन्ममाऽऽदिशत बोधितः ॥ १५५ ॥ ऊचे ज्ञानी महाराज ! शृणु ते यदि कौतुकम् । नगरं विजयेऽत्रैव, चम्पावासा-

भिधं पुरा ॥ १५६ ॥ आसीद्गृहपतिस्तत्र, सुखज्ञ इति नामतः । धनश्रीकुक्षिभूस्तस्य, सोमाऽहं तनयाऽभवम् ॥ १५७ ॥ तत्र सार्थेशनन्दस्य, नन्दनः परिणीतवान् । रुद्रदेवाभिधानो मां, भेजे च विषयानयम् ॥ १५८ ॥ अन्यदा बालचन्द्राभनिष्कलङ्कचरित्रभूः । गणिनी बालचन्द्राख्या, विहारेण समागमत् ॥ १५९ ॥ तामपश्यं पितुर्वेश्म, यान्ती श्वशुरमन्दिरात् । श्रद्धाशुद्धाशया भक्त्या, प्रणामं च समाहिता ॥ १६० ॥ धर्मलाभे तया दत्ते, पृष्टस्तस्याः प्रतिश्रयः । मध्याह्ने तत्र गत्वा तां, पर्युपासिषि सादरम् ॥ १६१ ॥ तया मे पूज्ययाऽऽख्यायि, कर्मदावदवानलः । निर्वाणसुखकल्पद्रुर्धर्मः सर्वज्ञभाषितः ॥ १६२ ॥ बोधिं लब्धवती कर्मक्षयोपशमतः पराम् । संसारचारकोद्विग्ना, संविग्नाऽस्मि निरन्तरम् ॥ १६३ ॥ रुद्रदेवस्तु दुष्कर्मा, दोषात्प्रद्वेषमावहन् । ऊचे धर्ममिमं मुञ्च, मूढे ! विषयविघ्नदम् ॥ १६४ ॥ विपाककटुना भोगसौख्येनाऽलं मयोदिते । स प्राह वञ्चिताऽसि त्वमदृष्टसुखवाञ्छया ॥ १६५ ॥ पशुक्रियाऽभिधा यस्य, तत्किं विषयजं सुखम् । मानुषा तु क्रिया ज्ञेया, धर्म एष दयामयः ॥ १६६ ॥ मयेत्युक्ते स विद्विष्टो, मां हित्वाऽन्यामयाचत । कन्यां नागश्रियं नागदेवसार्थेशनन्दनाम् ॥ १६७ ॥ नाऽदात्तां नागदेवस्तु, मत्तातबहुमानवान् । रौद्रोऽथ रुद्रदेवो मन्मृत्युपायमचिन्तयत् ॥ १६८ ॥ कुम्भे न्यस्याऽन्यदा नागं, तेनोक्ता माल्यमानय । हस्ते न्यस्ते च कुम्भान्तर्दष्टा दुष्टेन भोगिना ॥ १६९ ॥ तस्याख्यं स तु मायावी, व्यर्थं कोलाहलं व्यधात् । ततः प्रसर्पतः सर्पविषाज्जीवितमत्यजम् ॥ १७० ॥ सम्यक्त्वस्य प्रभावेण, पल्यायुस्त्रिदशोऽभवम । अहं लीलावतंसाख्ये, विमाने प्रथमद्यवि ॥ १७१ ॥ रुद्रदेवस्तु तां कन्यामुपयम्य तया समम् । भोगान्भुक्त्वा ततो मृत्वा, पल्यायुर्नारकोऽजनि ॥ १७२ ॥ अहं स्वर्गाच्च्युतोऽभूवं, सुंसुमारगिरौ गजः । उद्वृत्तो नरकादन्य-

स्तत्रैवाद्रौ शुकोऽभवत् ॥ १७३ ॥ दृष्टस्तेन खलेनाऽहं, खेलन्सार्धं करेणुभिः । हृदि द्वेषं दधानश्च, दध्यौ किं द्वेषकारणम् ॥ १७४ ॥ इति चिन्तयतस्तस्य, जातिस्मृतिरजायत । भोगेभ्योऽयं कथं वञ्च्य, इत्युपायमचिन्तयत् ॥ १७५ ॥ जामिं मृगाङ्कसेनस्य, चन्द्ररेखाभिधामथ । हृत्वा विद्याधरो लीलारतिनामा समागमत् ॥ १७६ ॥ स शुकं प्राह कुञ्जेऽहं, स्थास्याम्यत्राऽन्यखेचरः । आगन्ताऽस्य न कथ्योऽहं त्वया मदुपकारिणा ॥ १७७ ॥ इत्युक्त्वाऽद्रिनिकुञ्जान्तर्मैथुने तत्र तस्थुषि । नारङ्गस्थे शुके विद्याधर आगत्य यातवान् ॥ १७८ ॥ तदा मामागतं वीक्ष्य, तत्रोद्देशे वशान्वितम् । शुकोऽध्यायदियं वेला, स्वमनोरथपूरणे ॥ १७९ ॥ मायावी जायया सार्धं, मन्त्रयित्वैष मेऽन्तिके । आगत्योचे प्रियेऽश्रावि, वसिष्ठात्स्वगुरोर्मया ॥ १८० ॥ यदऽत्राऽस्ति महाशैले, पतनं सर्वकामदम् । यो यदिच्छति तत्तस्य, तत्कालमुपतिष्ठते ॥ १८१ ॥ वसिष्ठो भगवान्पृष्टो, मया स्थानं कृपापरः । अस्य शालतरोर्वामपार्श्वेनेति समादिशत् ॥ १८२ ॥ प्रिये! तदलमेतेन, पशुत्वेन भृगोरितः । कृत्वा विद्याधरत्वस्य, प्रणिधानं प्रपत्यते ॥ १८३ ॥ प्रिययाऽङ्गीकृते युग्मं, प्रणिधाय पपात तत् । आख्यच्च लीलारतये, सप्रियः खेन सोऽगमत् ॥ १८४ ॥ तद्वीक्ष्य मयकाऽध्यायि, प्रभावस्तीर्थजः कियान् । देवत्वप्रणिधानेन, तदितो निपताम्यहम् ॥ १८५ ॥ ध्यात्वेति पतितो मात्र–गात्रभङ्गनिपीडितः । शुकयुग्मं तदुड्डीनं, तदा नाहमलक्षयम् ॥ १८६ ॥ अकामनिर्जरायोगाद्, व्यन्तरत्वमुपागतः । अहं देशोनपल्यायुर्नारकत्वं शुकः स तु ॥ १८७ ॥ च्युत्वाऽहं विजयेऽन्यस्मिंश्चक्रवालाभिधे पुरे । अप्रतिहतचक्रस्य, सार्थवाहस्य नन्दनः ॥ १८८ ॥ जातः सुमङ्गलाकुक्षौ, चक्रदेवोऽभिधानतः । उद्धृत्य सोऽपि तत्रैव, नगरे शुकनारकः ॥ १८९ ॥ सोमशर्माभिधस्याऽभून्नराधिपपुरोधसः । उदरे नन्दिवर्धन्या, यज्ञदेवाख्यया

वृत्तान्तः कथितश्चण्डशासनस्य नरेशितुः। तैः सोऽपि मामुवाचोग्रशासनोऽपि हि सामवाक् ॥ २०८ ॥ सार्थवाहसुत ! ज्ञातलोकद्वयपथो भवान् । त्वय्यसंभाव्यमेतत्तत्परमार्थं निवेदय ॥ २०९ ॥ इत्युक्तोऽपि नृपेणाऽहं, मित्रस्नेहविमोहितः । मौनेन केवलं तस्थौ, वाष्पक्लिन्नविलोचनः ॥ २१० ॥ राज्ञाऽथ शङ्कितेनाऽपि, तातस्य बहुमानतः । विरूपकमकृत्वाऽहं, देशत्यागे निदेशितः ॥ २११ ॥ पुरदेवीवनासन्नं, मां राजपुरुषाः पुरात् । निर्वास्य तत्र मुक्त्वा च, निवृत्ता नगरं प्रति ॥ २१२ ॥ अचिन्तयमहं माने, प्रम्लाने जीवितेन किम् । उद्भ्रामि तदाऽऽत्मानं, वटे देवीवनान्तगे ॥ २१३ ॥ प्रवृत्तोऽहं वटं गन्तुं, तदा नगरदेवता । अवधेरुपयोगेन, मत्वा मयि कृपावती ॥ २१४ ॥ नृपस्याऽम्त्रामधिष्ठायाऽऽख्याय सर्वं यथातथम् । उवाच चक्रदेवं त्वं, गत्वा मृत्योर्निवारय ॥२१५॥ सन्मानपूर्वकं तं च, नगरान्तः प्रवेशय । नृपोऽथ यज्ञदेवस्य, बन्धायाऽऽदिष्टवान्भटान् ॥२१६॥ [ विशेषकम् ] आजगाम ममाऽभ्यर्णे, वायुवाजेन वाजिना । मामपश्यच्च निक्षेप्सुं, कण्ठे पाशं समुद्यतम् ॥२१७॥ उदस्तहस्तो मां राजा, मा साहसमिति ब्रुवन् । आगत्य पाशकं छित्त्वाऽऽरोहयामास वाहने ॥ २१८ ॥ ऊचे सबहुमानं च, तव सार्थेशनन्दन ! । युक्तं मयापि पृष्टस्य, सद्भावस्याऽनिवेदनम् ॥२१९॥ ममाऽग्रे हि प्रविश्याऽम्बां, देव्या सर्वं निवेदितम् । निर्दोषचक्रदेवोऽयं, यज्ञदेवस्तु दोषवान् ॥ २२० ॥ तत्क्षन्तव्यं त्वयाऽज्ञातपरमार्थेन यन्मया । निदेशितोऽसि देशस्य, त्यागे साधुधुरंधरः ॥ २२१ ॥ मयोक्तं नास्ति देवस्य, दोषो न्यायगवेषणे । मूलशुद्धिस्तु देवेन, विप्रस्याऽपि विधीयताम् ॥ २२२ ॥ राज्ञोचे तस्य देव्यैव, मूलशुद्धिर्निवेदिता । कृत्वा तेन स्वयं स्तेयं, त्वयि दोषोऽधिरोपितः ॥२२३॥ आनीतोऽत्रान्तरे बद्धः, स विप्रो नृपतेर्भटैः । नृपस्तदादिशज्जिह्वाछेदंलोचनकर्षणे ॥ २२४ ॥ विषण्णे यज्ञदेवेऽथ, पतित्वा पदयोर्मया । नृपो व्यज्ञपि

देवेन, मन्तुर्मे क्षम्यतामयम् ॥ २२५ ॥ नृपेणोक्तं न युक्तोऽयं, मोक्तुमन्यत्त्वमर्थय । मया प्रोचे न याचेऽन्यदयमेव विमुच्यताम् ॥ २२६ ॥ ततो मदीयनिर्बन्धाद्यज्ञदेवं नृपोऽमुचत् । संमान्य मां महर्द्ध्या च, प्राहिणोन्निजवेश्मनि ॥ २२७ ॥ जनप्रवादमाकर्ण्य, यज्ञदेवस्य दुःसहम् । अतीव भवनिर्वेदो, बभूव मम चेतसि ॥ २२८ ॥ अत्रान्तरे पुरोद्याने, क्षमाकान्तः समागमत् । दुष्कर्मकक्षदावाग्निरग्निभूतिर्गणेशिता ॥ २२९ ॥ बहिर्गतश्च तं वीक्ष्य, नत्वा च समुपाविशम् । तस्माद्धर्ममपृच्छं च, सर्वदुःखक्षयावहम् ॥ २३० ॥ क्षान्त्याद्ये दशधा धर्मे, प्रथिते कथिते सति । संजाततत्परीणामस्तत्पार्श्वे व्रतमात्तवान् ॥ २३१ ॥ प्रपाल्य विधिना तच्च, काले त्यक्त्वा शरीरकम् । ब्रह्मलोके सुरोऽभूवं, नवसागरजीवितः ॥ २३२ ॥ विप्रोऽपि शर्करापृथ्व्यां, द्विर्गत्वा श्वभवान्तरः । त्रित्रिवार्ध्यायुरत्राऽगादऽथ तिर्यक्षु नैकशः ॥ २३३ ॥ च्युत्वाऽहं तु विदेहेऽस्मिन्पुरे रत्नपुराभिधे । विजये गन्धिलावत्यामिलातलविभूषणे ॥ २३४ ॥ रत्नसाराभिधाख्यातसार्थवाहस्य नन्दनः । अभूवं श्रीमतीकुक्षौ, चन्द्रसारोऽभिधानतः ॥ २३५ ॥ [ युग्मम् ] यज्ञदेवोऽपि हि भ्रान्त्वा, गृहदास्यामजायत । दारको नर्मदाख्यायां, विहितानहकाभिधः ॥ २३६ ॥ मय्येष प्राग्भवाभ्यासाद्बन्धनापरिणामवान् । इभ्यकन्यां त्वहं चन्द्रकान्ताख्यां परिणीतवान् ॥ २३७ ॥ तत्राऽन्यदा समायाते, सूरौ विजयवर्धने । गृहीतस्तत्पदोर्मूले, श्राद्धधर्मो मयाऽनघः ॥ २३८ ॥ अन्यदा तत्पुरं दीर्घदण्डयात्रागते नृपे । गतेष्वस्मासु च ग्रामे, नामतो विन्ध्यकेतुना ॥ २३९ ॥ पल्लीशेन समागत्य, हतविप्रहतं कृतम् । कियानपि धृतो वन्दे, जनोऽस्माभिश्च तच्छ्रुतम् ॥ २४० ॥ [ युग्मम् ] आगतैस्तत्पुरं दृष्टं, श्मशानागारसोदरम् । मानुषैः शोधितैर्ज्ञातं, भिल्लैर्भार्या हृता मम ॥ २४१ ॥ अथाऽरतिमताऽध्यायि, मया सेयं वराकिका । मद्वियोगे कथंकारं,

प्राणानपि धरिष्यति ॥ २४२ ॥ तदाहं देवशर्माख्यवृद्धविप्रेण भाषितः । सार्थवाहसुत! स्वान्ते, त्वं खेदं मा विधा मुधा ॥ २४३ ॥ देशेऽत्रैव पुरा भिल्लैः, श्रीस्थलग्रामतो हृतः । जनोऽखण्डितचारित्रो, मुक्तश्चार्थेन भूयसा ॥ २४४ ॥ ततोऽहमिदमाकर्ण्य, गतैः कतिपयैर्दिनैः । गते स्वपल्लीं पल्लीशेऽनहकेनाऽनुजीविना ॥ २४५ ॥ सार्धं शम्बलमादाय, सारद्रव्यं च पुष्कलम् । चन्द्रकान्ताविमोक्षाय, चलितोऽस्मि तदुत्सुकः ॥ २४६ ॥ [ युग्मम् ] द्रव्यं च शम्बलं चापि, क्रमेण वहतोरभूत् । वञ्चनायाः परीणामोऽनहकस्य ममोपरि ॥ २४७ ॥ अन्यदा तस्य हस्तेऽस्ति, द्रव्यं मम तु शम्बलम् । सन्ध्याकालश्च कूपश्चासन्न एकोऽस्ति वर्त्मनः ॥ २४८ ॥ तत्र स्थितोऽहं तेनैत्य, कूपान्तः प्रेर्य पातितः । लग्नेन प्रतिकूपैकदेशे स्पृष्टं च मानुषम् ॥ २४९ ॥ नमोऽर्हद्भ्य इति प्रोक्ते तेन शब्दोपलक्षणात् । मत्कान्ता चन्द्रकान्ताऽसावित्यज्ञायि मया मुदा ॥ २५० ॥ उक्ता च न भयं जैनशासनस्थे जने भवेत् । मच्छब्दं प्रत्यभिज्ञाय, प्रवृत्ता रोदितुं च सा ॥ २५१ ॥ आश्वासिता मया पृष्टा, वृत्तान्तमिति साऽवदत् । शीलभङ्गभयादत्राऽऽर्यपुत्र! पतितास्म्यहम् ॥ २५२ ॥ तत्पृष्टेन स्ववृत्तान्ते, ख्यातेऽनहकनिर्मिते । सावोचद्दुष्टु दासेरश्चक्रे सुष्ठु मयोदितम् ॥ २५३ ॥ उपकारी महात्माऽसौ, येन त्वं मम योजितः । अल्पनिद्रतया रात्रिरतीता भानुरुद्गतः ॥ २५४ ॥ मयाऽथ दत्ते पाथेये, सतीपथपथिक्यसौ । बहूनामुपवासानामपि पारणकेऽवदत् ॥ २५५ ॥ युष्माभिरगृहीतेऽहं, कथं गृह्णाम्यतो मया । अकालेऽपि तदा भुक्तं, कान्तया तदनन्तरम् ॥ २५६ ॥ कूपाद्भवादिवागाधादुत्तारोऽस्मात्कथं भवेत् । इति-चिन्तयतोः क्षीणं, पाथेयं कतिभिर्दिनैः ॥ २५७ ॥ नष्टायां जीविताशायामिति चिन्ता ममाऽजनि । प्राप्तेऽप्यर्हन्मते किं? नु, मरिष्याम्यकृतव्रतः ॥ २५८ ॥ इत्थं चिन्तयतश्चक्षुर्दक्षिणं स्फुरितं

मम । तस्याश्च वामं साऽऽचख्यौ, ममाऽहं च स्वचिन्तितम् ॥ २५९ ॥ प्रियेऽनेन निमित्तेन, क्लेशोऽयं न चिरस्थिरः । इत्थं यावदहोरात्रमतीतमिदमावयोः ॥ २६० ॥ तावज्जिगमिषुः सार्थः, पुरं रत्नपुरं प्रति । नन्दिवर्धनसंज्ञस्य, सार्थेशस्य समागमत् ॥ २६१ ॥ उदकाय समायातैर्भृत्यैर्ज्ञातौ निवेदितौ । सार्थेशायाऽथ तेनैत्योत्तारितौ मञ्जिकास्थितौ[1] ॥ २६२ ॥ प्रत्यभिज्ञाय पृष्टेन, मयाऽऽख्याते सविस्तरे । मेने सार्थपतिः सत्यं, संयोगं युगशम्ययोः ॥ २६३ ॥ ममाऽथ वहतः सार्थे, व्यतीते दिनपञ्चके । कङ्कालमेकं[2] पञ्चास्यहतस्याऽजनि दृक्पथे ॥ २६४ ॥ तद्वीक्ष्य वामपक्षेण[3], स्रस्तं द्रविणवासनम् । पर्यज्ञायि मया पाप्माऽनहको हरिणा हतः ॥ २६५ ॥ अहं तद्द्रव्यमादाय, दृढं संवेगवान्हृदि । गतो रत्नपुरं सप्तक्षेत्र्यां द्रविणमुसवान् ॥ २६६ ॥ तस्मिन्नेव गुरौ रत्नपुरं विजयवर्धने । आगते जगृहे दीक्षा, निःस्पृहेण गृहे मया ॥ २६७ ॥ मृत्वा षोडशवार्ध्यायुर्महाशुक्रे सुरोऽभवम् । तृतीयनरके सप्तवार्ध्यायुरनहः पुनः ॥ २६८ ॥ दिवश्च्युत्वाहमत्रैव, जम्बूद्वीपस्य भारते । रथवीरपुरे नन्दिवर्धनाख्यगृहेशितुः ॥ २६९ ॥ भार्यायां सुन्दरीनाम्न्यां, तनयत्वेन जातवान् । अनङ्गदेव इत्याख्यां, पितृभ्यां मम निर्ममे ॥ २७० ॥ [ युग्मम् ] इतरः प्राप्य सिंहत्वं, गत्वा तत्रैव दुर्गतौ । उद्वृत्य नानातिर्यक्षु, भ्रान्त्वा तत्रैव पत्तने ॥ २७१ ॥ सोमसार्थेशितुर्नन्दिमत्यां तनयतां गतः । धनदेवाभिधस्तेन, मैत्री प्रागिव मेऽजनि ॥२७२॥ [ युग्मम् ] कुमारस्यापि मे धर्मो, देवसेनगुरोरभूत् । प्राप्तौ द्वावपि तारुण्यं, विषयद्रुमकाननम् ॥ २७३ ॥ द्वाभ्यामप्यभिमानिभ्यामन्यदा हृदि चिन्तितम् । पितृद्रव्यपरीभोगस्तारुण्येऽपत्रपावहः ॥ २७४ ॥ ध्यात्वेत्यावां गतौ रत्नद्वीपे रत्नानि

---

१ युगकीलकयो. । २ अस्थिपञ्जरम् । ३ वामपार्श्वेन ।

लक्षशः । उपार्ज्य देशमागन्तुं, चलितौ मिलितौ निजम् ॥ २७५ ॥ अन्यदा प्राच्यदुष्कर्मदोषान्मद्धवनामनाः । स्वस्तिमत्यां
पुरि स्थूलं भोज्यार्थं मोदकद्वयम् ॥ २७६ ॥ कारयित्वा तयोर्मध्यादेकस्मिन्विषमक्षिपत् । धनदेवो विपर्यस्तमतिराऽऽदच्च तं
स्वयम् ॥ २७७ ॥ [ युग्मम् ] तद्दत्तमितरं भुक्त्वोत्थितोऽहं मूर्च्छितं तकम् । वीक्ष्य किंकृत्यमूढोऽस्थां विषादुपरतः स तु
॥ २७८ ॥ अहमज्ञाततद्वृत्तः, शोकशङ्कुसमाकुलः । आगत्य पुरमेतस्य, मानुषाणामथाग्रतः ॥ २७९ ॥ आख्यायाऽऽले-
ख्यशेषत्वं, वितीर्य निखिलं धनम् । तदीयं च निजं चापि, तानि संत्रोध्य सादरम् ॥ २८० ॥ ततः प्रभृति संत्यक्तभोगः
श्रीदेवसेनतः । परिव्रज्यामुपादाय, पालयामि स्म शुद्धधीः ॥ २८१ ॥ [ विशेषकम् ] काले कालं विधायाऽथ, कल्पे प्राण-
तनामनि । त्रिदशोऽभूवमेकोनविंशत्यम्बुधिजीवितः ॥ २८२ ॥ इतरस्तुर्यपृथ्वीत, उद्वृत्योरगतां गतः । दवदग्धः पुनस्त-
त्रोत्पद्य तिर्यक्षु चाभ्रमत् ॥ २८३ ॥ अहं च्युत्वाऽऽदिमद्वीपैरवते हस्तिनापुरे । इभ्यलक्ष्मीवतीजानिहरिनन्दिसुतोऽभवम्
॥ २८४ ॥ वीरदेवाभिधः सोऽपि, तत्रैव श्रेष्ठिनः पुनः । इन्द्रनागस्येन्द्रमत्यां, बभूव द्रोणकाभिधः ॥ २८५ ॥ उभावपि
समं वृद्धौ, कलाचार्यस्य चार्पितौ । जज्ञे नौ प्राक्तनी मैत्री, मयाऽधीतकलेन तु ॥ २८६ ॥ मानभङ्गाभिधाद्धर्मो, गुरोर-
ग्राहि भावतः । द्रव्यतो द्रोणकेनापि, ततो धर्मानुरागतः ॥ २८७ ॥ स्थिरप्रीतिरहं तस्मै, बहु द्रव्यं समार्पयम् । व्यवसा-
यवता तेन, भूरि भूरि[3] समर्जितम् ॥ २८८ ॥ [ विशेषकम् ] अथ प्राक्कर्मदोषेण, मयि चिन्तितवञ्चनः । विदधे मद्वधोपा-
यमपवादविवर्जितम् ॥ २८९ ॥ आवासे कारितेऽत्युच्चैरनियन्त्रितकीलकम् । गवाक्षं कारयित्वा मां, भोजनाय न्यमन्त्रयत्

---

१ मृतः । २ मृतत्व । ३ स्वर्णं ।

॥ २९० ॥ भुक्तानन्तरमारूढावूर्ध्वभूमावुभावपि । स वातायनमारोहन्मतिस्मृतिपरिच्युतः ॥ २९१ ॥ पतितं तं महीपृष्ठे, तत्कालं पञ्चतां गतम् । वीक्ष्याऽहं भवनिर्विण्णः, कृत्वा तस्योर्ध्वदेहिकम् ॥ २९२ ॥ मानभङ्गगुरोरात्तव्रतोऽभूवं तृतीयके । ग्रैवेयके सुरः पञ्चविंशत्युदधिजीवितः ॥ २९३ ॥ [ युग्मम् ] द्रोणकोऽपि हि रौद्रेण, ध्यानेन कलिताशयः । धूमप्रभायाम-भवद्, द्वादशाम्भोधिजीवितः ॥ २९४ ॥ ततश्च्युतोऽहमत्रैव, चम्पावासाभिधे पुरे । श्रेष्ठिनो माणिभद्रस्य, धारिण्यां नन्दनोऽभवम् ॥ २९५ ॥ पूर्णभद्राभिधानोऽहं, जल्पनावसरे पुनः । प्रागुक्तामरशब्देनाऽमरगुप्तोऽस्मि विश्रुतः ॥ २९६ ॥ बाल्यादपि च मे श्राद्धकुलोत्पन्नतया मनः । बद्धानुरागं संजज्ञे, धर्मे सर्वज्ञदेशिते ॥ २९७ ॥ द्रोणकोऽपि महामत्स्यः, स्वयम्भूरमणाम्बुधौ । भूत्वा धूमप्रभां गत्वा, भ्रान्त्वा च पशुजन्मसु ॥ २९८ ॥ तत्रैव नगरे नन्दावर्तश्रीनन्दयोः सुता । नन्दयन्त्यभिधानेन, बभूवोद्यौवना क्रमात् ॥ २९९ ॥ [ युग्मम् ] उपयेमे पितुर्वाचा, पितृदत्ता च सा मया । जज्ञे द्विपाक्षिकस्नेहः, सुन्दरश्चाप[1]पिच्छवत् ॥ ३०० ॥ नन्दयन्त्या तया सार्धं, नन्दयन्त्या मनो मम । ययुर्विषयसेवाभिर्वासराः सुखभासुराः ॥ ३०१ ॥ प्रदत्ते दक्षिणे पाणौ, पाणिग्रहमहोत्सवे । प्राणा अपि यदायत्तास्तस्याः किं परतः परम् ॥ ३०२ ॥ तथापि पूर्वकर्मानुभावेन मयि वञ्चनाम् । धत्ते परिजनो वक्ति, न तु प्रत्येमि कस्यचित् ॥ ३०३ ॥ अन्यदा तु स्वयं हृत्वा, सा कुण्डलयुगं गतम् । सर्वसारं ममाचख्यौ, बाष्पाविलविलोचना ॥ ३०४ ॥ मयोक्तं तप्यसे सुभ्रु !, कुतस्त्वं कुण्डलद्वयम् । कारयिष्येऽपरं प्रोच्य, तन्मनोज्ञमकारयम् ॥ ३०५ ॥ अन्यदाभ्यङ्गवेलायां, मुद्रारत्नं मयार्पितम् । असौ संगोपयामास, निजाऽऽ[2]कल्पकरण्डके ॥ ३०६ ॥

१ चाप० पक्षिविशेष । २ आकल्प० भूषण ।

स्नात्वा भुक्त्वा समादाय, ताम्बूलं सविलेपनम् । निःशङ्केन मयाऽग्राहि, मुद्रारत्नं करण्डकात् ॥ ३०७॥ अद्राक्षं तत्र तत्पूर्वप्रनष्टं कुण्डलद्वयम् । अचिन्तयं कथं लब्धमनया पुनरप्यदः ॥ ३०८॥ तदा ससाध्वसाऽऽयाता, मुद्रारत्नं करे मम । निरीक्ष्य लज्जिता भावं, ज्ञात्वाऽहं निर्गतो गृहात् ॥ ३०९॥ सा दध्यौ ज्ञातमेतेन, द्विधाप्येष गतो मम । यावज्जनो न जानाति, तावद् व्यापादयाम्यमुम् ॥ ३१०॥ ध्यात्वेति मद्वधायैषा, विधायौपधमीलनम् । स्थापयन्त्येकदेशे तद्दष्टा दुष्टेन भोगिना ॥ ३११॥ सा हि दष्टा ममाऽऽख्याता, रुद्रदेवपुरोधसा । त्वरितोऽहं समागत्य, मान्त्रिकादीनुपानयम् ॥ ३१२॥ कालदष्टेति तैरुक्ते, मय्याक्रन्दपरायणे । विपन्ना सा मया तस्या, विदधेऽथौर्ध्वदेहिकम् ॥ ३१३॥ तन्निर्वेदादहं ध्यायन्संसारासारतां हृदि । व्रतमादामियं पष्ठयां, पृथ्व्यां त्वजनि कर्मतः ॥ ३१४॥ मुक्तिं पृष्टो नरेन्द्रेणाऽमरगुप्तो न्यवेदयत् । अनन्तैर्जन्मभिस्तस्याः, स्वस्य तत्रैव जन्मनि ॥ ३१५॥ श्रुत्वेत्यहं सपौरोऽपि तस्मादेवाऽभवं व्रती । अयं विशेषहेतुर्मे, निर्वेदे नृपनन्दन ! ॥ ३१६॥ ऊचे सिंहकुमारेण, युक्तं निर्वेदकारणम् । आख्याहि भगवन्किं नु भवः कतिगतिः स्मृतः ॥ ३१७॥ कानि कानि च दुःखानि, तत्र गात्रे मनस्यपि । कश्च मोक्षयितुं शक्तो, धर्मः संसारचारकात् ॥ ३१८॥ धर्मघोषः प्रभुः प्राह, शृणु वत्स ! समाहितः । श्वभ्रतिर्यग्नृदेवत्वैर्भव एष चतुर्गतिः ॥ ३१९॥ दुःखं जन्म जरा मृत्यू रागद्वेषवशात्मनाम् । किमेकं कथ्यते तथ्यं, शृण्वत्रार्थे कथानकम् ॥ ३२०॥ तथाहि पुरुषः कोऽपि दुःखदारिद्र्यतापितः । निजं देशं परित्यज्याऽन्यदेशं गन्तुमुद्यतः ॥ ३२१॥ स च मार्गपरिभ्रष्टः, स्पष्टश्वापदसंकुलाम् । ज्वलद्दवानलज्वालाजालतापितलोचनाम् ॥ ३२२॥ वहद्गिरिनदीभीमां विषमां गिरिगह्वरैः । अटन् महाटवीं प्राप, सभां प्रेतपतेरिव ॥ ३२३॥ [युग्मम्] तत्र वित्रस्तनेत्रेण,

दुष्टश्वापददर्शनात् । क्षुधातृषाभिभूतेन, स्खलनं च पदे पदे ॥३२४॥ दृष्टः प्रलयकालोत्थाम्बुदवृन्दसहोदरः ऊर्जितं गर्जितं कुर्वन्दुष्टस्तेन वनद्विपः ॥ ३२५ ॥ [युग्मम्] पृष्ठतस्तस्य चात्युग्रकरवालकरामसौ । ददर्श राक्षसीमेकां, भीषणेभ्योऽपि भीषणाम् ॥ ३२६ ॥ तं च तां च निरीक्ष्यैष, कम्पमानशरीरकः । वटमुच्छ्रितमालोक्य, तत्रारोढुमपारयन् ॥३२७॥ आगच्छन्तमिभं वीक्ष्य, न्यग्रोधव्यधहेतवे । जीर्णकूपं तृणच्छन्नं, कांदिशीको व्यलोकत ॥ ३२८ ॥ [युग्मम्] अशरण्यमरण्यस्थमुच्चं मुक्त्वा महावटम् । अशिश्रियदयं निम्नममुमूर्षुर्महाऽवटम् ॥ ३२९ ॥ पतंस्तद्भित्तिसंभूतशरस्तम्बे व्यलम्बत । अपश्यदस्य कूपस्य चतुष्कोणस्य भूतलम् ॥ ३३० ॥ स्वपातप्रतिघातेन, कुपितान् दंष्टुमुद्यतान् । अद्राक्षीत्सर्वकोणेषु, सर्पांश्चतुर आतुरः ॥ ३३१ ॥ निरीक्ष्याऽजगरं मध्ये, मध्येकूपं च पञ्चमम् । जीवितेच्छुर्निरालम्बः, शरस्तम्बमलोकत ॥ ३३२ ॥ तस्य मूलानि भिन्दानं, शुद्धकृष्णोन्दुरद्वयम् । वीक्ष्य यावच्छरस्तम्बं, स्वायुर्निरचिनोदयम् ॥ ३३३ ॥ मातङ्गेन तदप्राप्तिक्रुद्धेनाऽथ रदाऽऽहतात् । पपात जीर्णकूपान्तर्न्यग्रोधान्मधुजालकम् ॥ ३३४ ॥ स्वस्वे निपतिते तस्मिन् भृंग्यः कलकलाकुलाः । जज्ञिरेऽस्यानुयायिन्यो, विहितव्याहरा इव ॥ ३३५ ॥ लम्बमानं शरस्तम्बे, स्तम्बेरममधृष्णवः । तमेव तुतुदुः शातैर्वदनैर्विशिखैरिव ॥ ३३६ ॥ तदा चास्य शिरोभालभ्रूमध्यघ्राणतः क्रमात् । मधुबिन्दुः पपाताऽऽस्ये, तं स स्वादितुमिष्टवान् ॥ ३३७ ॥ करिरक्षोवधूसर्पाजगरोन्दुरभृङ्गिकाः । अविचिन्त्य तदाऽऽस्वादे वैधेयो[1] विदधे मुदम् ॥ ३३८ ॥ कथेयं कथिता भव्यमोहद्रोहविधायिनी । अस्या उपनयं सावधानाः शृणुत सज्जनाः ! ॥ ३३९ ॥ पुमाञ्जन्तुरटव्येषा, चतुर्गतिगतिः स्मृता । मत्तः स्तम्बेरमो मृत्युर्ज्ञेया

---

१ धावमान. । २ मूर्खः ।

रक्षोवधूर्जरा ॥ ३४० ॥ न्यग्रोधो विषयग्रस्तनूणां मोक्षो दुरासदः । तत्रारूढवतां मृत्युजरादि न भयं भवेत् ॥ ३४१ ॥ जीर्णकूपो मनुष्यत्वं, सर्पाः क्रोधादयो मताः । यैर्दष्टो मनुजः कृत्याकृत्येषु स्यादचेतनः ॥ ३४२ ॥ घोरस्त्वजगरो ज्ञेयो, नरकः प्रसरन्मुखः । शरस्तम्बो मनुष्यायुराखू पक्षौ सितासितौ ॥ ३४३ ॥ भ्रमर्यस्तु रुजो ज्ञेया, विषया मधुविन्दवः । यदास्वादेन पाश्चात्यं, विस्मरत्यखिलं जनः ॥ ३४४ ॥ तदहो दारुणे भोगविपाके जीविते चले । निःसारे यौवने धर्मः, कर्तुं युक्तो मनीषिणः ॥ ३४५ ॥ ततः सिंहकुमारेणाऽप्रच्छि धर्मः स कीदृशः । गुरुणाऽऽख्यायि तुष्टेन, क्षान्त्यादिर्दशधाऽपि सः ॥ ३४६ ॥ क्षमा क्रोधजयो ज्ञेया, मार्दवं मानमर्दनम् । आर्जवं कैतवत्यागो, मुक्तिर्निर्लोभता मता ॥ ३४७ ॥ तपो द्वादशधा सप्तदशभेदस्तु संयमः । निरवद्यं वचः सत्यं, शौचमिन्द्रियनिग्रहः ॥ ३४८ ॥ आकिञ्चन्यं नवविधपरिग्रहविमोचनम् । अष्टादशविधाब्रह्मवर्जनं ब्रह्म संमतम् ॥ ३४९ ॥ एतन्निशम्य सिंहेन, यतिधर्मः सुसुन्दरः । परं कर्तुमशक्तोऽहमित्युक्ते गुरुरुक्तवान् ॥ ३५० ॥ सम्यक्त्वमूलं सुश्राद्धधर्मं तर्हि प्रपालय । इत्युक्तस्तं स जग्राह, भावतो द्रव्यतोऽपि च ॥ ३५१ ॥ कृतार्थं मन्यमानः स्वं, पर्युपास्य क्षणं गुरून् । वन्दित्वा विनयेनैतान्प्राविक्षन्नगरान्तरे ॥ ३५२ ॥ आख्यच्च कुसुमावल्यै, सापि धर्मं तमग्रहीत् । गुरुशुश्रूषया धर्मे, भावितौ तौ बभूवतुः ॥ ३५३ ॥ नृपः पुरुपदत्तस्तु, गुरोरमिततेजसः । धर्मं श्रुत्वा ससंवेगः श्रीकान्ताकान्तयाऽन्वितः ॥ ३५४ ॥ नियोज्य तनयं सिंहकुमारं राज्यसंपदि । आददे शमसाम्राज्यं, मन्त्रिसामन्तसंयुतः ॥ ३५५ ॥ [युग्मम्] असमं कुसुमावल्या समं वैषयिकं सुखम् । भुञ्जतः सिंहभूपस्याऽतीतः कालः कियानपि ॥ ३५६ ॥ अन्येद्युर्विद्युतां मध्यात्तापसस्याग्निशर्मणः । जीवश्च्युत्वा भवं भ्रान्त्वा, देव्याः कुक्षाववातरत् ॥ ३५७ ॥ स्वप्नेऽपश्यच्च सा

सर्पं, प्रविष्टमुदरे स च । निर्गत्य दष्ट्वा राजानं, पातयामास विष्टरात् ॥ २५८ ॥ तं वीक्ष्य सहसा बुद्धा, सातङ्का कुसुमावली । अमङ्गलमयं तं च, नाचख्यौ मेदिनीभुजे ॥ २५९ ॥ प्रवर्धमानगर्भाऽभूत्तद्दोषाद् द्वेषिणी नृपे । ऊचे परिजनेनाऽथ देवि ! चारु करोषि न ॥२६०॥ तयोक्तं किं ? तु तेनोचे, न देवं बहु मन्यसे । सा प्रोचे गर्भदोषोऽयं स्यादीदृक्कथमन्यथा ॥२६१॥ तस्या जज्ञेऽन्यदा पत्युरन्त्रभक्षणदोहदः । अध्यायदऽथ गर्भेणाऽप्यलमेतेन पाप्मना ॥ २६२ ॥ तदेनं पातयामीति, सखीनां सा न्यवेदयत् । तासां बहुमतं जज्ञे, तच्च कार्यगुरुत्वतः ॥ २६३ ॥ बहूनि पातनायाऽस्य, भेषजानि चकार सा । न निकाचितकर्मत्वात्पपात स तु पातकी ॥ २६४ ॥ तेन भेषजपानेन, दोहदाऽपूरणेन च । भृशं कृशं दधाना सा, देहमप्रच्छि भूभुजा ॥ २६५ ॥ किं न संपद्यतेऽभीष्टं, केनाज्ञा तव खण्डिता । किं मया विप्रियं चक्रे, यदेवं देवि ! खिद्यसे ॥ २६६ ॥ द्वितीयं हृदयं मत्वा. महास्नेहं महीपतिम् । देव्याऽऽह जाने सद्योऽहं, विपद्ये यदि तद्वरम् ॥ २६७ ॥ कुतो हेतोरिति प्रोक्ते नृपेणाह नृपप्रिया । पृच्छ मद्भागधेयानीत्युक्त्वाऽजनि सगद्गदा ॥ २६८ ॥ तन्निर्वेदं दृढं मत्वा, नृपस्तद्दुःखदुःखितः । अथो मदनरेखाद्यं, सखीजनमवोचत ॥ २६९ ॥ कथं शुष्यत्यसौ राज्ञि, सकले मयि सत्यपि । दके कैरविणी स्तोक, इवाब्धिकरकैरवा ॥ २७० ॥ युक्तं किमेतद्युष्माकं, परिज्ञाते निबन्धने । कृष्णपक्षेन्दुलेखावत्क्षिय्यमानामुपेक्षितुम् ॥ २७१ ॥ निर्वेदोऽयं न चासाध्यवस्तुन्यस्तीति मे मतिः । तत्किं ? तत्किंचिदप्यास्ति, यन्न स्यान्मयि जीवति ॥ २७२ ॥ ऊचे मदनरेखाऽथ, नाथ ! वच्मि यथातथम् । परं नारीस्वभावेनाऽविवेकोऽत्रापराध्यति ॥ २७३ ॥ किं च कार्यमनार्यं तात्किंचिदुत्पद्यते क्वचित् । अस्थानव्रणवद्यस्याऽशक्ये गोपनदर्शने ॥ २७४ ॥ तदिदं शक्यते नैव, देवस्याग्रे निवेदितुम् । उपायस्त्वपरः कश्चिन्नास्ति तेन

निवेद्यते ॥ ३७५ ॥ राज्ञोक्तं युक्तमेवेदं, यन्नैव स्यादुपायतः । ममाग्रे कथ्यते तद्धि, भवती कथयत्वतः ॥ ३७६ ॥ ततस्तया सभीत्येव, गर्भसंभवसंगतः । वृत्तान्तो दोहदद्वेषात्पातनान्तो निवेदितः ॥ ३७७ ॥ अहो मय्यसमस्नेहात्एुत्रीयत्यपि न प्रिया । मा भूद्गर्भविपत्तिस्तदसंपूर्णेऽत्र दोहदे ॥ ३७८ ॥ ध्यात्वेति यदहं वच्मि, तत्कार्यं कालसंगतम् । उक्त्वेति नृपतिर्देवीं, व्यसृजत्ससखीजनाम् ॥ ३७९ ॥ अथ कार्यविदाऽऽकार्य, मतिसागरमन्त्रिणम् । नृपस्तत्सर्वमाचख्यौ, स ध्यात्वा तं व्यजिज्ञपत् ॥ ३८० ॥ यद्देव ! क्षुधिते देवे, कृत्रिमाऽऽन्त्राणि कुक्षितः । कर्तं कर्तं वितीर्यन्ते, देव्या एव दृशोः पुरः ॥ ३८१ ॥ राज्ञा बहुमते तस्मिन्नर्थे राज्ञीमुवाच सः । कर्तिष्यामि तथाऽऽन्त्राणि, यथा देवो न दूयते ॥ ३८२ ॥ गर्भक्रूरस्वभावत्वादनयाऽङ्गीकृते सति । नृपकुक्षौ शशान्त्राणि कृत्वा वस्त्रावृतान्ययम् ॥ ३८३ ॥ उत्कृत्य तस्याः पश्यन्त्या, दत्तवान्मुद्रिता च सा । पश्चात्पुनर्विषण्णाऽभूदाऽऽश्वस्ता नृपदर्शनात् ॥ ३८४ ॥ [ युग्मम् ] ऊचे च मन्त्रिणा देवि ! देव्या पूर्वं प्रसूतया । गर्भजन्म न देवस्य, कथनीयं तु मेऽग्रतः ॥ ३८५ ॥ प्रतिशुश्राव तद्देवी, प्राप्ते प्रसववासरे । प्रसूतया तया मन्त्री, समाहूतागतोऽवदत् ॥ ३८६ ॥ लक्ष्यते लक्ष्मभिर्गर्भोऽयमक्षेमः क्षमापतेः । अन्यत्र वर्धतां तस्मान्मृतो देवस्य कथ्यते ॥ ३८७ ॥ भवत्वेवमिति प्रोच्य, तं माधव्याख्यचेटिका । समर्प्य प्रेषिता राज्या, दृष्टा सिंहमहीभुजा ॥ ३८८ ॥ किमेतदिति पृष्टा च, चेटी प्रोचे न किंचन । बालस्तदा रुरोदोच्चैरात्मानं ज्ञापयन्निव ॥ ३८९ ॥ नृपः कृतकृपस्तत्र, बाले चेट्यां तु निष्कृपः । प्रोवाच किमिदं पापे ! विधित्सुः श्वपचाधिकम् ॥ ३९० ॥ निवेदितेऽथ वृत्तान्ते, स्त्रीत्वकातरया तया । राज्ञा लात्वाऽथ धात्रीणामन्यासां स समर्पितः ॥ ३९१ ॥ उक्ताश्च ताश्चेद्बालस्य, प्रमादोऽस्य भविष्यति । करिष्यामि ततो युष्मानेतदीयचितेन्धनम् ॥ ३९२ ॥

निर्भर्त्स्य मन्त्रिणं देवीमप्येतदनुरोधतः । प्रच्छन्नं कारयांचक्रे, जन्मवर्धापनोत्सवम् ॥ ३९३ ॥ नृपस्तज्जन्मसानन्दस्तमानन्दमभिख्यया । विदधे वर्धमानः सञ्जाददे सकलाः कलाः ॥ ३९४ ॥ प्राक्कर्मदोषतः किंतु, नृपे विषममानसः । स्थापितो युवराजत्वे, जनकेन ससम्मदम् ॥ ३९५ ॥ अन्यदाऽऽटविको दुर्गस्वभूमिबलगर्वितः । उद्धृत्तः सिंहराजस्य, सत्यनामा स दुर्मतिः ॥ ३९६ ॥ राज्ञा तस्योपरि प्रैषि, सैन्यं जिग्ये च तेन तत् । प्रयाणत्रितयं यातस्ततोऽमर्षादयं स्वयम् ॥ ३९७ ॥ तदा वहन्त्यां वाहिन्यां, सिन्धुसिन्धुतटस्थितम् । अहो कष्टमहो कष्टं, ब्रुवाणं जनमैक्षत ॥ ३९८ ॥ ग्रस्यमानमपश्यच्च, भेकं तत्राहिना नृपः । कुररेण च तं तं चाजगरेण गरीयसा ॥ ३९९ ॥ स तं व्यतिकरं वीक्ष्य मूढचित्तप्रमोदकम् । सतां निर्वेदहेतुं च, हृदये न्यषदन्नृपः ॥ ४०० ॥ अचिन्तयच्च भेकाहिकुररा मोचिता अपि । न जीवन्ति किमेतेनाऽप्रतीकारेण वस्तुना ॥ ४०१ ॥ ध्यात्वेति तर्जयित्वेभं, जगाम शिबिरं नृपः । कृत्वा दिनोचितं रात्रौ, सुप्तबुद्धो व्यचिन्तयत् ॥ ४०२ ॥ ग्रस्यते लोकमण्डूकोऽहितुल्येन नियोगिना । स राज्ञा कुररेणेव, कृतान्ताजगरेण सः ॥ ४०३ ॥ एवंविधेऽत्र संसारे विषयान् विषयी जनः । सुखेच्छुः सेवते बालः, कालकूटं जिजीविषुः ॥ ४०४ ॥ दुःखं पापफलं मत्वा दुःखनाशाय दुःखितः । सुखितः कुरुतां धर्मं, जानन् धर्मफलं सुखम् ॥ ४०५ ॥ मानप्राज्येन राज्येन, तदेतेन कृतं मम । तद्धि पातालवत्क्षिप्तैर्दुष्पूरं पूरणैरपि ॥ ४०६ ॥ दुरन्तं खलमैत्रीव, सभुजङ्गं च नौकुवत् । वेश्याचित्तवदस्थैर्यं, सर्पवत्तत्त्यजाम्यदः ॥ ४०७ ॥ वस्तुनि प्रस्तुते मे स्याल्लाघवं स्वल्पकं हि तत् । इति चिन्तयतो रात्रिर्वीता सिंहमहीभुजः ॥ ४०८ ॥ कृते प्राभातिके कृत्ये, समेते मन्त्रिमण्डले । राजा

१ उद्धतः । २ सेनायाम् । ३ पक्षिविशेषेण । ४ कीटकनिर्मितवस्त्रिकवत् ।

विजयवत्याख्यवेत्रिण्या न्यज्ञपीदृशम् ॥४०९॥ यद्देव ! प्रस्थितं मत्वा देवमत्युग्रशासनम् । दुर्मतिः स्वयमेवायं, वहन्कण्ठे कुठारकम् ॥४१०॥ जनैः कतिपयैर्युक्तो, वेत्रिभूमौ समागतः । दिदृक्षुर्देवमस्त्यत्र, प्रमाणं देव एव हि ॥४११॥ [युग्मम्] राजा व्यलोकयद्वक्रं, मतिसागरमन्त्रिणः । स प्रोवाच भवत्वेवं, नृपा ह्याश्रितवत्सलाः ॥४१२॥ प्रविश्य राज्ञाऽनुज्ञातो, दुर्मतिस्तं व्यजिज्ञपत् । अयं कण्ठः कुठारोऽयमित्युक्त्वा प्रणनाम च ॥ ४१३ ॥ तस्याऽभयं वितीर्याऽऽर्यस्तं सत्कृत्य च कृत्यवित् । प्रस्थाप्य च निजे स्थाने, स्वयं जयपुरं ययौ ॥४१४॥ मन्त्रिमण्डलमाकार्य, कथितोऽथ महीभुजा । राज्यत्यागव्रतादानरूपो निजमनोरथः ॥४१५॥ विवेककलितेनाऽथ, तेनाऽयं बहुमानितः । दैवज्ञान्दिनमप्राक्षीदाऽऽनन्दस्याभिषेचने ॥ ४१६॥ पञ्चमे दिवसे नैमित्तिकोत्तमनिवेदिते । राज्याभिषेकमङ्गल्यवस्तून्यानायितान्यथ ॥ ४१७॥ मृत्पिण्डदधिसिद्धार्थ[1]मीनचामररोचना[2]ः । सिंहचर्मसितच्छत्रपुष्पभद्रासनादि च ॥४१८॥ आनाय्य न्यायमार्गस्थो, नृपोऽध्यायन्निजं सुतम् । राज्ये विन्यस्य यास्यामि, धर्मघोषगुरोः पुरः ॥४१९॥ स ध्यायन्निति सद्ध्यानी, राज्यदानस्य वासरम् । प्रतीक्षमाण एवास्थान्निराकाङ्क्षो मुमुक्षुवत् ॥४२०॥ आनन्दयुवराजस्तु, प्राच्यदुष्कर्मदोषतः । घटितो निजदुर्मत्या, तेन दुर्मतिना तथा ॥४२१॥ केनापि हि प्रयोगेण, विप्रलभ्य कदाचन । अयमालभ्यते भूपस्ताभ्यामिति च मन्त्रितम् ॥४२२॥ श्रुतोऽभिषेकवृत्तान्तो, विपरीततया धृतः । सदैतेन च्छलेनाहं, निहन्तुं चिन्तितोऽमुना ॥४२३॥ अस्मिन् सत्येऽपि सत्यर्थे तद्दत्तं मा स्म भून्मम । राज्यं सम्मारयित्वैनं, गृह्यते तद्धि सुन्दरम् ॥४२४॥ आकारितेऽप्यनायाते, कुमारे मारणात्मके । प्रतीहारयुतः कार्यमविचार्य ययौ नृपः ॥४२५॥

---

१ सिद्धार्थ० श्वेतसर्षप । २ रोचना० गोरोचना ।

आत्मद्वितीयमायातं, वीक्ष्य तं स व्यचिन्तयत् । अधुनैव सुसाध्योऽयं, साध्यते यदि साधु तत् ॥४२६॥ ध्यात्वेत्थसि-प्रहारेण, प्रतीहारमसारयत् । नृपं तु निष्कृपो गाढप्रहारेणाक्षमं व्यधात् ॥४२७॥ ततः फलकलो जातः, पुरक्षोभो महान-भूत् । राजगृह्याः कुमारेण, समं समरमादधुः ॥४२८॥ निवारिताश्च ते राज्ञा, निजाज्ञापूर्वकं भटाः । हत एवाहमेतं मा, निहतेति प्रजल्पता ॥४२९॥ अभिषेकममुष्यैव, कुरुध्वं नृप एष वः । इति तेषु निवृत्तेषु, कुमारः प्राह दुर्मतिम् ॥४३०॥ दृढबन्धैर्बधानैनं, स तं निगडितं व्यधात् । न्यषेधत्तुमुलं हत्वा, कांश्चिन्निर्भर्त्स्य कांश्चन ॥४३१॥ निजविश्वासपात्राणाम् र्पयि-त्वाथ भूपतिम् । स्वयं राज्यमधिष्ठाय, तद्व्यवस्थां विधाय च ॥४३२॥ वशे विधाय सामन्तमण्डलं मण्डलं च सः । पितरं चारकेऽक्षैप्सीदात्मानमिव नारके ॥४३३॥ अमेध्यमूत्रदुर्गन्धे, भित्तिसुप्तसरीसृपे । गृहोलिकासुसंकीर्णे, स्वनन्मशकमक्षिके ॥४३४॥ प्रलम्बमाननिर्मोकमुक्ताप्रालम्बमालिते । लूतातन्तुवितानाढ्ये, दुष्षमावासमन्दिरे ॥४३५॥ अधर्मलीलामेदिन्या, सीमन्तकसहोदरे । निवासे सर्वदुःखानां मृत्योर्विश्राममण्डपे ॥४३६॥ [पञ्चभिः कुलकं] तत्र नीतं नृपं श्रुत्वा, विमुक्ता-क्रन्दभैरवम् । शीघ्रगत्युदितश्वासमुरःकुट्टनतत्परम् ॥४३७॥ निदाघं हृदि बिभ्राणं, वर्षारात्रं च नेत्रयोः । आगच्छत्कुमु-मावल्यादिकमन्तःपुरं तदा ॥४३८॥ [युग्मम्] वीक्ष्य लोहभृतं भूपं, महाक्रन्दपरायणम् । नृपेणारक्षकैश्चापि, कथंचिदपि वारितम् ॥४३९॥ राज्ञा प्रबोधितं चेत्थं, शुचायासकृता कृतम् । भवो विचित्ररूपोऽयं, खेलनं तस्य जन्तवः ॥४४०॥ दुर्निवाराणि कर्माणि, चपलाचपलाः श्रियः । स्वमसाधारणं प्रेम तदलं परिदेवनैः ॥४४१॥ दुर्लभं भगवद्वाक्यं, भवती-

१ राजसुभटाः । २ पृथ्वीप्रदेश । ३ निर्मोक० सर्पकञ्चुक । ४ लूता० कीटकविशेष । ५ सीमन्तक० तन्नामा नरकावास

भिरलाभि च । सर्वदुःखक्षयोपायं, तत्कुरुध्वं तदेव हि ॥४४२॥ तथेति प्रतिपद्यैतद्बलादाऽऽनन्दभूपतेः । साध्व्या गन्धर्वदत्ताख्यखेचर्या व्रतमाददे ॥४४३॥ नृपस्तु यात्यमानोऽपि, यातनाभिरकोपनः । जग्राहाऽनशनं धीमान्विज्ञाय समयोचितम् ॥४४४॥ तत्रानन्देन विज्ञाते, कुपितेन महल्लकः । देवशर्माभिधः प्रैषि, नृपं भोजयितुं हठात् ॥४४५॥ स गत्वा नृपतिं प्राह, देव! दैववशान्नृणाम् । जायते जगति प्रायः, कार्यस्य विषमा गतिः ॥४४६॥ दैवो हि न गुणग्राह्यो, नाऽऽराध्यो विनयेन च । अनर्थ एव मूर्त्तोऽयमकालज्ञः समीहिते ॥४४७॥ स्वच्छन्दो मत्तहस्तीव, कुटिलः सिन्धुवाहवत् । कर्माण्येव च दैवोऽयं, साध्यः पुरुषकारतः ॥४४८॥ विधत्तां भोजनं देवो, ध्रुवं जीवन्नरो यतः । उल्लंघ्य विपदं धन्यः, पुनः प्राप्नोति संपदम् ॥४४९॥ नृपः प्रोवाच नाऽमोचि, सन्मार्गसमयोचितः । मया पुरुषकारो यज्जगृहे भावतो व्रतम् ॥४५०॥ न सम्पद्यभिलाषो मे, योग्यं त्वनशनं कृतम् । स प्राह देवेऽभुञ्जाने, कोपिष्यति महीपतिः ॥४५१॥ तस्य निष्कारणः कोपः, सत्यसन्धा हि साधवः । नृपप्रोक्त उवाचैष, स प्रमादेऽपि कर्मठः ॥४५२॥ किं नैति देवशर्मेति, क्रोधादाऽऽनन्दभूपतिः । निस्त्रिंशः कृष्टनिस्त्रिंश, एत्य भूपमवोचत ॥४५३॥ यदि ग्रहीता नाऽऽहारं, तवेतेन शितासिना । छेत्स्यामि त्वच्छिरस्तच्च, श्रुत्वा भूपतिरूचिवान् ॥४५४॥ जीविते मरणान्ते स्यादुद्वेगः कीदृशो मृतेः । गर्भात्प्रतिक्षणं मृत्यौ, जीवतीति मृषा वचः ॥४५५॥ सार्थात्कश्चित्पुरो याति, यदि तस्य भयं किमु? । का नाम जीवितव्याशा, जन्तोः सूनापशोरिव ॥४५६॥ व्याधिबाणान् क्षिपन्नेति, वृद्धभावधनुर्धरः । विधिव्याधो मनुष्यैणयूथव्यधनिबद्धधीः ॥४५७॥ प्रत्यवायप्रतीकारादिकं न गणय-

१ नरकक्लेदुमाभिः । २ कञ्चुकी । ३ यमस्थानपशोः । ४ प्रत्यवाय० पाप ।

त्ययम् । हरिः प्रहरति स्वैरं, जनेषु हरिणेष्विव ॥४५८॥ मन्ये त एव निर्विण्णा, जन्ममृत्योः पुनः पुनः । चरन्ति दुश्चरं
येऽत्र, भवातंकहरं तपः ॥४५९॥ जिनवाक्यसुधां पीत्वा, मरणान्न बिभेम्यहम् । यत्र मोक्षोऽथवा स्वर्गः, स हि मृत्युर्म-
ह्योत्सवः ॥४६०॥ कृतान्तहस्तिनो मोक्षो, न युद्धे न पलायने । हस्तस्तस्य न दृश्येत, गृहीतं च न मुञ्चति ॥४६१॥ काले
लुनाति सस्यानि, यथा पक्वानि कर्षकः । तथाऽजातानि जातानि, भूतानि प्रेतनायकः ॥४६२॥ मृत्युपाशाः पतन्त्येते, निर्जरे-
ष्वपि दुर्धराः । जराग्रस्तो नरो मृत्युप्रमादादेव जीवति ॥४६३॥ स्वयं मयाऽऽहतो मृत्युर्भोजनं न करोमि यत् । मृतमा-
रणमात्रेण, कलङ्कस्तेऽवशिष्यते ॥४६४॥ श्रुत्वेति क्रोधरक्ताक्षः, कृपाणेन जघान तम् । ब्रुवन्नमो जिनेन्द्रेभ्यो, नृपतिः प्राप
पञ्चताम् ॥४६५॥ इत्थं हतस्तेन सुतेन सिंहः, समत्वमात्रादकृतव्रतोऽपि । नरेश्वरः पञ्चसरस्वदायुः, स्वर्गे तृतीये त्रिदशो
बभूव ॥४६६॥ सानन्दमानन्दनृपस्तु राज्यं, विधाय हिंसादिनिबद्धबुद्धिः । उदन्वदायुः प्रथमक्ष्मायां, पितुर्वधान्नारक-
तामवाप ॥४६७॥ इति श्रीहरिभद्रोक्त्या, प्रद्युम्नाचार्यगुम्फिते । समरादित्यसंक्षेपे द्वितीयोऽयं भवोऽभवत् ॥४६८॥

## [ अथ तृतीयो भवः ]

अस्त्यस्य जम्बूद्वीपस्य, क्षेत्रेऽवरविदेहके । नृस्त्रीरत्नभृतं कोशमिव कोशाम्बिधं पुरम् ॥१॥ तत्राऽस्त्यजितसेनाख्यः, सेना-
जितदिगन्तरः । वैरिराजशिरोरत्नद्योतिताङ्घ्रिनखो नृपः ॥२॥ व्योमाञ्जनवतः शत्रुशलभक्षयकारिणः । यत्प्रतापप्रदीपस्य,

१ सरस्वत्० सागर ।

च्छायेव द्वेषिदुर्यशः ॥ ३ ॥ तस्याऽऽत्मनिर्विशेषोऽस्ति सर्वराज्यस्य चिन्तकः । इन्द्रशर्माभिधो मन्त्री, प्रत्तशर्मा जने द्विजः ॥ ४ ॥ आनन्दनारकः सोऽथ, नरके सागरोपमम् । चत्वार्यन्यानि संसारे, भ्रान्त्वा चास्य द्विजन्मनः ॥ ५ ॥ शुभंकराख्य-भार्यायां, नारीत्वेनोदपद्यत । जज्ञे च समये पुत्री, जालिनीति कृताभिधा ॥६॥ [युग्मम्] अथ तस्यैव राज्ञोऽस्ति, सचिवो बुद्धिसागरः । तत्पुत्रो ब्रह्मदत्तस्तामुपयेमे सयौवनाम् ॥ ७ ॥ तयोः परस्परस्नेहगुणेनाऽऽनद्धचेतसोः । कियानपि ययौ कालः, पञ्चगोचरसेवया ॥ ८ ॥ इतश्चाचिन्त्यमाहात्म्यात्कर्मणां कृत्तमर्मणाम् । सिंहदेवो दिवश्च्युत्वा, तस्याः कुक्षाववातरत् ॥ ९ ॥ स्वप्नेऽपश्यच्च सा स्वर्णपूर्णकुम्भं निजोदरे । प्रविष्टं निर्गतं भग्नं, स्वहस्तेन कथंचन ॥ १० ॥ ससाध्वसा विबुद्धा सा, संकीर्णरसभागऽभूत् । नाऽऽख्यत्तु ब्रह्मदत्ताय, स्त्रियो हि दृढकैतवाः ॥ ११ ॥ प्रवर्धमानगर्भाऽथ, सान्यथाऽऽत्मे मनस्यपि । सा गर्भपातनोपायान्निर्ममा निर्ममे बहून् ॥ १२ ॥ न विपेदे स गर्भस्तु, प्राच्यकर्मविपाकतः । तत्कान्तो ज्ञातवृत्तान्तोऽवदत्परिजनं निजम् ॥ १३ ॥ तथा यत्यं यथा गर्भः, प्रसवे न विपद्यते । वञ्चयित्वा च तच्चित्तं, निवेद्यो मे कथंचन ॥ १४ ॥ तदाऽस्या दोहदः प्राण्यद्रोहदः समजायत । देवार्चागुरुशुश्रूषाधर्मश्रवणसुन्दरः ॥ १५ ॥ दोहदे पूरिते पत्या, साऽभूद् गर्भ-प्रभावतः । रमावत्परमानन्ददायिनी जनचेतसाम् ॥ १६ ॥ समयेऽथ प्रसूतेयं, तनयं हृद्यचिन्तयत् । कथं व्यापादयाम्ये-नमियतीनां दृशां पुरः ॥ १७॥ ज्ञाततन्मतया स्मृत्वा, ब्रह्मदत्तवचस्तदा । उदिता बन्धुजीवाख्यबालसख्येति जालिनी ॥ १८ ॥ पापः स्वामिन्ययं गर्भः, क्लेशदेनाऽमुना कृतम् । करोम्येकान्तगं तस्माद्यद्यादिशसि मामिह ॥ १९ ॥ वधे सखी-त्रपावत्या, कषायायत्तचित्तया । तदा जजल्पे जालिन्या, यूयं जानीथ किंचन? ॥ २० ॥ बन्धुजीवाऽपनीयैतं, तत्कान्ताय

समार्पयत् । तं कृत्वा सुस्थितं लोके, मृतं गर्भमघोषयत् ॥ २१ ॥ शिखीत्यभिख्यया बालं, तमुवाच पिता मुदा । कलाकलापसंपूर्णः, स सत्यामतनोच्च ताम् ॥ २२ ॥ तं प्रौढं पुत्रकत्वेन, ब्रह्मदत्त उपाददे । ज्ञातस्वपुत्रवृत्तान्ता, क्रुधा जज्वाल जालिनी ॥ २३ ॥ गृहकृत्यं परित्यज्य, ब्रह्मदत्तं जगाद च । नैकत्राऽसिद्वयं कोशे, गृहेऽयं वाऽहमेव वा ॥ २४ ॥ एतस्मिन्सत्यहं किं च, प्राणानपि न धारये । बद्ध्वा शिलां गले कुर्वे, जले पतनमप्यलम् ॥ २५ ॥ स्वमादिर्जलपातान्तं, स श्रुत्वा मातृचेष्टितम् । शिखी दध्यौ विरक्तात्मा, कषायाणां प्रगल्भताम् ॥ २६ ॥ अमी कषायाः संसारतरुसेकघनाघनाः । मोक्षार्थमुद्यतैः पुंभिर्वर्जनीयाः प्रयत्नतः ॥ २७ ॥ कर्मवृद्धिः कषायेभ्यो, भवस्तस्मात्ततोऽसुखम् । तस्मादुद्विजमानेन, त्यजनीयास्त एव तत् ॥ २८ ॥ उक्तं च वीतरागः सन्, कलुषेण न युज्यते । यथा तथा कषायालीं, निगृह्णन्नपि तत्समः ॥ २९ ॥ किं च मत्कर्मणः प्राच्याच्चन्द्रादग्निकणावलिः । प्रद्योतनात्तमो जज्ञे, कालकूटः सुधारसात् ॥ ३० ॥ अन्नान्मृत्युर्जलातृष्णा, यन्मातुर्द्वेष एष मे । तस्माच्च दुःखं तातस्य, स्थातुं तन्नेह युज्यते ॥ ३१ ॥ ध्यात्वेति हृदये तातमनापृच्छ्य विरागवान् । निर्गत्य नगरादेष, गतोऽशोकवने वने ॥ ३२ ॥ तत्राऽशोकतलासीनं, बहुशिष्यसमाकुलम् । एकत्र संयमे लीनमपध्यानद्वयोज्झितम् ॥ ३३ ॥ दण्डत्रयेण निर्मुक्तमकषायचतुष्टयम् । खपञ्चकेन[1] चाऽजय्यं, षट्काययतनापरम् ॥ ३४ ॥ भयसप्तकहीनं च, समुज्झितमदाष्टकम् । नवधा ब्रह्मगुप्तं च, दशधा धर्मधारिणम् ॥ ३५ ॥ एकादशाङ्गज्ञातार्थं, श्रितं द्वादशधा तपः । सूरिं विजयसिंहाख्यमद्राक्षीदक्षतं गुणैः ॥ ३६ ॥ [कलापकम्] वीक्ष्य रूपचरित्राभ्यां, तं निर्जितझषध्वजम्[2] ।

१ इन्द्रियपञ्चकेन । २ झषध्वज० कामदेव ।

नत्वोपविश्य पप्रच्छ, भवनिर्वेदकारणम् ॥ ३७॥ रूपान्निरूप्यते द्रव्यं, तेन च स्वजनो जनः। तत्किं? सर्वं परित्यज्य, प्रपन्नोऽसि व्रतं प्रभो! ॥ ३८॥ सुगुरुः प्राह किं रूपं, देहे मांसास्थिसंचये। कीदृशः प्रतिबन्धश्चास्थिरयोः स्वजनार्थयोः ॥ ३९॥ एकः संक्लिश्यते रोगैरेककश्च विपद्यते। स्वस्वकर्मफलस्याऽनुभवे स्वः कस्य को भवे॥ ४०॥ याति वैर्यपि मातृत्वं, पुत्रोऽपि रिपुतां व्रजेत्। तदेवमनवस्थायां, स्वाजन्यं मोहवल्गितम् ॥ ४१॥ अन्यच्च यन्ममाऽध्यक्षमनुभूतं स्वयं च यत्। आकर्णय महाभाग!, तन्मे कथयतः सतः ॥ ४२॥ अत्रैव विजये लक्ष्मीनिलयाख्ये पुरे वरे। इभ्यसागरदत्तस्य, श्रीमत्यां तनयोऽस्म्यहम् ॥ ४३॥ कुमारत्वे गतो लक्ष्मीपर्वतेऽपश्यमद्भुतम्। नालिकेरीद्रुमं भूमिप्रविष्टायतपादकम् ॥ ४४॥ अचिन्तयमहं नाऽयं, निर्निमित्तः प्ररोहकः। भवितव्यं तदर्थेन, कियताऽप्यत्र निश्चितम् ॥ ४५॥ तदाऽहं मुदितोऽकस्माज्जृम्भितः सुरभिर्मरुत्। विमुक्तः सहजो वैरानुबन्धः श्वापदैरपि ॥ ४६॥ सश्रीकः पर्वतो जज्ञे, सर्वर्तुकुसुमं वनम्। अलिभिर्गुञ्जितं मञ्जु, मुदिता विहगा अपि ॥ ४७॥ किमिदं महदाश्चर्यमिति चिन्तयता मया। तरुणार्कनिभं जात्यरत्नकाञ्चनमण्डितम् ॥ ४८॥ स्फुरज्जयरवाकीर्णं, नदन्मङ्गलतूर्ययुक्। पतत्कुसुमवर्षं चाऽनेकत्रिदशसंयुतम् ॥ ४९॥ प्रतीच्या दिश आगच्छद्धर्मचक्रित्वसूचकम्। अर्हतोऽजितदेवस्य धर्मचक्रमदृश्यत ॥ ५०॥ [ विशेषकम् ] ततश्च साधवोऽनेके, विशदाम्बरधारिणः। विभूषितान्तरात्मानः, सद्गुणैर्भूषणैरिव ॥ ५१॥ अथाऽदर्शि मया श्रीमान्, सुरासुरनरस्तुतः। अर्हन्नजितदेवाख्यः, समागच्छन्नतुच्छरुक् ॥ ५२॥ विन्यस्यन्वसु[3]पद्मेषु, नवसु क्रमपुष्करे। जितेष्वनुप्रविष्टेषु, सेवितुं शेवधिष्विव

---

१ पाकृ० मूक। २ वृक्षः। ३ वसु० स्वर्णे।

॥५३॥ पापिस्नानजमालिन्यमपनेतुं समेतया । छत्रत्रयच्छलात्सेव्यमानस्त्रिस्रोतसा रसात् ॥५४॥ दिवि दुन्दुभिनादेन,
परितः परिसर्पता । निर्वासनं प्रकुर्वाणो, मोहस्य परिमोषिणः ॥५५॥ वीज्यमानः सुराधीशैरभितश्चारुचामरैः । लोकद्वि-
तयनैर्मल्यदित्सयेव पुरस्कृतैः ॥५६॥ [पञ्चभिः कुलकम्] तं वीक्ष्य नष्टमिथ्यात्वः, कृतधर्ममनोरथः । अध्यायमिति
धन्योऽहं येन लेभे जगद्गुरुः ॥५७॥ तदा च नाकिज्योतिष्कभवनाधीश्वरा व्यधुः । रत्नचामीकरश्वेतमयं, वप्रत्रयं क्रमात्
॥५८॥ जगत्रयमिहायातु स्वाम्यशोकं विधास्यति । अशोकद्रुरितीवोच्चैरुच्चरत्यलिनिःस्वनैः ॥५९॥ अथ रत्नमये सिंहा-
सने सपदविष्टरे । उपविष्टे विभौ रूपत्रितयं व्यन्तरा व्यधुः ॥६०॥ यतिस्वःस्त्रीयतिन्योऽग्नेस्त्रिधा देव्यश्च रक्षसः । तन्नाथा
मरुतोऽस्त्रेऽस्थुरीशस्य स्वर्गिनृस्त्रियः ॥६१॥ अथाऽऽयोजनगामिन्या, स्वामिनो देशनार्चिषा । का वार्ता मदने यस्य,
विलीनो मोहपर्वतः ॥६२॥ अथाऽप्रच्छि मया स्वामी. नालिकेरीतरोरधः । अस्त्यर्थो नास्ति यद्यस्ति, कियान्न्यस्तश्च केन
सः ॥६३॥ विपाकः कीदृशश्चाऽस्य, भगवानवदच्छृणु । लोभदोषादुदीर्णोऽस्याः, पादको द्रव्यमस्ति च ॥६४॥ तत्सप्तल-
क्षदीनारप्रमितं भवताऽपि च । नालिकेर्याश्च जीवेन, न्यस्तं शुभविपाकदम् ॥६५॥ [युग्मम्] मया तेन च जीवेन,
न्यस्तेऽहं कथमीदृशः । अयं च कथमीदृक्षो मयेत्युक्ते जिनोऽवदत् ॥६६॥ अस्यैव विजयस्यान्तः, पुरेऽमरपुराभिधे ।
आसीदमरदेवाख्यः, पुरा गृहपतिर्धनी ॥६७॥ युवां तदङ्गजन्मानौ, सुन्दरीकुक्षिसंभवौ । गुणचन्द्रबालचन्द्राभिधौ तारु-
ण्यमीयथुः ॥६८॥ वाणिज्यायाऽन्यदाऽऽदाय वस्त्राद्यं बहिहागतौ । विक्रीतेऽजनि लाभो वां, वाञ्छितार्थात्समर्गलः ॥६९॥

---

१ गगानद्या । २ चामीकर० स्वर्ण । ३ श्वेत० रजत । ४ नैर्ऋतस्य । ५ वायो । ६ कोनके । ७ ईशानस्य ।

सूरतेजा नृपस्तर्हि, लक्ष्मीनिलयनायकः । प्रारब्धो बहुसैन्येन, राजा ।।जयवर्मणा ॥७०॥ स न्यस्य नगरे पत्नींलक्ष्मीपर्वतमाश्रितः । सारद्रव्यं गृहीत्वा स्वं, तत्राऽऽरूढौ युवामपि ॥७१॥ तत्र स्थिताभ्यामालोच्य, युवाभ्यां न्यासि सद्वसु । गुणचन्द्रेण भागीति, विषं दत्त्वा हतो भवान् ॥७२॥ ऋजुत्वाद्व्यन्तरोऽभूस्त्वं, सोऽपि दष्टोऽहिना मृतः । द्रव्ये तथास्थिते रत्नप्रभायां नारकोऽभवत् ॥७३॥ त्वं देशन्यूनपल्यायुः, प्रपाल्य विजये त्विह । ढक्कनापुरवास्तव्यसार्थेशहरिनन्दिनः ॥७४॥ वसुमत्यां सुतो देवदत्ताख्योऽभूः क्रमाद्युवा । उद्धृत्य गुणचन्द्रस्तूपनिध्यहिरिहाऽभवत् ॥७५॥ अधितस्थौ स तद्द्रव्यमन्यदा त्वमिहागतः । देव्या लक्ष्मीनिवासिन्या, यात्रायां तामपूजयः ॥७६॥ दीनानाथादिदानं च, दत्त्वा विहितभोजनः । भ्रमन्नद्राविहोद्देशे, दृष्टो दष्टोऽसि चाऽहिना ॥७७॥ विषस्योग्रतया पृथ्व्यां, पतितोऽसि मृतोऽसि च । त्वद्भृत्यैर्निहतः सोऽहिः, सिंहस्तत्रैव चाऽजनि ॥७८॥ भवान् कृतार्गलापुर्यामत्रैव विजयेऽभवत् । सूनुर्यशोधराजानेः, शिवदेवस्य गेहिनः ॥७९॥ इन्द्रदेवोऽभिधानेन, यौवनस्थोऽभवद्भवान् । तत्तेनाधिष्ठितं द्रव्यं, सिंहेनाऽस्त्योघसंज्ञया ॥८०॥ अन्यदा वीरदेवाख्यराज्ञा स्वस्वामिना भवान् । प्रैष्येतन्नगरस्वामिमानभङ्गस्य संनिधौ ॥८१॥ आगच्छन्निह विश्रान्तो, जनैः कतिपयैः समम् । दृष्टः सिंहेन तेन त्वं, निहतोऽसि स च त्वया ॥८२॥ श्रीस्थले पत्तने यक्षदासाख्यान्त्यजनन्दनौ । भार्यायां मातृयक्षायां, जातौ यमलबान्धवौ ॥८३॥ ख्यातस्त्वं कालसेनाख्यश्चण्डसेनाख्यया परः । वयःस्थौ मृगयायातावत्र क्रोडं निजघ्नथुः ॥८४॥ निध्युद्देशे युवां पक्त्वा, तं तस्य पलमादथुः । पृथ्वीं शस्त्र्या चखानाऽथ, चण्डसेनो निरर्थकम् ॥८५॥ ददर्श च निधेः कण्ठं, प्रावर्तत च गोपितुम् । लक्षितश्च त्वया स त्वां, विश्वस्तं निज-

घान च ॥ ८६ ॥ त्वं मृत्वाऽभूस्तृतीयस्यां, पृथ्व्यां पल्याब्धिजीवितः । परस्तथास्थिते द्रव्ये, तत्रैव रिपुणा हृतः ॥ ८७ ॥ षष्ठ्यामष्टादशाब्ध्यायुः, पृथिव्यां नारकोऽभवत् । उद्धृत्य नरकात्तु त्वमत्रैव विजयेऽभवः ॥ ८८ ॥ श्रीमतीसन्निवेशस्थशालिभद्रस्य नन्दनः । नन्दिन्यां नामतः पत्यां, बालसुन्दरसंज्ञया ॥ ८९ ॥ [ युग्मम् ]. वयःस्थः शीलदेवर्षेः, श्राद्धधर्मं समासदः । मृत्वा त्रयोदशाब्ध्यायुर्लान्तके च सुरोऽभवः ॥ ९० ॥ च्युतश्च विजयेऽत्रैव, हस्तिनापुरवासिनः । सुहस्तिश्रेष्ठिनः कीर्तिमत्यां पुत्रतयाऽभवः ॥ ९१ ॥ नाम्ना समुद्रदत्तस्त्वं, परोऽपि नरकादभूत् । सोमिलायां भवत्तातदास्यां मङ्गलकाभिधः ॥ ९२ ॥ वयःस्थौ च युवां जातावन्यदा भवता पुनः । मुनेरनङ्गदेवस्य, पार्श्वे श्राद्धत्वमाददे ॥ ९३ ॥ लक्ष्मीनिलयवास्तव्या, बलसार्थेशपुत्रिका । श्राविका जिनमत्याख्या, परिणिन्ये च सा त्वया ॥ ९४ ॥ युतो मङ्गलकेनैतामानेतुं वर्त्मनि व्रजन् । निध्युद्देशे समायातो, विश्रान्तः क्षणमत्र च ॥ ९५ ॥ निरीक्ष्य प्रपुनाटस्य[1], पादकं जगदे त्वया । द्रव्यमत्रास्ति दासेरस्ततः खनितुमुद्यतः ॥ ९६ ॥ वीक्षिते निधिकण्ठेऽथ, दासेरो हृद्यचिन्तयत् । महार्घोऽयं निधिः स्वामिवञ्चनेनाऽपि गृह्यते ॥ ९७ ॥ अत्रान्तरे त्वयाप्यैक्षि, निधिकुम्भस्य कण्ठकः । अवाचि च किमेतेन, गम्यते नगरान्तरे ॥ ९८ ॥ निधिमासाद्य दासेरं, हृष्टं वीक्ष्य त्वमब्रवीः । अयं व्यतिकरः कस्याऽप्यग्रे वाच्यो न हि त्वया ॥ ९९ ॥ न जल्पाम इति प्रोच्य, सोऽध्यायदयमेककः । ग्रहीता निधिमेतेन, वञ्च्येऽहं किमु बुद्धिमान् ॥ १०० ॥ नादत्तेऽसौ निधिं यावत्तावद् व्यापादयाम्यमुम् । तथा च नगरारामे स्थित्वाऽभाष्यत स त्वया ॥ १०१ ॥ मम श्वशुरगेहस्य, शुद्धिं ज्ञात्वा निवेदय । गन्तुं प्रवर्त-

[1] वृक्षविशेषस्य ।

मानश्च सोऽध्यानदिति कूटधीः ॥१०२॥ अयं गृहे प्रविष्टः सञ्शीघ्रमादास्यते निधिम् । तत्करोमि तथा नैव, यथा विशति वेश्मनि ॥१०३॥ ध्यात्वेत्येत्य स विच्छायमुखस्त्वामूचिवानिति । लोकद्वयविरुद्धं ते, भार्या कृत्वा क्वचिद्गता ॥१०४॥ अस्मदागमनं श्रुत्वा, लज्जितानि च तान्यलम् । युक्तं नात्र प्रवेष्टुं तच्छ्रुत्वेति त्वमचिन्तयः ॥१०५॥ धिङ्नारीं सत्कुलीनापि, वासितापि जिनागमैः । यदीदृशमसौ चक्रे, महामोहवशंवदा ॥१०६॥ तदलं गृहवासेन, गृह्णामि व्रतमञ्जसा । अनङ्गसङ्गं संत्यज्याऽनङ्गदेवमुनेः पुरः ॥१०७॥ ध्यात्वेति स त्वया प्रोचे, गच्छ त्वं तातवेश्मनि । स दध्यौ वञ्चयित्वा मां, निधिमेष जिघृक्षति ॥१०८॥ यथा तथाऽपि हन्म्येनमिति ध्यात्वा जगाद सः । अमुक्त्वा स्थानके त्वां हि, क्रमौ मे वहतः कथम् ॥१०९॥ त्वयोचे यदि निर्बन्धः, पृच्छामस्तर्हि कंचन । साधुं क्वाऽनङ्गदेवर्षिरित्यालोच्य पथि स्थितौ ॥११०॥ अन्यदा विषमारण्ये, दिनस्य प्रहरद्वये । हतो मङ्गलकेन त्वं, पृष्ठे क्षुरिकया रयात् ॥१११॥ तदा चाऽनङ्गदेवस्य श्रमणैरग्रयायिभिः । दृष्टस्त्वं क्षुरिकां हित्वा, नष्टो मङ्गलकस्तु सः ॥११२॥ त्वयाऽऽदायोपलक्ष्याऽथ, क्षुरिकां हृदि चिन्तितम् । कुतोऽयमीदृशं चक्रे, हुं ज्ञातं निधिलोभतः ॥११३॥ जिनमत्याश्च वृत्तान्तं, मन्ये तेनैव कल्पितम् । सा कुलीना गुणीना च, सिद्धान्ते नेदृशी भवेत् ॥११४॥ तदा चाऽनङ्गदेवेन, समेतेन ससाधुना । दृष्टस्त्वं प्रत्यभिज्ञातः, पृष्टः सद्भूतमाख्यथाः ॥११५॥ समं तेन समेतस्त्वं, स्थितः स्थानेश्वरे पुरे । मासकल्पेन ते पृष्ठघातश्च प्रगुणोऽभवत् ॥११६॥ प्राप्ता तत्र त्वया शुद्धिर्जिनमत्या यथास्थिता । ध्यातं चाहो कियांस्तस्य, प्रकारो वञ्चनाविधौ ॥११७॥ अहो मोहस्य वैचित्र्यमहो संसारहेयता । यद्यप्यखण्डशीला सा, तथापि कृतमेतया ॥११८॥ आत्ते मया व्रते सापि, ज्ञात-

तत्त्वा ग्रहीष्यति । व्रतमित्थं भवाम्भोधेरेषाप्युत्तारिता भवेत् ॥११९॥ लोकद्वयहितं तस्माद्युज्यते व्रतमेव मे । ध्यात्वे-
त्यनङ्गदेवस्याऽन्तिके त्वं व्रतमग्रहीः ॥१२०॥ श्रुत्वा तव व्रतं बाढं, संविग्ना जिनमत्यपि । आगत्य त्वामभिष्टुत्य, प्रव्र-
ज्यामाददे मुदा ॥१२१॥ दीक्षित्वा गुरुणेर्ष्यादिस्त्रीस्वभावस्य विद्विषे । सुमत्याख्यगणिन्यै सा, शिष्यात्वेन समर्पिता
॥१२२॥ श्रामण्यं निरतीचारं, प्रपाल्य विधिना मृतः । पञ्चविंशतिवार्ध्यायुर्ग्रैवेये त्वं सुरोऽभवः ॥१२३॥ स तु मङ्ग-
लको द्रव्यं, तदाऽऽच्छाद्य शिलोच्चयैः । तन्मोहेन स्थितस्तत्र, पिशिताहारमाहरत् ॥१२४॥ मृत्वा षष्ठ्यामभूत्पृथ्व्यां,
द्वाविंशत्यब्धिजीवितः । उद्धृत्य विजयेऽत्रैव, नगरे राष्ट्रवर्धने ॥१२५॥ वेल्लीयकान्त्यजागारे, छागत्वेनोदपद्यत । यौवन-
स्थस्त्वजायूथमध्यस्थः सुखमस्ति सः ॥१२६॥ [ युग्मम् ] अन्यदा वह्वजान्तःस्थो, नीयमानो जयस्थलम् । निध्युद्देशे
समायातः, स जातिस्मरतामगात् ॥१२७॥ लोभान्धोऽयं ततः स्थानात्प्रेर्यमाणोऽपि नाऽचलत् । क्रुधा वेल्लीयकेनाऽथ,
निहतो मूषकोऽजनि ॥१२८॥ ओघसंज्ञावशात्तेन, प्राग्वद्द्रव्यमधिष्ठितम् । सोमचण्डाभिधस्तत्र, द्यूतकारोऽन्यदाऽगमत्
॥१२९॥ सामर्ष इव तस्याऽग्रे, भ्रमंस्तेन हतो वृषः । अकर्णनासिकायां तद्भार्यायां तनयोऽजनि ॥१३०॥ तया गुग्गुलि-
कानाख्या, रुद्रचण्डः स कीर्तितः । प्राप्तः खात्रमुखे क्षिप्तः, शूलायां नारकोऽजनि ॥१३१॥ तत्राऽतीतत्रिवार्ध्यायुर्विजयेऽत्र
पुरेऽत्र च । श्रेष्ठिनोऽशोकदत्तस्य, पुत्रीत्वेनोदपद्यत ॥१३२॥ पत्न्यां शुभंकरानाम्न्यां, श्रीर्नाम्ना जातयौवना । व्यूढा समु-
द्रदत्तेन, श्रेष्ठिसागरसूनुना ॥१३३॥ [ युग्मम् ] भुञ्जतोरनयोर्भोगांस्त्वं ग्रैवेयकतश्च्युतः । श्रीकुक्षौ जज्ञिषे सूनुर्दत्तः सागरपू-

१ पिशित० मास । २ मूषक. ।

र्वकः ॥ १३४ ॥ यौवने देवशर्माख्यगुरोर्धर्ममवाप्तवान् । नन्दिनीमीश्वरस्कन्दश्राद्धपुत्रीमुपायथाः ॥ १३५ ॥ भुञ्जानस्य तया सार्धं, भोगान् पुत्रस्तवाऽजनि । तज्जन्मोत्सवमाधातुमत्रोद्यानिकयाऽऽगमः ॥ १३६ ॥ स्वपुत्रझोलिकान्यासस्थूणार्थं ददता दरम् । निध्युद्देशे निधेः कण्ठस्त्वया दृष्टोऽथ पूरितः ॥१३७॥ दत्त्वाऽन्यत्र दरं लोकं, भोजयित्वा बुभुक्षिते । शब्दं क्षिप्त्वा स्वयं भुक्त्वा, पुरेऽगाः स्वजनान्वितः ॥१३८॥ त्वयाऽथ मातृभक्तेन, पृष्टाऽम्बा युज्यतेऽत्र किम् । साऽवोचद्दर्शिते स्थाने, कथयिष्ये तवोचितम् ॥ १३९ ॥ प्रदेशे तत्र नीत्वाऽम्बां, भवता दर्शिते निधौ । सा दध्यौ लोभतोऽज्ञानात्प्राच्याभ्यासवशादपि ॥ १४० ॥ कथंचिदपि हत्वैनं, गृह्णाम्येकाकिनी निधिम् । ध्यात्वेत्युवाच वत्सेदं, भूरि[3] भूरि कथंचन ॥ १४१ ॥ राजा वेत्ति तदाऽऽदत्ते, सर्वमप्येतनं धनम् । तदेतत् समये ग्राह्यमधुनैतेन पूर्यते ॥ १४२ ॥ [ युग्मम् ] त्वया यदाऽऽदिशत्यम्बेत्युक्ते पुरमुपागतौ । कियन्तोऽपि व्यतीयुस्ते, वासराः सुखभासुराः ॥ १४३ ॥ तस्यास्तु प्राग्भवाभ्यस्तलोभसंक्षोभसंजुषः । दुःखेन त्वद्वधोपायचिन्ताव्याकुलचेतसः ॥ १४४ ॥ [ युग्मम् ] अङ्गजस्याऽपि ते श्रीरप्यश्रीरिव कृते श्रियः । सा पौषधोपवासस्य, पारणे प्रददौ विषम् ॥ १४५ ॥ मूर्च्छितं वीक्ष्य नन्दिन्या, कृतः कोलाहलो महान् । कूजितं त्वज्जनन्याऽपि, मिलितो निखिलो जनः ॥ १४६ ॥ सिद्धपुत्रस्तदा तत्राऽऽयातो मन्त्रप्रभावतः । साधर्मिकं भणित्वा त्वां, निर्विषं विदधे क्षणात् ॥ १४७ ॥ ततस्त्वं जातवैराग्यो, मत्वा मर्त्यायुरित्वरम् । देवशर्मगुरोः पार्श्वे, सत्वरं व्रतमग्रहीः ॥ १४८ ॥ प्रपाल्य निरतीचारं, काले कालं विधाय च । ग्रैवेयकसुरोऽभूस्त्वं, त्रिंशद्वारिधिजीवितः ॥ १४९ ॥ त्वन्माता तु निधौ पीठं, कृत्वा द्रव्ये

१ स्थूणा० स्यम्भ । २ गर्ते । ३ स्वर्ण । ४ भस्पम् ।

तथास्थिते । मृत्वा पञ्चदशाब्ध्यायुः, पञ्चम्यां नारकोऽजनि ॥१५०॥ उद्धृत्य नानातिर्यक्षु, भ्रान्त्वा लोभस्य दोषतः । नालि-
केरीतरुत्वेनोत्पन्ना, तव जनन्यसौ ॥१५१॥ च्युत्वा त्वं श्रीमतीकुक्षौ, श्रेष्ठिसागरदत्ततः । सुतोऽभूर्युवयोरेव, द्रव्यव्यति-
करस्ततः ॥१५२॥ [illegible]त्वेऽहं ससंवेगो, निर्विण्णो भवचारकात् । प्रत्यक्षमर्हतो द्रव्यमनुज्ञाप्य पुराधिपात् ॥१५३॥ ग्राह-
यित्वा समस्तेभ्यो, दीनादिभ्यः प्रदाय च । प्रपन्नोऽस्मि व्रतं पार्श्वे, सूरेर्विजयवर्मणः ॥१५४॥ [युग्मम्] ऊचेऽथ शिखिना
सत्यं, भव ईदृश एव हि । धन्यस्त्वं यः प्रभो पार्श्वे, प्रव्रज्या प्रतिपन्नवान् ॥१५५॥ अथ धर्मो जिनेनोक्तः, कतिधा ?
गुरुरूचिवान् । दानशीलतपोभावैश्चतुर्धा परिकीर्तितः ॥१५६॥ दानं त्रिधाऽभयज्ञानधर्मोपष्टम्भभेदतः । रक्षणं सर्वसत्त्वा-
नामभयं कथितं जिनैः ॥१५७॥ अपि रङ्कस्य राज्ञोऽपि, समानैव जिजीविषा । त्यजत्यपि नृपो राज्यं, जीवितव्यस्य
लोभतः ॥१५८॥ रूपवान् रहितो रोगैर्दीर्घायुः श्लाघ्यजीवितः । भवेदभयदानेन, जन्तुरुक्तं जिनैरिति ॥१५९॥ तज्ज्ञेयं
ज्ञानदानं तु, येन दत्तेन देहिनः । जानन्त्युपायं बन्धस्य, मोक्षस्य च शिवप्रदम् ॥१६०॥ तस्य ज्ञानप्रदानस्य, कथं स्याद-
पर समम् । येनैकेन प्रदत्ताः स्युः, सुरासुरनरश्रियः ॥१६१॥ जायते ज्ञानदानेन, जन्तुः सर्वज्ञतास्पदम् । क्रमात्कर्मक्षयं
कृत्वा, लभते च परं पदम् ॥१६२॥ धर्मोपष्टम्भदानं तु, कथितं जिनपुङ्गवैः । नवकोटीविशुद्धं यत्साधुलोके वितीर्यते
॥१६३॥ तदन्नं पानकं वस्त्रं, पात्रं शयनमौषधम् । आसनं च वितीर्येत, धर्मोपष्टम्भकं मुनेः ॥१६४॥ तच्चतुर्धा परिज्ञेयं,
दातृग्राहकभेदतः । कालभावविदाभ्यां च, शुद्धं तत्राऽऽदिमं शृणु ॥१६५॥ न्यायोपात्तं धनं प्रासु, कीर्त्यहंकारवर्जितः ।
श्रद्धाभरेण यद्दत्ते, दातृशुद्धं तदीरितम् ॥१६६॥ दशभिर्धर्मपात्राय, त्रिगुप्ताय यतात्मने । यद्दानं दीयते तद्धि, ज्ञेयं

ग्राहकशुद्धिमत् ॥ १६७॥ यद्वान्नमान्नयात्रार्थमाहरद्भ्यो हितं मितम् । काले दीयेत साधुभ्यः, कालशुद्धं हि तन्मतम् ॥ १६८॥ कृषिकर्म यथा काले, विहितं सफलं भवेत् । काले दत्तं तथा दानं, दातुः सफलमीरितम् ॥ १६९॥ भावशुद्धं तु तद्यत्र, दाता कालुष्यवर्जितः । रोमाञ्चितवपुर्भक्त्या, दत्ते दानं समाहितः ॥ १७०॥ मोक्षहेतुनिदानेऽसौ, विधिरुक्तः पुरातनः । प्रतिषिद्धं दयादानं, न कदापि जिनेश्वरैः ॥१७१॥ पञ्चाऽऽश्रवपरीहारः, कषायाणां निषेधनम् । संवेगश्च स्थिरश्चित्ते, शीलधर्म उदाहृतः ॥ १७२॥ तपः षोढा भवेद्बाह्यं, षोढा चाऽभ्यन्तरं मतम् । कर्मनिर्मूलने शक्तस्तपोधर्मः प्रकीर्तितः ॥ १७३॥ अनित्यतादिमैत्र्याद्या, ध्येयाः षोडश भावनाः । आत्मनिन्दा च गर्हा च, धर्मोऽयं भावनामयः ॥ १७४॥ एतं चतुर्विधं धर्मं, पालयित्वा जिनोदितम् । प्राप्ता मोक्षं सदासौख्यमनन्ता जन्तवो भवात् ॥ १७५॥ स्थिरचित्तः शिखी धर्मे, प्राह सत्यमिदं प्रभो! । गृहस्थस्तु न संपूर्णे, शीलादित्रितये क्षमः ॥ १७६॥ तदादिश नरः कीदृक्, श्रमणत्वोचितो मतः । गुरुराह भवोद्विग्नः, कुलीनः शुद्धबुद्धियुक् ॥ १७७॥ कृतज्ञो विनयी श्रद्धासहितो जनसम्मतः । स्थिरः समुपसंपन्नः, श्रमणत्वोचितः स्मृतः ॥ १७८॥ शिखी समुपसंपन्नोऽस्मीति प्रोचे गुरोः पुरः । प्रमाणं भगवांस्तत्र, ततो गुरुरचिन्तयत् ॥ १७९॥ दक्षः प्रश्नेषु सूक्ष्मेषु, प्रशान्तश्चैष लक्ष्यते । यत्तन्मन्ये कुलीनेन, भाव्यं भवविरागिणा ॥ १८०॥ उपसंगृह्यते तस्मादेष ध्यात्वेति तं जगौ । श्राद्ध! युक्तमिदं किं तु, श्रामण्यमतिदुष्करम् ॥ १८१॥ सर्वत्र समता कार्या, धार्या पञ्चमहाव्रती । निश्याहारो न कार्यश्च, ग्राह्यः शुद्धो दिवाप्यसौ ॥ १८२॥ अपञ्चदोषं भोक्तव्यं, ध्येयाः शासनमातरः । धार्याश्च प्रतिमा भाव्या, भावनाः पञ्चविंशतिः ॥ १८३॥ द्रव्याद्यभिग्रहाः कार्या, भूशय्या स्नानवर्जनम् । लोचो

निष्प्रतिकर्मत्वं, गुर्वादेशविधायिता ॥ १८४ ॥ परीषहोपसर्गाश्च, सह्याः किं बहुनाऽथवा । धार्योऽष्टादशशीलाङ्गसहस्री
दुर्वहा सदा ॥ १८५ ॥ मरुद्वस्त्रेण धार्योऽयं, तार्या गङ्गा विलोमतः । जेयमेकाकिना सैन्यं, मेरुस्तोल्यस्तुलाधृतः ॥ १८६ ॥
राधावेधो विधेयोऽसावगृहीतः पुरा क्वचित् । निरन्तरं ग्रहीतव्यो, जगत्त्रयजयध्वजः ॥ १८७ ॥ मुदा श्रुत्वेति शिख्याह,
सत्यमेतत्परं प्रभो ! । भवोद्विग्नस्य नो किंचिद्दुष्करं भवभेदकम् ॥ १८८ ॥ प्रभुः प्राह महामोहः, सर्वानर्थनिबन्धनम् ।
तस्मात्स एव हन्तव्यो, लोकद्वयहितैषिणा ॥ १८९ ॥ शिख्यूचे हननोपायस्तस्य श्रमणता मता । कुर्वन्त्वनुग्रहं पूज्या, मह्यं
तस्याः प्रदानतः ॥ १९० ॥ गुरुः प्राह मया त्वय्यनुग्रहः कृत एव हि । किं तु स्थितिर्नः शास्त्रार्थं, किञ्चित्संबोध्य दीक्ष्यते
॥ १९१ ॥ शिख्याह दीक्षितेनापि, विधेया समयस्थितिः । तदेवमस्तु तौ यावदित्थं संलपतो मिथः ॥ १९२ ॥ तावन्मत्वा-
ऽस्य वृत्तान्तमनेकजनसंयुतः । ब्रह्मदत्तः पिता तस्य, वशारूढः समागमत् ॥ १९३ ॥ नत्वा गुरुमसौ लब्धधर्मलाभ उपा-
विशत् । प्रणम्य शिखिना प्रोचे, देहि मे तात ! याचितम् ॥ १९४ ॥ ब्रह्मदत्तोऽवदद्वत्स !, मत्प्राणा अपि ते वशे ।
शिख्यूचे ज्ञातवृत्तान्तो, भववासे भवानलम् ॥ १९५ ॥ दुर्लभं मानुषं जन्म, न नित्याः प्रियसङ्गमाः । चञ्चला ऋद्धयः
पुष्पसारं यौवनमङ्गिनाम् ॥ १९६ ॥ परलोकरिपुः कामो, दारुणो विषयव्रजः । दुर्निवारः सदा मृत्युस्तन्मह्यं दापय व्रतम्
॥ १९७ ॥ उवाच ब्रह्मदत्तोऽथ, सुतस्नेहेन गद्गदम् । अकालो यतिधर्मस्य, शिख्याह न मृतेरिव ॥ १९८ ॥ तदा च ब्रह्म-
दत्तानुजीवी पिङ्गलनामकः । नास्तिकः प्रोचिवान्केन, कुमार ! त्वं प्रतारितः ॥ १९९ ॥ यन्नास्ति पञ्चभूतेभ्यो, जीवोऽन्यः

१ वशा० हस्तिनी ।

परलोकगः । तथाहि भूतसङ्घातो, मिलितो जीव इष्यते ॥२००॥ पृथग्भूतेषु तेष्वेव, नरो मृत इतीर्यते । देहादन्योऽस्ति
नैवात्मा, घटाच्चटकवद्भवे ॥२०१॥ परलोकं विना मिथ्याभिनिवेशमतिर्भवन् । त्यज भोगसुखं त्वं मा, चेतनं दर्शयाऽ-
थवा ॥२०२॥ यत्त्वयोक्तं मनुष्यत्वं, दुर्लभं तदसङ्गतम् । भूतसङ्घातलभ्येऽत्र, का नामाऽऽकुलता सताम् ॥२०३॥
यच्चोक्तं प्रियसंयोगा, न नित्यास्तदकारणम् । श्रमणत्वेऽपि ते यस्मान्न स्युर्नित्यत्वभाजनम् ॥२०४॥ यच्चोक्तं चञ्चला
लक्ष्म्यः, स्थिराः किं? श्रमणत्वतः । उपायेन तु रक्ष्यन्ते, दक्षतामक्षतां श्रितैः ॥२०५॥ यदुक्तं पुष्पसारं तु, यौवनं तत्र
युज्यते । कर्तुं रसायनं किं नु, श्रमणत्वे कृते भवेत् ॥२०६॥ यच्चोक्तं परलोकारिः, कामस्तदपि नोचितम् । न दत्ते दर्शनं
कश्चिद्यदेत्य परलोकतः ॥२०७॥ असन्नपि विकल्प्येत, परलोकः कथंचन । यदि नाम ततो लोकेऽतिप्रसङ्गः प्रजायते
॥२०८॥ दारुणा विषया यच्च, प्रोक्तं तदपि नोचितम् । विपाकदारुणस्तु स्यादाहारोऽपि कथंचन ॥२०९॥ मृगाः
सन्तीति किं नाम, नोप्यन्ते यववल्लयः । विपाकदारुणत्वं च, नोपायज्ञे नरे भवेत् ॥२१०॥ दुर्वारो मृत्युरित्युक्तं, यच्च
तद्बालभाषितम् । श्रमणेनापि मर्तव्यमेव पूर्णे निजायुषि ॥२११॥ न च मर्तव्यमस्तीति, श्मशाने वास इष्यते । न दुःख-
सेवया सौख्यं, परलोके च सत्यपि ॥२१२॥ सदाभ्यस्तं समभ्येति, सुखं हि सुखसेवया । अभ्यस्तस्य प्रकर्षो हि, लोके
दृष्टोऽन्यथा न तु ॥२१३॥ विरम त्वं तदेतस्माच्छ्रामण्यव्यवसायतः । शिखी प्रोवाच सर्वं तेऽनुचितं वचनं शृणु ॥२१४॥
अथवा युज्यते नैव, मम वक्तुं गुरोः पुरः । भगवानेव तत्सर्वमत्रादेशं प्रदास्यति ॥२१५॥ गुरुः प्राह महाविप्र!, शृणु
प्राग्यत्त्वयोदितम् । केन प्रतारितोऽस्येष, न केनापि प्रतारितः ॥२१६॥ किं तु जैनागमोद्भूतक्षयोपशमभावतः । भव-

स्त्वभावं विज्ञाय, विरक्तः स्वयमव्ययम् ॥२१७॥ यच्चोक्तं नास्ति भूतेभ्यो, जीवोऽन्यस्तदसङ्गतम् । अचेतनेभ्यो भूतेभ्य-
श्चेतनोत्पद्यते कुतः ॥२१८॥ यदत्र नास्ति प्रत्येकं, तद्गणेऽपि न तद्भवेत् । न तैलं पीडितासु स्यात्सिकतासु बहुष्वपि
॥२१९॥ अथ प्रत्येकमेतानि, चेतनानीति मन्यसे । तत्सिद्धं बहुचैतन्यसमुदायः पुमानिति ॥२२०॥ एकेन्द्रियास्तथा
जीवा, घटादीनां च चेतना । पटादीनां च चैतन्यं, न क्वाप्युपलभामहे ॥२२१॥ तस्मादन्योऽस्ति भूतेभ्यश्चेतनः परलो-
कगः । यच्चोक्तं भूतपार्थक्ये, नरो मृत इतीर्यते ॥२२२॥ तद्वाग्मात्रं हि जीवस्य, भूतपार्थक्यवृत्तितः । प्रत्यक्षलक्ष्यं
चैतन्यं, केन शक्यं निषेधितुम् ॥२२३॥ यदुक्तं दृश्यते देहादात्माऽन्यश्चेटवद् घटात् । भूतेभ्यश्चेतने भिन्ने, कथिते तन्नि-
षेधितम् ॥२२४॥ यच्चोक्तं परलोकस्याऽभावे मिथ्याभिमानतः । मा त्याक्षीर्भोगजं सौख्यमात्मानं दर्शयाऽथवा ॥२२५॥
शृणु तत्रापि चैतन्यसिद्धौ परभवोऽस्ति हि । तत्सिद्धौ स्यात्कथं मिथ्याभिनिवेशोऽस्य धीमतः ॥२२६॥ किंचैषु विषयेषु
स्यात्किं सुखं शिवशत्रुषु । पशूनामपि तुल्येषु, क्लेशायासघनेषु च ॥२२७॥ सूक्ष्मश्चानिन्द्रियश्चात्मा, तद्भिन्नोऽज्ञाश्च
दृश्यते । नित्यं पश्यन्ति तं सिद्धाः, केवलज्ञानिनस्तथा ॥२२८॥ स्मित्वाऽथ पिङ्गलः प्रोचे, सर्वं तेऽनुचितं वचः । अचे-
तनेषु भूतेषु, चेष्टा यानादिका कथम् ॥२२९॥ यन्नास्ति यत्र तत्तस्माद्भवेच्छृङ्गाच्छरो यथा । अदृश्यपरमाणुभ्यो, यथा
दृष्टं घटादि च ॥२३०॥ किंच प्रत्येकचैतन्ये, भूतानां बहुचेतनः । पुमानेकेन्द्रिया जीवा, घटादीनां च चेतना ॥२३१॥
यदुक्तं तन्न युक्तं यद्भूतानामेव चेतना । तथाविधपरीणामभावात्तस्य त्वभावतः ॥२३२॥ चेतना न घटादीनामित्युक्ते
गुरुरब्रवीत् । यत्त्वयोक्तं शरः शृङ्गात्सोऽपि कारणसन्निभः ॥२३३॥ सूक्ष्मत्वमसृणत्वादितत्तद्धर्मस्य सङ्क्रमात् । मन्यसेऽथ

विशेषोऽयं, न कश्चिदवधार्यते ॥२३४॥ नैवमन्यशरेभ्योऽयं, यद्दृढो मसृणस्तथा । यत्नः कार्यस्ततो बाढं, विशेषस्यात्र-धारणे ॥२३५॥ न भानोरपराधोऽयं, यद्गताक्षो न पश्यति । यच्च दृश्यं घटाद्युक्तमदृश्यपरमाणुतः ॥२३६॥ तन्नोचितं यतो योगिगोचराः परमाणवः । कार्यं च दृश्यते तेभ्यश्चेतना न त्वचेतनात् ॥२३७॥ सत्तया मन्यसे धर्मसंक्रमं चेन्न तद्वरम् । सर्वसाधारणत्वेन, सत्ता हि न नियामिका ॥२३८॥ परिणामं विना यच्च, घटादिषु न चेतना । यदुक्तं तत्र नैवास्ति, प्रमाणं शृणु यत्नतः ॥२३९॥ भूतव्रातपृथग्भूतपरिणामे त्वयाऽऽदृते । अपरेणाऽभिधानेनाऽङ्गीकृतो जीव एव हि ॥२४०॥ स मन्दाक्षं बभाषेऽथ, पिङ्गलो भगवन्यदि । अनिन्द्रियगुणो जीवो, भिन्नश्चास्ति शरीरतः ॥२४१॥ तन्मे पितामहः पाप्मा, मधुपिङ्गोऽभिधानतः । त्वन्मतान्नारकः किं मामेत्य बोधयते न सः ॥२४२॥ गुरुः प्राह यथा माप-राधः कारानियन्त्रितः । निजं न लभते द्रष्टुमपि किं शासितुं पुनः ॥२४३॥ नारकोऽपि तथा कर्मनिबद्धो नरके वसन् । निर्गन्तुमपि नो शक्तः, किं पुनः शासितुं सुतम् ॥२४४॥ पिङ्गलः प्राह यद्येवं, सोमपिङ्गः पिता मम । धार्मिकस्त्वन्म-ताद्देवः, किं मां बोधयते न सः ॥२४५॥ प्रभुः प्राह यथा कश्चिद्दुःस्थो देशान्तरं गतः । प्राप्तराज्यस्वपाकारिकुपुत्रस्य स्मरेन्न हि ॥२४६॥ तथाप्तदिव्यदेवर्द्धिर्मग्नचित्तः सुखाम्बुधौ । नायात्यप्यत्र दुर्गन्धिपृथ्व्यां शास्ति कथं ततः ॥२४७॥ पिङ्गलः प्रोचिवानस्ति, देही देहात्परो यदि । तत्किं निश्छिद्रकुम्भीस्थे, मृते स्तेने न वीक्षितः ॥२४८॥ गुरुणोक्तं धम-श्शङ्खं, सिंहद्वारस्थशाङ्खिकः । श्रुतो वासगृहे नद्धद्वारे पृष्टश्च भूभुजा ॥२४९॥ धमसि क्वेति तेनोक्ते. सत्ये कुम्भ्यां निवेश्य तम् । सर्वतो जतुनद्धायां, धमेत्युक्तस्तथा व्यधात् ॥२५०॥ यथा निश्छिद्रकुम्भीतः, शब्दो मूर्तोऽपि निर्गतः ।

अमूर्तोऽयं तथा जीवः, किमत्र तदसङ्गतम् ॥२५१॥ पिङ्गः प्राह पुरा स्तेनस्तुलायां तोलितः श्वसन् । मारितः श्वासरो-
धेन, पुनस्तौल्ये तथाविधः ॥२५२॥ गुरुः प्राह मरुत्पूर्णो, दृतिर्गोपेन तोलितः । रिक्तोऽपि तोलितस्तादृक्, तथा देहो
यथा दृतिः ॥२५३॥ पिङ्गलः प्राह चौरस्य, शरीरे तिलमात्रया । खण्डितेऽपि हि न क्वापि, दृष्टो जीवः कथंचन ॥२५४॥
गुरुः प्राहाऽरणेः काष्ठे, तिलशः खण्डितेऽपि हि । न दृष्टोऽग्निः स चेन्नास्ति कथमुत्पद्यते ततः ॥२५५॥ निरुत्तरत्वात्स-
व्रीडं, वीक्ष्य पिङ्गं गुरुर्जगौ । जीवोऽङ्गचेष्टया मान्यः, शाखाकम्पेन वायुवत् ॥२५६॥ स्पर्शनेन्द्रियतो वायुर्गृह्यतेऽत्र
यथा तथा । चित्तचैतन्यधर्मानुभवाज्जीवोऽपि गृह्यते ॥२५७॥ उक्तं च चित्तचैतन्यसंज्ञाविज्ञानधारणाः । ईहा मतिर्वि-
तर्कश्च, विज्ञेयं जीवलक्षणम् ॥२५८॥ ततोऽस्ति जीवः सत्यत्र, परलोकगमोद्यते । नैव भूतपरीणामाल्लभ्यते जन्म मानु-
षम् ॥२५९॥ यच्चोक्तं प्रियसंयोगा, अनित्यास्ते व्रतेऽपि हि । तन्न प्रियविकल्पोऽपि, साधूनां हृदये न यत् ॥२६०॥
यच्चोक्तं चञ्चला लक्ष्मीरुपायेनैव रक्ष्यते । तत्रापि रक्षणोपायो, नान्यो धर्ममृते मतः ॥२६१॥ यच्चोचे यौवने पुष्पसारे
युक्तं रसायनम् । तत्रापि परमार्थेन, धर्माज्ञान्यद्रसायनम् ॥२६२॥ जातिस्मृत्युपलम्भाद्यैः[2], परलोके सुसाधिते । युज्यते
परलोकारिः, काम इत्यादिकं वचः ॥२६३॥ दारुणा विषयास्त्याज्या, आहारोऽपीति नोचितम् । बन्धुत्यागे हि तेषां न,
दारुणत्वं प्रजायते ॥२६४॥ उक्तं यच्च व्रतेऽप्येष, दुर्वारः शमनो न तत् । व्रते भवक्षये जाते, मृत्युर्न प्रभवेद्यतः ॥२६५॥
उक्तं च तत्सुखं नैव, चक्रिणो न च वज्रिणः । इहैव त्यक्तसङ्गस्य, यत्सुखं जायते मुनेः ॥२६६॥ श्रुत्वेति ब्रह्मदत्तेना-

१ राज्ञा । २ उपलम्भ० अनुभव ।

ऽऽनन्दाश्रुप्लुतदृष्टिना । प्रभोः प्रपेदे सम्यक्त्वं, साल्हादेन सुतं प्रति ॥२६७॥ प्रभुः पिङ्गेन पृष्टश्च, विशेषं पुण्यपापयोः ।
आख्यत्प्रत्यक्षमेवेह, सुखिदुःखिविभागतः ॥२६८॥ एके हर्म्ये प्रियायुक्ताः, स्वर्णाभरणभूषिताः । कल्पद्रुवद्दरिद्राणां,
पूरयन्ति मनोरथान् ॥२६९॥ जीर्णकुट्यां परे जीर्णवाससो भैक्षभोजिनः । स्वकुक्षिमपि दुःखेन, पूरयन्ति परैर्धिताः
॥२७०॥ चक्रिणो वज्रिणस्तीर्थंकराः पुण्यानुभावतः । कुमर्त्यतिर्यग्दौर्गत्यभाजः पापप्रभावतः ॥२७१॥ पुण्यस्य हेतवः
पञ्चव्रती रात्रावभोजनम् । रागादिविजयश्चैतद्विलोमं विद्धि पाप्मनः ॥२७२॥ श्रुत्वेति ब्रह्मदत्तेन, समं पिङ्गोऽप्युपाददे ।
सम्यक्त्वमूलां भावेन, श्रावकद्वादशव्रतीम् ॥२७३॥ ऊचे च ब्रह्मदत्तेन, शिखी मम सुतः प्रभो ! । धन्येऽध्वनि चर-
न्धन्यः, प्रकामं मत एव मे ॥२७४॥ परं किमस्य योग्योऽयं, यतिमार्गस्य विद्यते । प्रभुः प्राह शिरोयोग्यं, रत्नं रत्नाक-
रोद्भवम् ॥२७५॥ श्रुत्वेति स मुदा ब्रह्मदत्तेनानुमतः शिखी । तं नत्वोवाच ताताऽनुगृहीतोऽस्मि त्वयाऽधिकम् ॥२७६॥
ततो नत्वा गुरुं गत्वा, पुरे दत्त्वा च दुःस्थिते । दानमाघोषणापूर्वं, कृत्वा चैत्येषु चोत्सवम् ॥२७७॥ शुभे मुहूर्ते मूर्त-
श्रीर्नृपनागरकावृतः । नदद्भिर्मङ्गलातोद्यैरारूढः शिविकां शुभाम् ॥२७८॥ सदुःखं पौरनारीभिरीक्ष्यमाणः क्षमानिधिः ।
विबुधैः शस्यमानश्च, दददानमवारितम् ॥२७९॥ शिखी समेत्य गुर्वन्ते, याप्ययानादऽव[illegible] । अवन्दत च सानन्दः,
पूज्यपादानुदारधीः ॥२८०॥ [ कलापकम् ] दीक्षितो विधिना सामायिकोच्चारणपूर्वकम् । शिखी शिखां निरु[illegible],
गुरुणा करुणावता ॥२८१॥ यच्चाभिनन्दनं तातपौरभूपतिनिर्मितम् । तद् व्रता[illegible]दूर्ध्वं, शिखेव शिखिनोऽभवत्

१ वाससः । २ याप्ययान० पालखी इति प्रसिद्धा ।

॥ २८२ ॥ दिनैः कतिपयैः पूर्णे, मासकल्प ऋषिः शिखी । समं विजयसिंहेन, सूरिणा व्यहरद्भुवि ॥ २८३ ॥ घनागमं समा-
साद्य, मुमुदे यदयं शिखी । तत्समञ्जसमेवाभूत्स हि तस्याऽतिवल्लभः ॥ २८४ ॥ कर्मेन्धनं तपोज्वालामालाभिरनिशं दहन् ।
शमप्राज्यः शिखी युक्तमदीपिष्टाऽधिकाधिकम् ॥ २८५ ॥ इतश्च जालिनी जातानुतापा हृद्यचिन्तयत् । नेदं भव्यमभूदेष,
यदव्यापादितो गतः ॥ २८६ ॥ तस्मान्मृदुवचःपूर्वं, प्राभृतं प्रेष्य किंचन । इहाऽऽहूय च सौख्येन, प्रीता व्यापादयामि
तम् ॥ २८७ ॥ इति ध्यात्वाऽर्पयित्वा च, प्राभृते रत्नकम्बलम् । सोमदेवाभिधो विप्रस्तया प्रैषि सुतान्तिके ॥ २८८ ॥ स
पृच्छन्देशविख्याताचार्यवृत्तान्तमागमत् । तामलिप्त्यामपश्यच्च, शिखिनं श्रमणोत्तमम् ॥ २८९ ॥ सूत्रार्थमनुजल्पन्तं साधूना
वीक्ष्य तं द्विजः । ननाम प्रत्यभिज्ञाय, पृष्टस्तेन कुतो भवान् ? ॥ २९० ॥ स प्राह कोशादायातस्त्वन्मात्रा सानुतापया ।
प्रहितस्त्वत्प्रवृत्त्यर्थं, मातृवत्सलताजुषा ॥ २९१ ॥ किमर्थमनुतापोऽयं, मातुरित्थं शिखीरिते । स प्राह यत्परिव्रज्या. भगव-
न्भवताऽऽददे ॥२९२॥ दध्यौ शिखिमुनिः स्नेहकातरं जननीमनः । भवेच्च परमार्थस्य, प्रेक्षकं प्रायशो न हि ॥२९३॥ दुष्प्र-
तीकारता चैषां, पितृणां कथिता श्रुते । ध्यात्वेत्याह द्विजं नाहं, मातृनिर्वेदतो व्रती ॥ २९४ ॥ भवनिर्वेदतो जज्ञे. वृथाऽम्बा
परितप्यते । सोमदेवोऽवददेव !, त्वन्मातेति दिदेश च ॥ २९५ ॥ चञ्चलो मत्सरी तुच्छहृदयो निर्विवेककः । स्त्रीजनोऽनु-
शयी पश्चादसद्ग्राह्यविमर्शकः ॥ २९६ ॥ विमृष्टकारी गम्भीरः, कृतज्ञो विनयी स्थिरः । भवेद् दृढानुरागश्च, दीर्घदर्शी च
पूरुषः ॥ २९७ ॥ अज्ञात्वा हृदयं तन्मे, तदिदं विदधे त्वया । किं चाहमेकदा प्रेक्ष्या, निर्ममेणाऽपि हि त्वया ॥ २९८ ॥ इद
कम्बलरत्नं चाऽऽवश्यं ग्राह्यं सुतेन मे । शिख्याह सोमदेवाऽम्बा, वृथैव परितप्यते ॥ २९९ ॥ किं चावश्यमहं प्रेक्ष्या

ग्राह्योऽयं रत्नकम्बलः । सर्वत्र गुर्वधीनस्य, प्रमाणं गुरवो हि मे ॥ ३०० ॥ सर्वं भगवते तस्मात्सोमदेव ! निवेदय । इत्युक्तोऽयं गुरुं नत्वा, सर्वमेव न्यवेदयत् ॥ ३०१ ॥ कुमारबहुमानेन, गृहीत्वा रत्नकम्बलम् । श्रुते समासे शिखिनं, प्रहेष्यास्यवदद्गुरुः ॥३०२॥ सोमदेवो जगादाऽनुगृहीताऽस्य जनन्यलम् । दिनान्कतिपयान्स्थित्वा, स त्वगान्नगरे निजे ॥३०३॥ कियत्यपि गते काले, ब्रह्मदत्तं दिवं गतम् । श्रुत्वा गुरुभिराख्याय, वृत्तान्तं वृद्धसाधुयुक् ॥ ३०४ ॥ प्रेषितः स्वजनालोकनिमित्तं श्रमणः शिखी । स्थितो मेघवनोद्याने, ज्ञातश्च नृपनागरैः ॥ ३०५ ॥ [ युग्मम् ] तैरेत्य वन्दितः श्रद्धाभरप्रणतमस्तकैः । आक्षेपण्यादिकां कुर्वन्कथामावर्जयच्च तान् ॥३०६॥ द्वितीयदिवसे गत्वा, वेश्मन्यम्बां ददर्श सः । ब्रह्मदत्तमृतेः क्षीणविभवां दीनमानसाम् ॥३०७॥ तेनोपलक्षिता नेयं, स तया तूपलक्षितः । प्रवृत्ता रोदितुं ज्ञात्वाऽऽश्वासिता शिखिनेति च ॥३०८॥ अर्थेन विक्रमेणापि, सैन्येन स्वजनेन च । न धर्तुं शक्यते मातर्मृत्युर्देवासुरैरपि ॥३०९॥ अयं व्याधिजरादंष्ट्रः, स्फुटव्यसनपाणिजः । हिंसञ्जीवमृगान्मृत्युमृगेन्द्रः केन रक्ष्यते ॥३१०॥ निर्दयोऽयं दृढप्रेम्णो, वियोजयति देहिनः । अनार्यः प्रेक्षते कार्यस्याऽऽयतिं मत्तवन्न च ॥ ३११ ॥ मृत्युनाऽभिद्रुतानां हि, जीवानां नास्ति किंचन । त्रिजगत्यामपि त्राणं, हित्वा धर्मामृतं परम् ॥३१२॥ तद्युज्यते तवाप्यम्ब !, त्यक्त्वा मोहमहाविषम् । धर्मामृतमिदं पातुमत्यन्तसुखकारणम् ॥ ३१३ ॥ सदम्भया स निर्दम्भस्तयोचे जात ! देहि मे । गृहस्थत्वोचितं धर्मं, यतिधर्मे तु न क्षमा ॥ ३१४ ॥ छद्मस्थत्वादविज्ञाततद्दम्भः श्रमणः शिखी । सम्यक्त्वमूलां पञ्चाणुव्रतीमाख्यत विस्तरात् ॥ ३१५ ॥ तद्व्यापादनविश्वासहेतवे च तयाऽऽददे । सा पञ्चाणुव्रती शुद्धचित्तयेव विचित्तया ॥३१६॥ अथ गन्तुं प्रवृत्तः सञ्जालिन्या जल्पितः शिखी । वत्साऽद्यात्रैव भोक्तव्यं, स प्राहाऽम्ब ! न कल्पते

॥२१७॥ धर्मं दिगलयं नित्यं, तदग्रे सा तु तद्वधे । ध्यायत्युपायाञ्जन्तूनां, ही चित्राश्चित्तवृत्तयः ॥२१८॥ अन्यदा च चतुर्दश्यां, मत्वा साधूनुपोषितान् । सा दध्यौ यदि कल्येऽसौ, न हतस्तर्हि यास्यति ॥२१९॥ प्रातः कसारं तत्पक्त्वा, कृत्वा च विषमोदकम् । दत्त्वा कसारं साधुभ्यो, ददेऽस्य विषमोदकम् ॥२२०॥ ध्यात्वेति तत्तथा कृत्वा, गतोद्याने दिवामुखे । शिखिनोक्ता किमम्बेदमादायाऽकल्प्यमागता ॥२२१॥ सा प्राह वत्स! पुण्येच्छुर्भोजनं भवतां कृते । आगतास्मि गृहीत्वाऽहं, शिख्यूचेऽनुचितं ह्यदः ॥२२२॥ अनाचारो हि साधूनामाधाकर्माहृतादने । सा प्राह नान्यथा चित्तनिर्वृतिर्मम जायते ॥२२३॥ मन्येऽहं निष्फलं जातागमनं भोजनं विना । तदद्भुतं कार्यमित्युक्त्वा, पपात शिखिपादयोः ॥२२४॥ दध्यावृजुः शिखी धर्मश्रद्धा स्नेहश्च कीदृशः । तन्मा विपरिणामोऽभूद्ध्यात्वेत्यूचे स जालिनीम् ॥२२५॥ न कार्यः पुनरारम्भस्तयोचे वत्स! निश्चितम् । शिख्याह तन्मुनेरस्य हस्ते भोजनमर्पय ॥२२६॥ तयोचे मे स्वहस्तेन, भोजिते त्वयि निर्वृतिः । तेनोचे पूर्यतां प्रत्याख्यानवेलेति सा स्थिता ॥२२७॥ तयाऽथ सर्वसाधुभ्यः, कसारः परिवेषितः । निदानवशतस्त्वस्य, शिखिनो विषमोदकः ॥२२८॥ जालिन्यथ गता शीघ्रं, मूर्च्छितस्तु शिखी क्षणात् । सुस्थान्प्रेक्ष्य मुनीन्न स्वं, विषावेगं जजल्प सः ॥२२९॥ भूपृष्ठे लुठिते तत्र, दध्युः साधव आकुलाः । अकार्यं किमिदं हा! धिग्, जनन्या विहितं भवेत् ॥२३०॥ जनेन व्यसने माता, स्मर्यते देवतेव या । तस्याश्चेद्व्यसनं पुत्रे, का तत्र परिदेवना ॥२३१॥ शिखी त्वनशनं कृत्वा, दध्याविति हहा!! मया । माता निस्तारिता नैव, भवे प्रत्युत मज्जिता ॥२३२॥ अविद्यमानमप्यस्या, वक्ष्यत्यपयशो जनः । न शोच्येयमथ प्राप्तजिनधर्मा जनन्यपि ॥२३३॥ ध्यायाम्यथ महामन्त्रं, पञ्चानां परमेष्ठिनाम् । नमस्कारं

परं तत्त्वं, चिन्तया मे किमन्यया ॥ २३४ ॥ ध्यायन्पञ्चनमस्कृतिं सुविशदं भावं दधन्मानसे, पञ्चत्वं समवाप्य पञ्चमदिवि श्रीब्रह्मदत्ताङ्गजः । लक्ष्मीरत्यभिधे विमानतिलकेऽभूदिन्द्रसामानिको, गीर्वाणो नवसागरायुरसमज्योतिर्भरैर्भासुरः ॥ २३५ ॥ जालिन्यपि समालिन्यमानसामानशात्रवा । सुतेऽजनि द्वितीयस्यां, त्र्यब्ध्यायुर्नारको भुवि ॥ २३६ ॥ इति श्रीहरिभद्रोक्त्या, प्रद्युम्नाचार्यगुम्फिते । समरादित्यसंक्षेपे, तार्तीयीको भवोऽभवत् ॥ २३७ ॥

## [ अथ चतुर्थो भवः ]

अत्रैव जम्बूद्वीपेऽस्ति, क्षेत्रे भरतनामनि । सुशर्मजनसंपूर्णं, श्रीसुशर्मपुरं पुरम् ॥ १ ॥ मत्वा जनं परानर्थविमुखं देवदीर्घिका । पावित्र्यादानबुद्ध्या यदध्यास्ते कल्किकल्किता[1] ॥ २ ॥ खरायुधोऽप्यरीभाणां, मथने नखरायुधः[2] तत्रास्ति सुधनुर्भूपो, धनुर्वद्गुणसङ्गतः ॥ ३ ॥ यद्यशोघनसारस्य[3], मिलितं वैरिदुर्यशः । रोदःसमुद्गे[4] स्थैर्याय, कृष्णाङ्गारनिभं बभौ ॥ ४ ॥ तस्याऽस्ति सम्मतः सार्थवाहो वैश्रवणाभिधः । वासवस्येव यः स्थाणुरुत्तरस्यां सदा दिशि ॥ ५ ॥ हृषीकेशस्य[5] तस्याऽस्ति, श्रीदेवीव स्वरूपतः । समानकुलशीलाढ्या, श्रीदेवी नामतः प्रिया ॥ ६ ॥ तयोः परस्परस्नेहप्राप्तसंसारसारयोः । कियानपि गतः कालो, विषयाणां निषेवणात् ॥ ७ ॥ ताभ्यामथाऽनपत्याभ्यां, तत्पुरासन्नवासिनः । धनदेवाख्ययक्षस्य, पूजां कृत्वो-

---

१ पापिता पिता । २ सिंहः । ३ घनसार० कर्पूर । ४ द्यावाभूमिसम्पुटे । ५ कृष्णस्य ।

पयाचितम् ॥ ८ ॥ भगवन्यदि नौ पुत्रस्त्वत्प्रभावाद्भविष्यति । ततो महामहं कृत्वोत्क्षेप्स्यावस्तस्य नाम ते ॥ ९ ॥ अन्यदा शिखिनो जन्तुर्ब्रह्मलोकात्परिच्युतः । श्रीदेव्याः कुक्षिमध्यास्त, दृष्टः स्वप्ने तया निशि ॥ १० ॥ उन्नतः शुभरुग्लीलागामी दानप्रवृत्तिमान् । रोलम्बरोलं[1] बिभ्राणश्चतुर्दशनभासुरः ॥ ११ ॥ आरक्ततालुरुत्तालशोणचामरमण्डितः । सुवर्णशृङ्खलानद्धघण्टामालाविभूषितः ॥ १२ ॥ कुम्भन्यस्तसृणिर्घूर्णमानचारुविलोचनः । प्रविशन्नुदरे मत्तो, हस्ती वदनवर्त्मना ॥ १३ ॥ [कलापकम्] तया विबुद्धयाऽऽख्यायि, दयिताय स चाऽवदत् । वणिङ्नगरनेता ते, भविता नन्दनः प्रिये ! ॥ १४ ॥ हृष्टा त्रिवर्गसंपत्तिरता पूर्णमनोरथा । समये प्रसवस्यैषा, सुषुवे सुतमद्भुतम् ॥ १५ ॥ परितोषाख्यया चेट्याऽऽख्याते सपरितोषया । परितोषयुतस्तस्यै, श्रेष्ठ्यदात्पारितोषिकम् ॥१६॥ दापितेऽथ महादाने, कारिते च महोत्सवे । मासेऽतीते युतः पौरैः[2], श्रेष्ठी यक्षालये ययौ ॥ १७ ॥ पूजां विधाय यक्षस्य, पातयित्वा पदोः सुतम् । यक्षनाम्ना सुतस्यैष, धन इत्यभिधां व्यधात् ॥ १८ ॥ स बभूव युवेतश्च, जालिनीजीवनारकः । उद्वृत्य नरकाक्रान्त्वा, भवं तत्रैव पत्तने ॥ १९ ॥ श्रेष्ठिनः पूर्णभद्रस्य, गोमत्यां तनयाऽजनि । धनश्रीरिति नाम्ना सा, क्रमादाप च यौवनम् ॥२०॥ [युग्मम्] अष्टमीचन्द्रभालाऽथाऽष्टमीचन्द्रमहोत्सवे । यान्ती लीलागृहोद्यानाद्गृहं दृष्टा धनेन सा ॥ २१ ॥ सखीजनवृतामिन्दुलेखामिव सतारिकाम् । धनस्तां प्राग्भवाभ्यस्तमैत्र्या चिरमलोकत ॥ २२ ॥ तयाऽपि प्राग्भवाभ्यस्तमत्सरात्स निरीक्षितः । पुरोहितसुतः सोमदेवो वेद धनाशयम् ॥ २३ ॥ मत्वा वैश्रवणेनाऽस्माद्याचिता पूर्णभद्रतः । धनश्रीस्तेन दत्ताऽस्मै, ज्ञातं ताभ्यां मिथोऽपि तत् ॥ २४ ॥ परितुष्टो

---

१ भ्रमरशब्दम् । २ सृणि० अङ्कुश ।

धनश्चित्ते धनश्रीर्व्यथिता पुनः । महर्द्ध्या तु तयोर्वृत्त, उपयाममहोत्सवः ॥२५॥ कियत्यपि गते काले, धनश्रीर्द्वेषिणी धने । तस्यैव गृहदासेन, नन्दकाख्येन सङ्गता ॥२६॥ अग्निशर्मतपस्वित्वे, स ह्यस्याः परमः सुहृत् । सङ्गमाख्यः कुलपतेर्बभूव परिचारकः ॥२७॥ ततो विडम्बनाप्रायं, भोगसौख्यं तया समम् । भुञ्जानस्य धनस्याऽस्य गतः कालः कियानपि ॥२८॥ अथ द्विधास्तपक्षेषु, मेघमित्रेषु पक्षिषु । हसन्निव समैत् कासकुसुमैर्जलदात्ययः ॥२९॥ स्मेराम्भोजाक्षिषु ध्वानिभृङ्गस्वागतवाचिषु । सरस्स्वच्छाम्बुचित्तेषु, यत्र हंसैः समागतम् ॥३०॥ लोलकल्लोलमालाभिः, प्रसारितभुजैरिव । चक्रेऽभ्यागतहंसानां, सरोभिरभिवादनम् ॥३१॥ भृङ्गीगीतिनदद्वीचिवाद्यनृत्यत्सरोरुहैः । सरोभिर्विदधे साधु, हंसागममहामहः ॥३२॥ अभ्राणि यत्र शुभ्राणि, हित्वाऽम्बु लवणाम्बुधेः । पीतक्षीरोदवारीणि, विभान्तीव मनीषिणाम् ॥३३॥ रुग्णानि यत्र दृश्यन्ते, वनानि मदवारणैः । सप्तच्छदानां कृष्णालिकुलरोपवशादिव ॥३४॥ एवंविधे शरत्काले, कार्त्तिकीपूर्णिमामहे । दृष्टः समृद्धदत्ताख्यः, सार्थवाहस्य नन्दनः ॥३५॥ वास्तव्यो नगरेऽत्रैव, स्वभुजोपार्जितैर्धनैः । दीनादीनां ददद्दानं, दानशौण्डोऽनिवारितम् ॥३६॥ [युग्मम्] दध्यौ धनोऽथ धन्योऽयं, स्वभुजोपात्तवित्तदः । इति ध्यायन्नयं जज्ञे, सुमना अपि दुर्मनाः ॥३७॥ नन्दकस्तस्य नेदीयाञ्ज्ञात्वा भावमभाषत । सार्थेशपुत्र ! कस्मात्त्वं, विमना इव दृश्यसे ॥३८॥ धनेनाऽथ निजाकूते, कथिते प्राह नन्दकः । तवाप्यस्ति बहु द्रव्यं, देहि तस्मादितोऽधिकम् ॥३९॥ धनः प्राह किमेतेन, पूर्वजोपार्जितेन मे । स एव हि नरः श्लाघ्यो, यो दत्ते स्वार्जितं धनम् ॥४०॥ तद्विज्ञपय तातं मे, यथा पूर्वजसेवितम् ।

१ उपयाम० विवाह । २ दासः । ३ मयूरेषु । ४ शरत्कालः । ५ मग्नानि । ६ वृक्षविशेषाणाम् ।

अहं करोमि वाणिज्यं, समयोऽर्थस्य यौवने ॥ ४१ ॥ श्रेष्ठी तेनेति विज्ञप्तस्तं प्रोचे वद नन्दनम् । त्रिवर्गमूलं वह्वस्ति, पूर्वजोपार्जितं धनम् ॥ ४२ ॥ नन्दकः प्राह चैतस्य, नान्यथा जायते धृतिः । सार्थेशः प्राह तर्ह्येवमस्तु तस्य धृतेः कृते ॥ ४३ ॥ कथिते नन्दकेनेति, धनस्तोषादघोषयत् । इतः पुराद्धनो याता, ताम्रलिप्त्यां वाणिज्यया ॥ ४४ ॥ यः कोपि तत्र गन्तास्ति, स समेतु समीहितम् । यद्यस्य नास्ति तत्तस्य, पाथेयादि प्रदास्यति ॥ ४५ ॥ [ युग्मम् ] यानप[illegible] निजं च प्रगुणं व्यधात् । अथ दध्यौ धनश्रीर्यद्भविता सुन्दरं परम् ॥४६॥ प्रवासेऽस्य गताऽऽनन्दो, नन्दको [illegible] नन्दकः सह यातेति, तयाऽऽसन्नदिने श्रुतम् ॥४७॥ [ युग्मम् ] ततो दम्भाद्धनं प्राहाऽऽमेदुरं । प्रस्थितो भवान् [illegible] कृत्यं मम तेनोक्तं, गुरूणां पर्युपासना ॥ ४८ ॥ साश्रुः सा कैतवादूचे, गुरवो हृदये मम । यदि [illegible] प्राणान्हास्याम्यहं तदा ॥ ४९ ॥ उक्त्वेत्यस्यां रुदत्यां, द्राग्धनमाता समागता । मातुरभ्युत्थिते पुत्रे, धनश्रीर्निर्ययौ गृहात् ॥ ५० ॥ मात्राऽज्ञायि तदाऽऽकूतमथ, पुत्रोऽनुशासितः । वत्स! देशान्तरं दीर्घं, दुर्लभः सङ्गमः पुनः ॥ ५१ ॥ अर्थार्जने न सक्लेशं, तन्मूलमविषण्णता । गुणगुण्योऽसि यत्नस्तु, बाढं कार्यः क्षमादिषु ॥ ५२ ॥ प्रवृत्तिर्मे सदा ज्ञाप्या, यत्नः कार्यः शरीरके । विनयानम्रगात्रोऽथ, धनः प्राह तथेति ताम् ॥ ५३ ॥ श्रीदेव्यथ गृहे गत्वा, वधूमातरमूचुषी । धनेन सह गच्छन्तीमनुजानीहि नन्दनाम् ॥ ५४ ॥ साथ सुन्दरमित्युक्त्वा, तां संवाह्य व्यसर्जयत् । तद्विसृष्टाथ हृष्टा साऽचलत्सार्थश्च वर्त्मनि ॥ ५५ ॥ मासद्वयप्रयाणेन, ताम्रलिप्तीमवाप्तवान् । धनोऽपश्यन्नृपं तेन, वस्त्राद्यैर्बहुमानितः ॥ ५६ ॥ भाण्डं नियोजयल्लॉभं, यथेष्टमनवाप्य सः । दध्यौ कथमसंपूर्णकामो यामि निजं गृहम् ॥ ५७ ॥ तरामि सागरं तस्मान्नान्यथा प्रचुराः

श्रियः । तेनेति मन्त्रितं सार्धं, कान्तया नन्दकेन च ॥५८॥ तदा मज्जनवेलायां, जरच्चीरान्तरीयवान् । आपाण्डुरकरो घृष्टनखस्ताम्बूलचर्वकः ॥५९॥ प्रम्लानपुष्पधम्मिल्लस्त्रस्तः कितवबृन्दतः । पृष्ठं विलोकयन्भीतो, द्यूतकारः समागमत् ॥६०॥ [ युग्मम् ] ऊचे च रक्ष मामेभ्यो, धनः प्रोवाच के त्विमे । निजं दुश्चेष्टितं वक्तुं, न शक्तोऽस्मीति सोऽवदत्॥६१॥ कुलीनोऽयमिति ध्यात्वा, धनः प्राह भवेऽत्र हि । स्खलितं कस्य नायाति, ततः कथय कारणम् ॥६२॥ स प्राहाऽहं वणिक्पाशो, लोकद्वयविरुद्धकृत् । उत्पन्नो रुद्रदेवस्य, कुलेऽपि कुलपांसनः ॥६३॥ ह्री महेश्वरदत्ताख्यः, पुरा पुष्पपुराश्रयः । द्यूतेन विश्वनिन्द्येन, स्वजनेभ्यः कृतो वहिः ॥६४॥ [ युग्मम् ] धनो दध्यौ विवेकेन, ध्रुवमेष महामनाः । यदात्मदुष्कृतं वेत्ति, सानुतापश्च चेतसि ॥६५॥ पृष्टे धनेन किं कुर्वे, तवेत्यस्मिन्नवाङ्मुखे । प्रेषितो नन्दकः पृच्छ, कितवान्किं धरत्ययम् ॥६६॥ तैरुक्तान्षोडश स्वर्णान्दापयामासिवान्धनः । अथ संस्नाप्य तं क्षौमयुगलं पर्यधापयत् ॥६७॥ ऊचे भुक्तोत्तरं किं? ते, द्यूतेन धनमर्पये । व्यवसायं कुरु द्यूतं, लोकद्वयविरोधि यत् ॥६८॥ सोऽथ दध्यावधन्योऽहं, यतो वात्सल्यतो वदन् । अयं हि रुद्रदेवस्य, पितुस्तुल्योऽहमीदृशः ॥६९॥ न तथा लाघवं लोके, नरस्याऽनुपकुर्वतः । क्रियमाणोपकारस्य, यथान्येन कृपावता ॥७०॥ ततः पौरुषमालम्ब्य, कुर्वे पितृकुलोचितम् । कथंचिदात्मनः प्राच्यं, वाँच्यमुत्तारयामि च ॥७१॥ [ युग्मम् ] ध्यात्वेत्युवाच धन्योऽस्मि, यत्तवाऽजनि दर्शनम् । द्यूतकृत्त्वं मया त्यक्तमाद्द तं पुरुषव्रतम् ॥७२॥ ह्रीणोऽस्मि स्वचरित्रेणाऽपवित्रेणाऽमुनाऽधुना । किं बहूक्तैः करिष्यामि, सफलं ते परिश्रमम् ॥ ७३ ॥

१ जीर्णवस्त्रावृतः । २ कितव० द्यूतकृत् । ३ पांसन० दूषक । ४ धूलकलङ्कम् ।

ध्यायंश्च निश्चिकायैकं, धर्मं लोकद्वये हितम् ॥७४॥ अथ योगीश्वराभिख्यमहान्न-
नदनिति तदावाराननगर्याश्च विनिर्ययौ । ध्यायंश्च निश्चिकायैकं, धर्मं लोकद्वये हितम् ॥७४॥ अथ योगीश्वराभिख्यमहान्न-
तभृतोऽन्तिके । दीक्षा जनकमित्रस्य, जगृहे धर्मसाग्रहः ॥७५॥ इतश्च कथिताकूतं, धनश्रीनन्दकौ धनम् । ऊचतुः कुरु-
तापार्यौ, रुचितं निजचेतसः ॥७६॥ भाण्डे च वहने चापि, सज्जिते परतीरगे । धनश्रीर्नन्दकं प्राह, किं वार्धितरणेन
नौ ॥७७॥ व्यापाद्याऽमुं धनं लात्वा, गच्छावोऽन्यत्र सोऽवदत् । स्वाम्येष न खलु द्रोहः, स्वप्नेऽप्यस्य विचिन्त्यते ॥७८॥
इत्युक्त्वा सा स्वयं नागदत्ताप्रव्राजिकान्तिकात् । आतङ्ककारकं तस्य, योगमात्मकरेऽकरोत् ॥७९॥ धनस्तु सुदिने दीना-
दीना दत्त्वा धनं मुदा । पूजयित्वाऽम्बुधिं पोतमारोहत्सपरिच्छदः ॥८०॥ ततः पवनवेगेन, पोते गच्छति वारिधौ । दत्तः
प्राग्वर्णितो योगो, धनस्याऽथ धनश्रिया ॥८१॥ सोऽभूत्तस्याऽनुभावेन, शुष्कबाहुर्महोदरः । उच्छूनवदनस्त्यक्तः, क्षुधा
सम्बाधितस्तृपा ॥८२॥ दध्यौ धनो विषण्णः सन्किं पतामि महोदधौ । एवं कृते हि दुःखं स्यादनयोर्भृत्यभार्ययोः ॥८३॥
जनन्या शिक्षितश्चासि, यच्चाव्यमविषादिना । प्रत्यासन्नं च तत्कूलं, यस्मिञ्जिगमिषा मम ॥८४॥ पुनश्च किंचिन्निश्चित्य,
धनो नन्दकमूचिवान् । कर्मणः परिणामेन, ममाऽवस्थेयमीदृशी ॥८५॥ निकटं च तटं स्वामी, स्वस्य तत्त्वं भवाऽधुना ।
मय्युत्तीर्णेऽम्बुधिं कुर्या, यथोचितमुपक्रमम् ॥८६॥ अपैति यदि रोगो मे, ततः सुन्दरमन्यथा । तातस्य सुकृतं भ्रातृ-
स्नेहं च मयि बिभ्रता ॥८७॥ असौ पित्रन्तिकं प्राप्या, धनश्रीर्भर्तृवत्सला । प्रिये ! पापं विना सोऽयं, द्रष्टव्योऽहमिव त्वया
॥८८॥ [ कलापकम् ] भृत्यस्तदाऽरुदद्दुःखाद्धनश्रीरपि कैतवात् । कृत्यं कालोचितं कृत्यमित्युक्त्वा तेन बोधितौ ॥८९॥

१ औषधम् । २ उच्छून० शोफ । ३ रोगनिवारणोपायम् ।

द्वीपं महाकटाहाख्यं, प्राप्तानां नन्दको नृपम् । ददर्श धाम्नि तद्वृत्तेऽस्थाच्च वैद्यानुपानयत् ॥ ९० ॥ अजाते च प्रतीकारे, नन्दकः स्वपुरोत्सुकः । भाण्डं विक्रीय तत्रत्यं, गृहीत्वा चाऽचलद् द्रुतम् ॥ ९१ ॥ सज्जिते वहने वीक्ष्य, नृपं तेन प्रपूजितः । गन्तुं प्रवृत्तः स्वं देशं, विधित्सुर्नीरुजं धनम् ॥ ९२ ॥ अथ दध्यौ धनश्रीर्न, विपन्नोऽयं रिपुर्मम । तत्क्षिपामि महाम्भोधौ, कायचिन्तास्थितं रयात् ॥ ९३ ॥ ध्यात्वेति तत्तथा कृत्वा, चक्रे हाहारवं ततः । किमिदं स्वामिनि ! प्रोचे, नन्दकः सा निजां तनुम् ॥ ९४ ॥ अधिकं ताडयन्ती हा !, नाथ ! नाथ ! वदन्त्यलम् । पोतान्तर्न्यपतच्चित्तजाताशङ्कोऽथ नन्दकः ॥ ९५ ॥ शय्यां वीक्ष्य तमप्रेक्ष्य, पुनरूचे सगद्गदम् । किमिदं स्वामिनि ! प्राह, साऽम्भोधौ न्यपतद्धनः ॥ ९६ ॥ [ विशेषकम् ] साश्रुः श्रुत्वेदमम्भोधौ, नन्दको निपतन्ननु । धृतः परिजनेनाऽलं, तं सर्वत्राऽगवेषयत् ॥ ९७ ॥ तमप्राप्य सदुःखः सन्प्रवृत्तो देशसंमुखः । धनः फलकमेकं तु, जीवितव्यामिवाऽऽसदत् ॥ ९८ ॥ नीराधिं सप्तरात्रेणोत्तीर्य तीरमुपागतः । शरीरे क्षारपानीयसेवया विगतामयः ॥ ९९ ॥ पुनर्जातमिवात्मानं, ध्यायंस्तिमिरशाखिनः[1] । पार्श्वे निविष्टो दध्यौ स, स्त्रीवर्गे कैतवं कियत् ॥ १०० ॥ अहो तस्या नृशंसत्वमहो वैरं ममोपरि । को हेतुर्निर्विवेके वा, स्त्रीजने किं स चिन्त्यते ॥ १०१ ॥ स्त्री ह्यलीकच्छलापायदोषसाहसमन्दिरम् । अर्गला कुशलद्वारे, सोपानं नरकाध्वनि ॥ १०२ ॥ तदस्तु वस्तुनश्चिन्ताऽतीतस्य हि न युज्यते । ध्यात्वेत्युत्थाय भूभागं, गतः स्तोकमशोकहृत् ॥ १०३ ॥ [ कलापकम् ] दृष्टा च तेन श्रावस्तीनृपपुत्र्याः परैधिता[2] । पोतभङ्गे मृता तीरे, क्षिप्ता नीरधिवीचिभिः ॥ १०४ ॥ तदुपान्ते च तद्वस्त्रबद्धा रत्नावली शुभा । नाम्ना त्रैलो-

१ तन्नाम्नो वृक्षविशेषस्य । २ दासी ।

न्यसारेति, व्यलोक्यत महाद्युतिः ॥ १०५ ॥ तां गृहीत्वा स्वदेशाभिमुखं तेन यियासता । दृष्टः स द्यूतकृत्तत्र, वसन्नात्तमहाव्रतः ॥ १०६ ॥ धनेन प्रत्यभिज्ञातः, स प्राह त्वं कुतो धन! । कथं चेदृगवस्था ते, सोऽवोचत्पोतभङ्गतः ॥ १०७ ॥ ऋषिराह यथा क्षीणः, शशी पूर्णः पुनर्भवेत् । तथा त्वमपि मन्येऽहं, पुनर्लक्ष्मीमवाप्स्यसि ॥ १०८ ॥ उपकारकरी चैषा, विपन्निकषलाभतः । सदसद्रक्तविरक्तसत्त्वनिःसत्त्वताजुषाम् ॥ १०९ ॥ विनाग्निं गन्धमाहात्म्यं, न हि कृष्णागुरोर्यथा । सात्त्विकस्य तथा पुंसो, दुस्तरामापदं विना ॥ ११० ॥ अधुना त्यक्तसङ्गोऽहं किं तवोपकरोमि तत् । तथाप्यधीतसिद्धं मे, मन्त्रमादत्स्व गारुडम् ॥ १११ ॥ असंस्तुत[1]मिमं जानन्मन्त्रं जग्राह नो धनः । तेनाथ ज्ञापयित्वा स्वं, कैतवं ग्राहितो बलात् ॥ ११२ ॥ पनसाद्यैः[3] कृतप्राणवृत्तिस्तत्र दिनं स्थितः । तमापृच्छ्य प्रवृत्तश्च, विषयाभिमुखो[4] धनः ॥ ११३ ॥ त्रातरलावलिर्यलाशारङ्गादिकृताशनः । भवितव्यतयाऽऽकृष्टः, श्रावस्तीं नगरीमगात् ॥ ११४ ॥ विचारधवलाख्यस्य, राज्ञस्तत्र मलिम्लुचैः । मुष्टः कोशस्ततो धृत्वा, गृह्यन्ते पथिकादयः ॥ ११५ ॥ पौराश्चाऽपि भुजङ्गाभा, नीयन्ते मन्त्रिणः पुरः । परीक्ष्य च विमुच्यन्ते, तदाकर्ण्याऽन्यतो व्रजन् ॥ ११६ ॥ धनः प्राप्तो भटैरुक्तः, कुतस्त्वं क्व च यास्यसि । तेनोक्तं वारिधेस्तीरात्सुशर्मनगरं गमी ॥ ११७ ॥ [ विशेषकम् ] अनिच्छन्नपि तैर्नीत्वा, मन्त्रिणो दर्शितश्च सः । तेन पृष्टस्तदेवाह, सत्यानां नान्यथा हि गीः ॥ ११८ ॥ मन्त्र्यूचे किमपि द्रव्यं, पाथेयं वास्ति सोऽवदत् । अज्ञानलोभयोर्दोषान्न किंचिदपि तादृशम् ॥ ११९ ॥ मन्त्र्यूचे स्फुटमाख्याहि, स्फुटमेतद्धनोऽवदत् । तर्हि गच्छेति गच्छंश्च, मन्दुराकपिनापि सः ॥ १२० ॥ वस्त्रे च पाटिते

१ अपरिचित । २ ऋषिम् । ३ फलविशेषैः । ४ विषय० देश ।

तेनाऽपतद्रत्नावली भुवि । तं विमोच्य कपेर्मन्त्री, स्वयं रत्नावलीं ललौ ॥ १२१ ॥ प्रत्यभिज्ञाय दध्यौ च, राजपुत्र्याः शिवं न हि । अन्यथा कथमस्येयं, करगोचरमागमत् ॥ १२२ ॥ ध्यात्वेत्युक्तः कुतस्तेऽसौ, स प्राह प्राप्यसौ मया । द्वीपे कटाहे तस्माच्चायातः पोतो व्यभिद्यत ॥१२३॥ जातोऽस्मि तदियन्मात्रवित्तस्वाम्यथ मन्त्रिणा । पृष्टः कालं जगादाऽब्दं, सचिवोऽथ व्यचिन्तयत् ॥ १२४ ॥ वक्ति वर्षमयं मासद्वयं तु समभूदितः । गताया राजपुत्र्यास्तदिदं न हि समञ्जसम् ॥ १२५ ॥ ध्यात्वेति राज्ञे मन्त्र्याख्यत्कोशाध्यक्षाय दर्शिता । रत्नावली महीशेन, प्रत्यभ्यज्ञायि तेन सा ॥ १२६ ॥ धनः पृष्टस्तथैवाह, ज्ञप्तो वध्योऽथ भूभुजा । मषीविलिप्तसर्वाङ्गो, ध्वनद्विरसडिण्डिमः ॥ १२७ ॥ आगो ज्ञापयितुं रत्नावल्या पटलक[1]स्थया । भटैः प्रवर्तितो वध्यभूमिकां प्रति वस्तवत्[2] ॥ १२८ ॥ [युग्मम्] हट्टमार्गेऽथ तां रत्नावलीं शोणमणीमयीम् । श्येनो मांसमिति ज्ञात्वा, हृत्वा नीडे निजेऽनयत् ॥ १२९ ॥ धनोऽथ कुपितैर्नीतः, श्मशानं राजपूरुषैः । समर्पितोऽन्त्यजस्यैष, वधकस्य वधाय च ॥ १३० ॥ दध्यौ निषादो नाऽऽकृत्याऽनयाऽयं कृत्यकृत्यकृत्[3] । किं तया चिन्तया मे स्यादादेश्यस्य प्रशस्यया ॥ १३१ ॥ ध्यात्वेति यमदण्ड्यांतं, निवेश्य प्राह बुक्कसः[4] । सुदृष्टं जीवलोकं त्वं, विधेह्यन्तो हि तेऽधुना ॥१३२॥ किं च नः सुहृदः श्राद्धास्तत्सङ्गाच्चौरदृष्टयः । न वयं किं तु राजाऽऽज्ञा, कार्येति तद्विधीयते ॥ १३३ ॥ नृपो व्यज्ञपि चाऽस्माभिर्धार्यो वध्यो मुहूर्तकम् । शुभभावो म्रियेतैष, यथाऽमंस्त नृपश्च तत् ॥१३४॥ तदादिशाऽऽर्य ! किं कुर्वे, तवाऽथाचिन्तयद्धनः । उपकार्यनुकम्पावान्दीनसत्त्वेषु वत्सलः ॥ १३५ ॥ अयं न कर्मचण्डालो, जातिचण्डाल एव हि । सत-

---

१ पटलक० वंशमयपात्र । २ वस्त० अज । ३ कृती० पुण्यवान् । ४ चाण्डालः ।

स्तदस्याऽप्रस्तावे, दर्शने किं करोम्यहम् ॥ १३६ ॥ गतं सच्चेष्टितं मे ह्यपुण्यानां स्यान्न चिन्तितम् । ध्यात्वा निःश्वस्य च
प्राह, विधेहि नृपशासनम् ॥ १३७ ॥ [ विशेषकम् ] अदीनमानसः साधुर्वध्यतेऽसौ हहा! मया । सगद्गदमिति प्रोचे,
श्वपचेन धनः पुनः ॥ १३८ ॥ स्मरेष्टदेवतां तर्हि, स्वर्गस्याऽभिमुखो भव । परार्थमकृतं ध्यायन्धनः स्वर्गाभिमुख्यभूत्
॥ १३९ ॥ कृष्ट्वाऽसिमन्त्यजः स्कन्धे, वाहयित्वा निजे मनाक् । ऊचे शृणुत हे लोका!, वञ्चयित्वा नृपाङ्गजाम् ॥ १४० ॥
हृता त्रैलोक्यसाराख्या, रत्नावल्यागसाऽमुना । निवध्य वध्यते वध्यस्तेन स्तेन इवाऽसकौ ॥ १४१ ॥ [ युग्मम् ] उक्त्वेति
खड्गमुद्यम्याऽदत्त्वा घातं कृपावशात् । हित्वा खड्गं पपातैष, पृथ्व्यामूचे धनेन सः ॥ १४२ ॥ राजाऽऽज्ञां कुरु स प्राह, न
प्रहर्तुं क्षमस्त्वयि । अकृतापकृतौ किं ते, देव! संपादयाम्यतः ॥ १४३ ॥ तदा सुमङ्गलाभिख्यः, प्रथमो राजनन्दनः ।
उद्याने भोगिना दष्टः, क्षणेनाऽभूदचेतनः ॥ १४४ ॥ मन्त्रौषधाद्यगम्येऽत्र, राजादेशात्पुरेऽखिले । पटहैर्घोषयामासुर्भ्रान्त्वा
पाटहिका इति ॥ १४५ ॥ जीवयत्यहिना दष्टं, यः कोपि नृपनन्दनम् । प्रार्थितं दीयते तस्य, वस्तु नास्त्यत्र संशयः ॥१४६॥
पटहध्वनिमाकर्ण्य, धनः प्रोचे जनङ्गमम् । संपादयेदं दष्टेऽस्मिन्, जीविते हन्तु मां भवान् ॥ १४७ ॥ स्पृष्टेऽथ पटहे
राजनरैर्नीतो नृपान्तिके । वृत्तान्ते कथिते राजा, तं प्रोचे जीवयाऽऽत्मजम् ॥ १४८ ॥ मन्त्रस्य पश्य सामर्थ्य, नरनाथ ! विषीद
मा । धनः प्रोच्य स्मरन्मन्त्रं, नृपपुत्रमजीवयत् ॥ १४९ ॥ सञ्जाते साधुवादेऽस्य, राज्ञा राज्ञीभिरप्यलम् । वृष्टं विभूषणैः
प्रोचे, धनस्तु किमनेन मे ॥ १५० ॥ राज्ञोक्तं तव किं कुर्वे, स प्रोचे कुरु वाञ्छितम् । चण्डालनाम्नोऽचण्डालभावस्य
वधकारिणः ॥ १५१ ॥ राजा दध्यावहो सत्त्वमयं नाऽकृत्यकृद्भवेत् । पृच्छाम्यमुमथेष्टस्याऽनन्तरं प्रच्छन्नं वरम् ॥ १५२ ॥

राजादेशाद्गतो वेत्री, तं प्रोचे खङ्गिलाख्य ! रे । तुष्टो नरेन्द्रस्तच्चूडामणिर्वाऽस्य सुतासुदः ॥ १५३॥ स प्राह किं विमुक्तोऽसौ, नरेन्द्रेषु शिरोमणिः । वेत्र्याह नात्र संदेहस्त्वमर्थय समीहितम् ॥ १५४॥ खङ्गिलः प्राह तद्देवप्रसादादिदमस्तु मे । लोकद्वयविरोधिन्याऽनया जीविकया कृतम् ॥ १५५॥ वेत्र्याह भूरि याचस्व, स प्रोचे भूरिभूर्यदः । वेत्र्याख्याते नृपस्तस्याऽसौद्विवेकनिरीहिते ॥ १५६॥ धनः प्रोवाच जात्यैव, चण्डालः स तदीहितम् । करोतु देवो राज्ञोचे, कृतमेवेदमत्र किम् ? ॥ १५७॥ अन्यच्च त्वं स्वहस्तेन, स्वर्णलक्षं बहिः पुरात् । सहस्रान्त्यजवासाय, देह्युर्वीं विन्ध्यवासिनीम् ॥ १५८॥ अनेनाऽथ नृपादेशे, विहिते खङ्गिलस्तथा । नैवातुष्यद्धनप्राप्त्या, यथाऽसौ धनजीवितात् ॥ १५९॥ धनेन गारुडं दत्त्वा, जीवितो द्यूतकृत्पुरा । धनस्तेन तथैवाहो, प्रायो नोपकृतं वृथा ॥ १६०॥ न ये प्रागुपकारिभ्यः, प्रीत्या प्रत्युपकारिणः । पुरुषाः परुषास्तेभ्यो, धन्यान्मन्यामहे पशून् ॥ १६१॥ अथ प्रोचे धनो राज्ञा, क्रिययाऽज्ञायि ते कुलम् । आख्याहि किं निवासस्त्वं, किंनामा कीदृशोऽसि च ॥ १६२॥ निःश्वस्याऽथ धनः प्राह, किमकृत्यकृतः कुलम् । अब्जेषु श्रीनिवासेषु, कृमयो न भवन्ति किम् ? ॥१६३॥ सुशर्मपुरवासी च, धनाख्यो वणिगस्म्यहम् । जात्यैव न तु शीलेन, दध्यावथ धराधिपः ॥ १६४॥ धन्योऽस्मि यन्मयेदक्षं, नृरत्नं न विनाशितम् । ऊचे च त्वयि नाऽकृत्यं, तदाख्याहि यथातथम् ॥१६५॥ तदा ससम्भ्रमा भूपं, वेत्रिण्येत्य व्यजिज्ञपत् । देव ! देवाङ्गजा पोतभङ्गाद्गतपरिच्छदा ॥ १६६॥ उद्यानपालिकाऽऽस्येन, देवं विज्ञपयत्यदः । यद्देव ! गच्छतां मध्येवार्धि चण्डानिलाहतम् ॥ १६७॥ स्फुटितं यानपात्रं नः, स्त्रीचित्तस्थितगोप्यवत् । देवस्य तु प्रभावेण, जीवन्त्यस्मि समागता ॥ १६८॥ [ विशेषकम् ] इयं विनयवत्याऽनुप्रैषि मेघवनस्थया । श्रुत्वेति

तां प्रवेश्याऽथ पप्रच्छ, नृपो रत्नावली क्व ते । पोतभङ्गदिने चूतलतानि-
नृपतिर्मेघवनं प्रीतः स्वयं ययौ ॥१६९॥ न जानामि तयोदिते । नृपः प्राह धनं भद्र!, क्व सा त्वत्करमागता ॥१७१॥
[1]वसने स्थिता ॥१७०॥ पश्चात्किमपि सञ्जातं, तन्मन्येऽकृत्यकारकम् ॥१७२॥ राज्ञोक्तं गृहिणो नेयं,
धनः प्राहाऽम्बुधेस्तीरे, लब्धा श्रीशवसंनिधौ । परस्वापहृतेः स्वं हि, करोमि ते ॥१७३॥ धनः प्राहान्त्यजेष्टार्थाधिकदानान्न किं? कृतम् ।
परद्रव्यापहारिता । अथवाऽलमतीतेन, वस्तुना किं? प्रोच्यते तव सत्तम! । जीविताधिकमत्पु-
देवेन नृपतिः प्रोचे, स्तोकं तस्यापि तत्किल ॥१७४॥ समीक्षितकृतः किं? नु, दत्त्वाऽथ भूषणं प्रैषि, स नृपेण निजैः सह
त्रजीवितव्यप्रदायिनः ॥१७५॥ धनः प्राहाऽभवत्सर्वं, ममेष्टं देवदर्शनात् । मुष्टे कोशे महीपतेः ॥१७७॥ वीक्ष्यमाणेषु
॥१७६॥ दिनैः कतिपयैरेताः, पुरं नाम्ना गिरिस्थलम् । तत्रापि चण्डसेनस्य, ॥१७८॥ [ युग्मम् ] के यूयं? क्व च गन्तारः?,
चौरेषु, वद्धेषु नृपवर्त्मसु । उप[2]कारणिकं धृत्वा, नीतास्ते तैश्च भाषिताः ॥ अस्त्यस्य सार्थवाहस्य, नृपदत्तं च भूषणम् ।
किं च वोऽस्तीति तेऽवदन् । श्रावस्तीनृपनिर्देशात्सुशर्मनगरं प्रति ॥१७९॥ धृत्वा नीताश्च राजान्ते,
कीदृशं तदिति प्रोक्तास्तत्ते तेषामदर्शयन् ॥१८०॥ गतं कालान्तरे तत्तैः, स्वकीयमुपलक्षतिम् । लभ्यो धार्याः प्रय-
क्षेपितास्तेन चारके ॥१८१॥ उक्तं च राज्ञा मद्राज्ये, स कारयति चौरिकाम् । सर्वोऽप्यर्थस्तदेतेभ्यो, ॥१८३॥ स[3]लोप्त्र-
त्नतः ॥१८२॥ यावत्सुदुःखितास्तत्र, ते वसन्ति धनादयः । तावन्निशि तलारक्षैः, परिव्राजकवेषभृत् मषीधातुविलिप्ताङ्गः, शरा-
स्तस्करः प्राप्तो, मन्त्रिणश्च निवेदितः । तेनापि लिङ्गी चौरोऽयमिति वध्यतयाऽर्पितः ॥१८४॥

1 निवसन० गृह । 2 परीक्षकपार्श्वे । 3 सहृतधनः ।

वश्रेणिभूषितः । शिरःस्थकरवीरस्रक्, छित्तिरच्छत्रराजितः ॥ १८५ ॥ डिण्डिमध्वनिनाऽऽहूतलोकेन परिवारितः । खरारूढस्तलारक्षैर्वध्यस्थानमनायि सः ॥ १८६ ॥ [ कलापकम् ] निःश्वस्याऽऽलोक्य लोकं च, नान्यथा मुनिभाषितम् । द्रव्यस्थानानि लोकानामाख्यामीति विचिन्त्य च ॥ १८७ ॥ ऊचे नृपनरानेतन्मुष्टं विश्वं पुरं मया । द्रव्यं तदस्ति निक्षिप्तं, गिरिनद्यादिभूमिषु ॥ १८८ ॥ तत्तद् गृहीत्वा पश्चान्मां, हतेति तदुरीकृते । द्रव्यं प्राप्तं यथास्थानाख्यातं तद्भूषणं विना ॥ १८९ ॥ [ विशेषकम् ] तमाह मन्त्री भगवन्, निश्छद्म कथयस्व मे । लिङ्गित्वं तस्करत्वं च, परस्परं विरोधि ते ॥ १९० ॥ स प्राह पुण्ड्रदेशान्तर्नगरे पुण्ड्रवर्धने । देवशर्मा द्विजन्माऽभूदग्निवैश्यायनान्वयः ॥ १९१ ॥ तस्य नारायणाख्योऽहं, पुत्रस्तत्र प्ररूपये । हिंसया भवति स्वर्ग, इति लोकस्य निष्कृपः ॥ १९२ ॥ अन्यदा पुरुषाः केऽपि, नीयन्ते वध्यभूमिकाम् । मया प्रोक्तं महाचौरानेतान्घातयतेति च ॥ १९३ ॥ श्रुत्वा मद्वचनं तच्चावधिज्ञानी मुनिर्जगौ । अहो कष्टमहो कष्टमज्ञानस्य विजृम्भितम् ॥ १९४ ॥ शान्तेनापि किमेतेन, बभाषे परुषं वचः । ध्यात्वेति नत्वाऽपृच्छं तं, किमज्ञानं मम प्रभो ! ॥ १९५ ॥ स प्राहाऽसदभियोगाद्विरुद्धाच्चोपदेशतः । अचौरानपि यच्चौरानेतान्वदसि कद्वदः ॥ १९६ ॥ तत्सत्यमपि नो सत्यं, परो येन प्रपीड्यते । श्रुतौ ह्यसत्यसत्युक्ते, चौरचौरप्रभाषणे ॥ १९७ ॥ उक्तं तत्तुल्यदोषित्वं, सत्यसत्यभिलापतः । अचौरचौरजल्पाच्च द्विगुणं दोषमश्नुते ॥ १९८ ॥ [ युग्मम् ] विरुद्धं दिशसि स्वर्गो, हिंसयेति वदन् यतः । न हिंस्यात्सर्वभूतानि, सर्वतीर्थकृतां मतम् ॥ १९९ ॥ किं चाऽसदभियोगस्य, फलं प्राप्तं पुरा त्वया । लप्स्यसे फलशेषं च, दिनैः कतिपयैरपि ॥ २०० ॥ श्रुत्वेति मयका पृष्टः, प्रभुः प्राह स्फुटाक्षरम् । अस्त्युत्तरपथे ख्यातं, गर्जनं नाम पत्तनम् ॥ २०१ ॥

तत्राषाढाख्यविप्रस्याऽनुत्सुका रुच्छुका जनी । सोमदेवस्तयोः सूनुस्त्वं धीरे पञ्चमे भवे ॥२०२॥ पित्रा शास्त्राणि वेदांश्चाध्यापितः साभिमानधीः । श्रितः पुराधिपं वीरसेनं तेन च पूजितः ॥२०३॥ तत्राऽन्यदा विनीताख्यश्रेष्ठिनो विधवा सुता । मान्सा वीरमती भक्ता, परिव्राजकदर्शने ॥२०४॥ मोहाविवेकतारुण्यविषयव्रातपातिता । विह्वला सिंहलाख्येन, सार्धं मालंकृता गता ॥२०५॥ योगात्मा नाम तत्पूज्यः, सदाचारशिरोमणिः । निःसङ्गत्वान्निजानामप्यज्ञातो यातवांस्तदा ॥२०६॥ ततो लोकप्रवादेन, ज्ञाता वीरमती गता । त्वया ज्ञातश्च योगात्मा, गतः सङ्कल्पितं ततः ॥२०७॥ गता योगात्मना सार्धं, भविष्यत्यन्यदा तव । राट्सदःस्थस्य वार्ताऽभूत्सा केनापि समं गता ॥२०८॥ भवतोक्तमहं वेद्मि, समं योगात्मना गता । राज्ञोचे स्वकलत्रेऽपि, भगवानेष निःस्पृहः ॥२०९॥ त्वयोक्तं परदारेषु, सस्पृहस्तेन हेतुना । एवंविधा इमे पाषण्डिनो नैष्वस्ति वस्तुता ॥२१०॥ श्रुत्वेति विपरीणामं, केऽपि धर्मेषु भेजिरे । योगात्मा च परिव्राड्भिरन्यैः स्वस्माद्बहिष्कृतः ॥२११॥ त्वयेत्थं निबिडं बद्धं, कर्म मर्मभिदेलिमम् । जातो मृत्वैलंकत्वेन, जिह्वाव्रणरुजा मृतः ॥२१२॥ गोमायुत्वेऽपि जिह्वायाः, साटेनैव पुनर्मृतः । साकेतभूमिपालस्य, सहदेवस्य नन्दनः ॥२१३॥ जज्ञे विलासवत्याख्यविलासिन्यां[3] युवा च सन् । मद्यमत्तो नृपस्याऽम्बामाक्रोशन्नृपसूनुना ॥२१४॥ निषिद्धस्तमथाक्रोशज्जिह्वाछेदेन शिक्षितः । कृत्वाऽनशनमुत्पेदे, भवान्ब्राह्मणनन्दनः ॥२१५॥ [ विशेषकम् ] त्वयाऽनुभूतमेतद्धि, विरक्तोऽहं ततो भवात् । ज्ञानिनं पुनरप्राक्षं, फलशेषं तु कीदृशम् ॥२१६॥ तेनोक्तं लोकप्रत्यक्षा, शेषा तव विडम्बना । ततस्तद्वा-

---

१ प्रारम्भिकेण । २ पुष्क० सेष । ३ विलासिनी० टी ।

क्यभीतेन, प्रव्रज्या जगृहे मया ॥२१७॥ गुरोः स्वःप्रस्थितात्तालोद्घाटिन्याकाशगामिनी । लब्धे विद्ये मया तेन, शिक्षि-
तश्चास्मि यत्त्वया ॥२१८॥ वाच्यं न मिथ्या प्रोक्ते, सत्यष्टोत्तरसहस्रशः । देयो जापो जले नाभिदघ्नेऽनुन्मेषचक्षुषा ॥२१९॥
[ युग्मम् ] कल्ये पृष्टोऽस्मि रामाभिर्ब्रह्मरुद्रादिसेवितम् । हित्वा विषयजं सौख्यं, तारुण्ये त्वं कुतो व्रती ॥२२०॥ तन्न-
र्मभावं विज्ञाय, मया नर्मोत्तरं ददे । यत्प्रियाया वियोगेन, दुष्करं व्रतमाददे ॥२२१॥ मिथ्यावाक्यस्य चैतस्य, जापो न
विदधे मया । ततो रात्रौ सलोप्त्रोऽपि, गृहीतोऽस्मि भटैस्तव ॥२२२॥ अतः परं महामात्य!, सर्वं विदितमेव ते । मन्त्र्यूचे
भूषणं राज्ञो, दृश्यतेऽत्र कथं न हि ॥२२३॥ स प्राह दत्तं श्रावस्तीस्वामिने मन्त्र्यथाऽवदत् । किं? निमित्तमथ प्राह, परि-
व्राजकपुङ्गवः ॥२२४॥ श्रावस्त्यामस्ति गन्धर्वदत्तो नाम सुहृन्मम । कन्या तेनेन्द्रदत्तस्याऽन्यस्मै दत्तापि पापिना ॥२२५॥
हृत्वा वासवदत्ताख्या, व्यूढा रुष्टस्ततो नृपः । तां गृहीत्वा पुरादेनं, दूरतो निरवासयत् ॥२२६॥ [ युग्मम् ] आगतो
मेऽन्तमाचख्यौ, समागमनकारणम् । मयाऽनर्घ्यमलङ्कारं, दत्त्वा प्रैषि नृपान्तिके ॥२२७॥ ततस्तुष्टेन भूपेन, महर्द्ध्या
स प्रवेशितः । तेन वासवदत्ता च, प्राप्ता कण्ठस्थजीविता ॥२२८॥ हेतुनाऽनेन तद्दत्तं, मन्त्री प्राह कृतं वरम् । यतो
भवन्ति मित्रेषु, वत्सलाः सज्जना जनाः ॥२२९॥ भगवन्! भवता कार्यमात्मोचितमतः परम् । उक्त्वेति तं परिव्राजं,
धनार्दींश्च मुमोच सः ॥२३०॥ [ युग्मम् ] धनो राजनरान्प्रेष्य, श्रावस्त्यां स्वयमेककः । अटन्महाटवीमेकां, प्राप कार्प-
टिकैर्युतः ॥२३१॥ ते हस्तियूथमागच्छद्वीक्ष्य नेशुर्दिशो दिशम् । गजेनैकेन धावित्वा, धनो धात्र्यां तु पातितः ॥२३२॥

---

१ नाभिप्रमाणे । २ सहृतधनः ।

करेणाऽऽदाय खे क्षिप्तो, वटाग्रे व्यलगद्धनः । गजो वशारुतं श्रुत्वा, प्रीतस्तां प्रति जातवान् ॥२३३॥ धनः श्येनहृतां तत्राऽपश्यद्रत्नावलीं पुनः । आदाय दध्यौ श्रावस्त्याः, स्वामिनेऽसौ प्रदास्यते ॥२३४॥ गजयूथे व्यतिक्रान्ते, वटादुत्तीर्य सोऽचलत् । इतश्च गत्वा ते राजनरा राज्ञे व्यजिज्ञपन् ॥२३५॥ वृत्तान्तं निखिलं राज्ञा, कुपितेनेति भाषिताः । तादृग्नरत्नमेकं किं, मुक्त्वा यूयमिहागताः ॥२३६॥ [युग्मम्] तदयं भवतां दण्डस्तमानीय ममान्तिके । पुर्यामस्यां प्रवेष्टव्यमिति निर्वासिता इमे ॥२३७॥ दरिद्रा इव ते मार्गे, मार्गन्तः सर्वतो धनम् । सुखवासाभिधे ग्रामे, तं प्रापुरथ तैः समम् ॥२३८॥ श्रावस्तीमेत्य भूपालं, नत्वा रत्नावलीं पुरः । मुक्त्वा वृत्तान्तमाचख्यौ विस्मितोऽथ नृपोऽवदत् ॥ २३९ ॥ [युग्मम्] क्व संनीडं[2] समुद्रस्य, क्व नीडं श्येनपक्षिणः । द्विर्लेभे भवता मर्त्यरत्न ! रत्नावली कथम् ॥२४०॥ तत्तुभ्यमेव दत्तेयं, न कार्यं मद्वचोऽन्यथा । राज्यमप्यथवेदं ते, किं ? किं ? सम्पाद्यतां तव ॥२४१॥ दिनैः कतिपयैः सार्थं, कृत्वोपात्तक्रयाणकः । राज्ञा प्रैषि धनो दत्त्वाऽनर्घ्यमाभरणादिकम् ॥२४२॥ कालेन कियताप्येप, सुशर्मपुरमागतः । ज्ञातो जनेन तुष्टाश्च, जननीजनकादयः ॥२४३॥ सन्मुखायातयोः पित्रोः, पदेषु न्यपतद्धनः । ताभ्यामानन्द्य तं पूजा, सर्वचैत्येषु निर्ममे ॥२४४॥ प्रदत्तं च महादानं, नृपेणाऽथ निवेशितः । महर्द्ध्या कृतसन्मानो, वर्धापनमभूत्ततः ॥२४५॥ रहः पितृभ्यां पृष्टोऽथ, वृत्तान्तं तं धनश्रियः । कार्सणादिमहाम्भोधिपातनान्तं न्यवेदयत् ॥२४६॥ विस्मिताभ्यामथैताभ्यामभाष्यत कृतं तया । कल्पद्रोः कपिकच्छूवद्वत्स!, सा तव नोचिता ॥२४७॥ द्रक्ष्यावस्त्वत्कृते कन्यामन्यां धन्यां

---

१ हस्तिनीशब्द। २ तटम्।

कुलादिभिः । असामान्यां शशी क्वापि, ज्योत्स्नया किं? विमुच्यते ॥ २४८ ॥ न संतापस्त्वया धार्यो, धनः प्राह निसर्गतः । ई[1] ईदृशो भवस्तत्र, संतापेन कृतेन किम्? ॥ २४९ ॥ पितृभ्यां धनदेवस्य, महिमा विहितो महान् । समित्रस्तत्र गत्वाऽथ, धनो यक्षमपूजयत् ॥ २५० ॥ याचकेषु यथायोग्यं, प्रतिपत्तिं विधाय सः । भुक्तोत्तरं महोद्यानं, सिद्धार्थं नामतोऽगमत् ॥ २५१ ॥ तत्राऽशोकतरोर्मूले, मूलोत्तरगुणैर्युतम् । आचार्यं कोशलाधीशविनयन्धरनन्दनम् ॥ २५२ ॥ अनेकसाधुसंयुक्तं, सुधांशुभ्रयशोधरम् । नाम्ना यशोधरं सूरिमद्राक्षीन्मुदितो धनः ॥ २५३ ॥ [ युग्मम् ] रूपयौवनलावण्यशान्तिसंतोषमार्दवैः । तदीयैर्विस्मितो दध्यौ, दृश्यः सेव्यश्च नन्वयम् ॥ २५४ ॥ ध्यात्वेति गत्वा वन्दित्वा, तं साधुजनसंयुतम् । तद्दत्तधर्मलाभाशीरुपाविक्षत्क्षमातले ॥२५५॥ अवोचच्च विभो ! किं? ते, भवनिर्वेदकारणम् । यद्रूपेण जितः कामश्चरित्रेण पुनर्जितः ॥ २५६ ॥ प्रभुः प्राह भवादस्मान्नित्यनिर्वेदमन्दिरात् । किमन्यदपि निर्वेदकारणं प्रष्टुमर्हसि ॥२५७॥ धनः प्रोवाच भगवन्! सर्वसाधारणं ह्यदः । विशेषं वद स प्राह, चरित्रं निजमेव मे ॥२५८॥ धनः प्राह प्रसद्येश !, निजं चरितमादिश । वीक्ष्याऽमुं शान्तकल्याणाकृतिं प्राह गुरुः शृणु ॥ २५९ ॥ विशालायां पुरि पुराऽमरदत्तोऽभवन्नृपः । देवी यशोधरा तस्य, सतीव्रतयशोधरा ॥ २६० ॥ तदङ्गभूर्बभूवाऽहं, वीतेऽस्मान्नवमे भवे । सुरेन्द्रदत्तनामाऽस्मि, पित्रोरत्यन्तवल्लभः ॥ २६१ ॥ मम वक्षोविभूषार्थमपरा मौक्तिकावली । भार्याऽस्त्युच्छ्वसिताम्भोजनयना नयनावली ॥ २६२ ॥ तातः प्रदाय मे राज्यमात्मना व्रतमात्तवान् । अहमप्यात्तसम्यक्त्वो, राज्यमस्मि प्रपालयन् ॥२६३॥ अन्यदा नयनावल्या, दासी सारसिकाभिधा ।

---

१ खेदार्थे अव्यय ।

ममैतं पलितव्याजाद्धर्मदूतमदर्शयत् ॥ २६४ ॥ ततोऽहं भवनिर्विण्णो, दध्याविति निजे हृदि । अहो! असारं मानुष्यं, क्षणादेव विनश्यति ॥ २६५ ॥ नित्यं निशादिनव्याजाज्जीवानां यौवनायुषोः । त्रुट्यन्ति खण्डखण्डानि, न जानाति जनो जडः ॥ २६६ ॥ जनायुर्जलमादाय, निशादिनघटीचयैः । अर्केन्दुधुर्यौ[१] कालारघट्टं भ्रमयतः सदा ॥ २६७ ॥ जीवितव्याम्भसि क्षीणे, देहसस्ये च शुष्यति । उपायः कोऽपि नास्त्यस्य, तथाऽपि सुखितो जनः ॥ २६८ ॥ तत्प्रमादं परित्यज्य, प्रपद्ये व्रतमुत्तमम् । ध्यात्वेति नयनावल्या निजाकूतं न्यवेदयम् ॥ २६९ ॥ साऽजल्पच्च मयाऽस्माऽयमार्यपुत्र! तवार्पितः । यत्त्वं प्रपद्यसे पूर्वं, तत्प्रपत्स्येऽनु नन्वहम् ॥ २७० ॥ अचिन्तयमहं देव्या, अहो! स्नेहो ममोपरि । चित्तज्ञत्वं विवेकश्च, समानसुखदुःखता ॥ २७१ ॥ तदा बन्दी पपाठेत्युदयं प्राप्य प्रतप्य च । उद्द्योत्य भुवनं सर्वमस्तमेति दिवाकरः ॥ २७२ ॥ ततोऽध्यायमहं सूरस्याऽप्येकत्र च वासरे । इयत्यः स्युरवस्था यज्जीवलोकं धिगस्तु तत् ॥ २७३ ॥ कियन्तमपि निर्गम्य, सन्ध्याकालं सदस्यथ । ययौ प्रदोषे[२] नीरन्ध्रमणिदीपकमण्डितम् ॥ २७४ ॥ कलितं नयनावल्या, देव्या रत्येव रूपतः । वासावासमहं साक्षाद्विमानमिव नाकिनः ॥ २७५ ॥ [ युग्मम् ] पल्यङ्केऽथ निविष्टोऽहं, देवी परिजने गते । अशेताऽहं तु ध्यायामि, दुर्मोचा नयनावली ॥ २७६ ॥ यावत्तावदसौ हित्वा, पल्यङ्कं कुट्टिमं गता । निर्ययौ द्वारमुद्घाट्य, मेयं प्राणांस्त्यजत्विति ॥ २७७ ॥ पृष्ठे लग्नोऽस्म्यहं खड्गसखः कुब्जकयामिकम् । उदस्थापयदेषा तु, दध्यौ किमिदमित्यहम् ॥ २७८ ॥ [ विशेषकम् ] तेनोक्तं किमतिक्रान्तवेलायां त्वं समागता । सा प्राहाऽद्य नृपः सुप्तश्चिराद्वेला ततोऽलगत् ॥ २७९ ॥ अथैतं

---

१ धुर्यं बलीवर्दं । २ रजनीमुखे ।

सङ्गतं देव्या, वीक्ष्य क्रोधधुताधरः । आकृष्टासिरहं दध्यौ, हन्मि द्वावपि पापिनौ ॥२८०॥ पुनर्दध्यौ नरश्चाऽयं, देवी शीलभृता तथा। अस्मि ब्रतं जिघृक्षुश्च, स्यात्कुमारस्य लाघवम् ॥२८१॥ ध्यात्वेति न्यस्य कोशेऽसिं, गतो वासगृहं पुनः। दध्यौ व्याधिर्विषं रोगो, मारिर्मृत्युश्च योषितः ॥२८२॥ [युग्मम्] एतया चिन्तया वाऽलं, श्रामण्यं सुन्दरं हि मे । यावद्ध्यायाम्यदस्तावत्तत्र देवी समागता ॥२८३॥ चटूनि विदधत्येषाऽवमंता सुप्तकैतवात् । स्वनत्सु प्रातस्तूर्येष्वपठन्मङ्गलपाठकाः ॥२८४॥ विवर्णवदना मुक्ततमःकेशा विभावरी । परलोकस्थसूरस्याऽम्बुदानुमिव यात्यसौ ॥२८५॥ प्रातःकृत्यं विधायाऽथ, निविश्याऽऽस्थानमण्डपे । मन्त्रगेहे प्रविश्याऽथामन्त्रयं मन्त्रिभिः सह ॥२८६॥ स्वाऽऽकूते कथितेऽमात्यैरूचे गुणवरो लघुः । कुमारो देव! धर्मस्ते, प्रजापालनमप्यतः ॥२८७॥ मयोक्तं किं न जानीथ, स्थितिरेषा हि नः कुले । धर्मदूते समायाते, न स्थातव्यं गृहाश्रमे ॥२८८॥ मन्त्रिणोऽभिदधुः सर्वे, जानीते देव एव हि। व्यतिक्रान्ते दिने रात्रौ, स्थितः स्तोकं सदस्यहम् ॥२८९॥ गतो वासगृहे देव्यवज्ञायां निद्रयाऽऽहृतः । सुप्तजाग्रदवस्थायां, रात्र्यन्ते स्वप्नमैक्षिषि ॥२९०॥ किलोपविष्टः सौधस्योपरि सिंहासनादहम् । अम्बया पातितो लुठ्यन्नधः सप्तमभुव्यगाम् ॥२९१॥ तथैवाम्बाऽपि मत्पृष्ठेऽहं तूत्थाय कथंचन । आरूढो मन्दिरं पश्चान्निरीक्ष्येति विबुद्धवान् ॥२९२॥ ध्यातवानिति च स्वप्नः, प्रारम्भेऽयं भयानकः । विपाके शुभदस्तन्न, जाने किंचिद्भविष्यति ॥२९३॥ यत्तद्भवतु वा धर्मोऽध्वन्यध्वन्यस्य मेऽधुना । धर्मध्यानस्थितस्याऽथ सा विभाता विभावरी ॥२९४॥ कृत्वा प्रभातकृत्यानि, सदःस्थे मय्यथाऽऽगमत् । अम्बा परिजनाकीर्णाऽभ्यु-

१ तिरस्कृता। २ अध्वन्यस्य पथिकस्य ।

मयोचे विदधत्पापं, न पुण्यफलमश्नुते । अदन् विषं सुधाबुद्ध्या, किं? कोऽपि क्वापि जीवति ॥ ३११ ॥ प्रौढं प्राणातिपाताच्च, पापं नान्यज्जगत्रये । देहारोग्यं च हिंसाया, विपर्यासो मतेरसौ ॥ ३१२ ॥ अम्बाऽथ कुर्विदं वत्स!, जल्पन्ती न्यपतत्पदोः । दध्यावहमथ व्याघ्रतटीन्यायोऽयमागतः ॥ ३१३ ॥ एकतो गुरुगीर्भङ्गो, व्रतभङ्गस्तथाऽन्यतः । अथवा गुरुगीर्भङ्गाद्व्रतभङ्गोऽतिदारुणः ॥ ३१४ ॥ ध्यात्वेत्यम्बाऽथ विज्ञप्ता, नादेष्टव्यमिदं मम । अथवा कुलदेव्यर्चा, कुरु मे मांसशोणितैः ॥३१५॥ इत्युक्त्वाऽहं समाकृष्टरिष्टिर्वाहौ धृतोऽम्बया । उक्तश्च मातृवात्सल्यं, किं? ते न त्वां विना ह्यहम् ॥३१६॥ तत्प्रकारान्तरेणाऽयं, कृतो मातृवधस्त्वया । विचारय स्वयं वत्स!, यदीदं वाक्यमन्यथा ॥ ३१७ ॥ अत्रान्तरे निशम्याऽम्बा. ताम्रचूडस्य कूजितम् । प्राह मामस्ति कल्पोऽयं, प्रस्तावे यदमूदृशि ॥ ३१८ ॥ श्रूयते शब्दितं यस्य, स वाऽन्यो वाऽथ तादृशः । हन्यते वाञ्छितार्थस्य, सिद्धिर्भवति निश्चिता ॥ ३१९ ॥ सन्तु तस्मात्परे जीवास्त्वं व्यापादय कुक्कुटम् । मयोक्तं त्वद्गिरापि स्वं, विना नाऽन्यं विघातये ॥ ३२० ॥ [ विशेषकम् ] अम्बाऽऽह मद्वचस्तर्हि, पिष्टकुक्कुटतः कुरु । ब्रुवाणेत्यसिमाच्छिद्य. पपात मम पादयोः ॥ ३२१ ॥ तन्मोहपटलच्छन्नज्ञाननेत्रेण तन्मया । प्रतिपेदे परं पश्यन्नेत्रैर्हि स्वं न पश्यति ॥ ३२२ ॥ विधाय कुक्कुटं पिष्टमयं माता मया सह । कुलदेवीपुरो मुक्त्वा, प्राह देवि! सुतस्य मे ॥ ३२३ ॥ दुःस्वप्नप्रतिघाताय, कुक्कुटस्तव दीयते । इत्युक्त्वा घातयामास, तं मत्करगतासिना॥३२४॥[युग्मम्] सूपकारमथ प्राह. मांसमस्य पच क्षणात् । पुत्रस्य मम चाऽप्येषा, यथा शेषा प्रजायते ॥ ३२५ ॥ मयोचेऽम्ब! तपोज्ञानदानध्यानविघातिनः । वरं

१ गिर० रुद्ध । २ कुर्कुटस्य ।

मांसाद्विषं यस्मादेकदा जायते मृतिः ॥ ३२६ ॥ भेषजेऽपि हि यो मांसभक्षणानुमतिप्रदः । सोऽपि मांसाशिनः पृष्ठलग्नो
गच्छति दुर्गतिम् ॥ ३२७ ॥ तीर्थे स्नानानि दानानि, दीक्षा शिक्षाश्च सद्गुरोः । अमांसभक्षिणस्तुल्यान्येतानि न कथंचन
॥ ३२८ ॥ अम्बाऽऽह किं विचारेण, कृतं मद्वचनं त्वया । इदं सत्यं न मांसं च, कल्पनामात्रमेव हि ॥ ३२९ ॥ तदपि
प्रतिपन्नं च, कृतं च मयका तथा । तदा बद्धं मया कर्म, परिणामे सुदारुणम् ॥ ३३० ॥ द्वितीये दिवसे राज्यं, कुमाराय
ददे मया । गृह्णन्व्रतं गृहिण्योक्तः, श्वः[1] प्रव्रज्याऽस्तु नौ प्रिय ! ॥ ३३१ ॥ मयाऽध्यायि किमेतस्या, विरुद्धं चेष्टितं त्वदः ।
अथवा चरितं स्त्रीणां, वक्रं सर्पगतं यथा ॥ ३३२ ॥ मयोक्तं देवि ! नाऽहं ते, भनज्मि प्रणयं क्वचित् । सा दध्यौ प्रव्रज-
त्यस्मिन्नप्रव्रज्याऽपवाददा ॥ ३३३ ॥ मृते त्वनुमृतौ मन्त्रिवर्गोऽपि हि निषेधति । न तथा लाघवं च स्याद्बालराजप्रपा-
लने ॥ ३३४ ॥ वञ्चयित्वा चकोराणां, दृष्टिमद्य कथंचन । ददाम्यस्य विघाताय, विषं तत्क्षणमृत्युदम् ॥ ३३५ ॥ भोजना-
वसरे सूदाः, सिक्[2]छन्नमुखनासिकाः । ममाऽग्रेऽनेकरूपाणि, भोजनान्युपनिन्यिरे ॥ ३३६ ॥ देवी मया समाहूताऽऽहारस्य
परिणामकम् । सा योगवटकं मिथ्या, सविषं सममानयत् ॥ ३३७ ॥ चकोरेष्वपनीतेषु, सा ममाऽऽचमनक्षणे । तद्ददौ निर्वि-
कल्पं च, भुक्त्वाऽपायि जलं मया ॥ ३३८ ॥ प्राग्वद्वासगृहं गत्वा, पल्यङ्के न्यषदं क्षणात् । विषाऽऽवेगेन निश्चेष्टो, न्यपतं
पृथिवीतले ॥ ३३९ ॥ अपातयद्विषेणैका, मामुत्सङ्गेऽपरा दधौ । देवीपृथ्व्योः सपत्नीत्वं, तदा प्रकटतां गतम् ॥ ३४० ॥
ज्ञात्वा विषविकारं मे, प्रतीहारः समीपगः । तदा विषभिषग्वर्गं, यावदाह्वयते किल ॥ ३४१ ॥ तावन्न चार्विदं वैद्याह्वानं

१ आगामिदिने । २ सिप० वस्त्र ।

ध्यात्वा ममोपरि । न्यस्योत्तरीयं हाहेति, क्रन्दमाना निरश्रु सा ॥ ३४२ ॥ कण्ठसंवाहनव्याजादङ्गुष्ठाङ्गुलिपीडनैः । जहार जीवितं जीवितेशवज्जीवितेश्वरी ॥ ३४३ ॥ [ युग्मम् ] तयाऽहं निहतो भद्र[1]!, प्रालेयाचलदक्षिणे[2] । सिलिन्ध्रपर्वते वर्हित्वेनाऽऽर्तध्यानतोऽभवम् ॥ ३४४ ॥ हत्वा मन्मातरं वालमपि मां लुब्धकोऽग्रहीत् । अदाच्च सक्तुप्रस्थेन, नन्दापाटकवासिनः ॥ ३४५ ॥ तलारक्षस्य सञ्जातपक्षभारः क्रमादहम् । कृमीन् खादन् क्षुधा सेहे, तृष्णाशीतोष्णवेदनाः ॥ ३४६ ॥ [ युग्मम् ] तैः पापकर्मभिः पीनगात्रः पूर्णकलापयुक् । मत्पुत्रराज्ञस्तेनाऽहं, स्वप्रभोः प्राभृतीकृतः ॥ ३४७ ॥ यशोधराऽपि मे माताऽतीसारातङ्कतो मृता । विषये करहाटाख्ये, धान्यपूरकनामनि ॥ ३४८ ॥ ग्रामेऽभूत्कुक्कुरो वायुवेगस्तत्स्वामिनाऽपि सः । राज्ञो गुणधरस्यैव, प्रहित्य प्राभृतीकृतः ॥ ३४९ ॥ [ युग्मम् ] समकालं विशालायामुभावावां समागतौ । प्रवेशितौ सदस्यस्य, राज्ञस्तेन विलोकितौ ॥ ३५० ॥ जज्ञे तस्याऽवयोः प्रीतिर्मुख्याय श्वानपोषिषु । अकालमृत्युनाम्ने श्वाऽहं पुनः पक्षिपोषिणे ॥ ३५१ ॥ नीलकण्ठाभिधानायाऽर्पितो राज्ञोदितौ च तौ । त्रिष्वस्म्यहं प्रजात्राणे, पापर्द्धौ शकुनेषु च ॥ ३५२ ॥ रक्ष्यौ तदेतौ यत्नेन, तौ प्रपद्यैतदीयतुः । लालयत्यवनीपाल, आवां द्वावपि सर्वदा ॥ ३५३ ॥ [ विशेषकम् ] आरोहं सौधनिर्यूहं[3], नीलाश्ममयमन्यदा । तत्राऽश्रौषं गुणनिका[4]स्फुरन्मुरजनिःस्वनम् ॥ ३५४ ॥ तमाकर्ण्याऽब्दशब्दाभं, नर्तित्वा सुचिरं स्थितः । गवाक्षस्यैकदेशेन, चित्रशालास्थितामहम् ॥ ३५५ ॥ अपश्यं तेन कुब्जेन, सहितां नयनावलीम् । शय्योत्सङ्गस्थितां तेन, परिणीतां वधूमिव ॥ ३५६ ॥ [ युग्मम् ] तौ वीक्ष्य ध्यायतो मेऽथ, जातिस्मृतिरजायत । अमर्षान्नखच-

---

१ यमवत् । २ प्रालेयाचल० हिमाचलपर्वत । ३ निर्यूह० शिखर । ४ गुणनिका० नृत्य ।

भूमिं, भ्रमामि स्म तामहम् ॥ ३५७ ॥ तया तस्यैव कुब्जस्य, लौहमादाय मुद्गरम् । प्रहतः पतितस्तत्र, कुर्वन् सोपान-
तर्जना ॥ ३५८ ॥ यत्राऽस्ति नृपतिर्द्यूतं, खेलन्मम च पृष्ठतः । तात तात लपन्नागाद्देवीपरिजनः पुरः ॥ ३५९ ॥ तादृशं
तुमुलं श्रुत्वा, प्राग्भवाम्ब्राशुनः स तु । धावित्वा मां गलेऽगृह्णाद्राज्ञाऽथ विहितारवम् ॥ ३६० ॥ इतः पातनकेनाऽयं,
वमन्नस्रं मुमोच माम् । उभौ कण्ठगतप्राणौ, पतितौ च धरातले ॥ ३६१ ॥ [ युग्मम् ] राजा पुरोधसं प्राह, तातताताम्ब-
योर्यथा । संस्कारो विदधे कृष्णागुरुचन्दनदारुभिः ॥ ३६२ ॥ सुगत्यर्थं च दत्तानि, महादानान्यनेकशः । सर्वं तथाऽनयोः
कार्यं, परलोकमुपेयुषोः ॥ ३६३ ॥ [ युग्मम् ] श्रुत्वेत्यचिन्तयं सूनुर्मम सद्गतिहेतवे । ददौ दानान्यहं तिर्यग्जातौ तु कृनि-
भक्षकः ॥ ३६४ ॥ भक्षितश्च शुनाऽनेन, बाढं तिष्ठामि दुःखितः । अहो चित्राणि कर्माणि, चिन्तयन्निति संस्थितः ॥ ३६५ ॥
[ युग्मम् ] ततश्च भद्र! तस्यैव, गिरेः पश्चिमदिक्स्थिते । कोलीकरीरवच्चूलखदिरादिवनाकुले ॥ ३६६ ॥ दुःसचरे महा-
गर्तस्थाणुकण्टककर्करैः । निष्फले निर्जले दुष्प्रवेशनाम्नि महावने ॥ ३६७ ॥ एकाक्षपृषतीगर्भे, कुण्टात्पृषततोऽभवन् ।
जातोऽस्मि प्रसवस्याऽहमसंपूर्णे त्वनेहसि ॥ ३६८ ॥ [ विशेषकम् ] क्षीरे क्षुधार्त्या मन्मातुर्नष्टे गोक्षुरकण्टकान् । भक्षयामि
शरीरं तु, प्रवृद्धं तैरपि क्रमात् ॥ ३६९ ॥ इतः प्राग्जन्ममातृश्चाऽऽर्त्तध्यानेन भुजङ्गमः । तत्रैवाजनि दृष्टश्च, स मयाऽत्य-
न्तभीषणः ॥ ३७० ॥ जलाशयान्ते खादन्तं, भेकानेतं क्षुधातुरः । पुच्छेऽहं जगृहे मां स, दन्दशूकः पदेऽदशत् ॥ ३७१ ॥
अहिर्मां तमहिं चाहं, भक्षयावः परस्परम् । यावत्तावत्कुतोऽप्येत्य, पातितोऽस्मि तरक्षुणा ॥ ३७२ ॥ सशब्दं पाटयंश्चर्म,

१ मृत । २ कोली० बदरीवृक्ष । ३ वच्चूल० वृक्षविशेष । ४ पृषती० मृगी । ५ स्थूलात् । ६ मृगात् । ७ गोक्षुर० भाषाया गोखरु । ८ लघुव्याघ्रेण ।

त्रटिति त्रोटयञ्शिराः । गण्डूपैश्च पिवन्नस्रं, कटत्कारेण मोटयन् ॥ ३७३ ॥ ममाऽस्थीनि प्रवृत्तोऽयं, खादितुं मां तथा यथा । जीवितेन भयत्रस्तेनेव त्यक्तं शरीरकम् ॥ ३७४ ॥ [ युग्मम् ] ततोऽहं भद्र ! तत्रैव, विशालानगरीतटे । तटिन्यां रोहितो मत्स्यो, बभूव भुजगः स तु ॥ ३७५ ॥ शि[1]शुमारतया जातो, दृष्टस्तेनास्मि चान्यदा । गृहीतः पुच्छदेशे च, तत्रान्तःपुरचेटिकाः ॥ ३७६ ॥ समाजग्मुश्चिलाव्याख्या, ददौ झम्पां तु चेटिका । साऽऽददे शिशुमारेण, ततोऽहं प्रपलायितः ॥ ३७७ ॥ [ विशेषकम् ] हा ! गृहीता गृहीतेति, रटन्ती मत्स्यवन्धकैः । साऽमोचि शिशुमारस्तु, दुःखमारेण मारितः ॥ ३७८ ॥ कियत्यपि गते काले, कैवर्तपुरुषैरहम् । आत्तो जीवन्नृपायाऽथ, प्राभृते कार्यिभिः कृतः ॥ ३७९ ॥ राज्ञा तुष्टेन तत्कार्यं, कृत्वोपनयनावलि । मां नीत्वोचेऽम्व ! मत्स्यस्याऽतुच्छं छित्त्वाऽस्य पुच्छकम् ॥ ३८० ॥ पक्त्वा तातार्ययोः श्रेयःकृते देहि द्विजन्मनाम् । ममाऽऽत्मनश्च भोज्यायोपरिभागं तु पाचय ॥ ३८१ ॥ इति मे शृण्वतो देवी, वीक्षमाणस्य चाऽभवत् । जातिस्मृतिस्तया पुच्छं, छित्त्वा प्रैषि म[2]हानसे ॥ ३८२ ॥ शेषं मदीयगात्रं तु, वेष[3]वारं वितीर्य सा । हरिद्रावारिणा सिक्त्वा, सर्पिषा तलितं व्यधात् ॥ ३८३ ॥ छिन्नं भिन्नं च पक्वं च, मां खादिष्यति नन्दनः । वेद्मीति वेदनाक्रान्तो, धर्मध्यानं तु नाऽऽदधे ॥ ३८४ ॥ [ पञ्चभिः कुलकम् ] इतश्च शिशुमारोऽपि, मृत्वा स च्छागिकाऽभवत् । तद्गर्भे छागभावेनोत्पन्नो जातो युवाऽभवम् ॥ ३८५ ॥ भजंस्तां जननीं दृष्टो, यूथाधिपतिना हतः । स्ववीजेनैव तद्गर्भे, समुत्पन्नो स्मि कर्मतः ॥ ३८६ ॥ सेयं मृग[4]व्यव्यावृत्तमत्पुत्रेणेपुणा हता । विलोकिता सगर्भेति, ज्ञात्वा तुन्दमदार्यत ॥ ३८७ ॥ अजापालार्पितोऽस्म्यन्यस्तन्य-

---

१ मत्स्यविशेषतया । २ पाकस्थाने । ३ मसाला इति भाषायाम् । ४ मृगव्य० शिकार इति भाषायाम् ।

पानेन जीवितः । अभवं च युवा चक्रे, पूजा मत्सूनुनाऽन्यदा ॥ ३८८॥ कुलदेवीपुरः पञ्चदश व्यापादिता महाः । सुसंस्कृतं कृतं मांसं, भोजनाय द्विजन्मनाम् ॥ ३८९॥ [ युग्मम् ] स्यात्पवित्रमुखो मेषो, लोकवादोऽयमस्ति च । ततो महानसद्वारि, वद्धोऽस्म्यानाय्य सूनुना ॥ ३९०॥ तत्काकशुनकोच्छिष्टराद्धपक्वविशुद्धये । उच्छिघितं मया भुक्त्वा, समुत्तस्थुर्द्विजातयः ॥ ३९१॥ तदा सान्तःपुरस्तत्राऽऽगच्छद्गुणधरो नृपः । जातिस्मृत्याऽथ वृत्तान्तं, ममस्तं ज्ञातवानहम् ॥ ३९२॥ राज्ञा पङ्क्तीर्निवेश्याऽथ, नत्वा प्रोक्ता द्विजातयः । तातस्योपनमत्वेषा, तातम्बाया असौ पुनः ॥३९३॥ एतास्तु कुलदेव्या मे, उपतिष्ठन्तु पङ्क्तयः । तदुक्तेऽङ्गीकृते विप्रैरहं चित्ते व्यचिन्तयम् ॥ ३९४॥ इत्यनेकप्रकारेण, मदीये तनुजन्मनि । धर्मार्थं यतमानेऽपि कर्मभिर्दुःखभागहम् ॥ ३९५॥ भोजनाय तदा भूपः, सहितः सर्वमातृभिः । उपविष्टो मया दृष्टा, देव्यो न नयनावली ॥ ३९६॥ क्व सेति यावद् ध्यायामि, तावच्चेटिकयैकया । प्रोचेऽन्या प्रति हे ! सुन्दर्यद्यैव महिपा हताः ॥ ३९७॥ दुःसहः पूतिगन्धोऽयं, तत्कुतोऽथाऽवदत्परा । प्रेममञ्जूषिके ! नैष, गन्धो महिषघातजः ॥३९८॥ किं त्वयं नयनावल्या, रसलम्पटताजुषः । मत्स्यभक्षणसंभूतकुष्ठग्रस्ताङ्गसम्भवः ॥ ३९९॥ इतराऽऽह न मत्स्योत्थः, कुष्ठोऽयं सखि ! सुन्दरि ! । किं तु विश्वस्तभूपालविषव्यापादनाघभूः ॥ ४००॥ एतयाऽलं ततो यावोऽन्यतो माऽऽज्ञां दिशत्वसौ । गते चेट्यौ मया सा तु, सविशेषं निरीक्षिता ॥ ४०१॥ दृष्टा चैकेन पार्श्वेनोपविष्टा मक्षिकावृता । बहिर्विनिर्गता ताम्रनयना नयनावली ॥ ४०२॥ ततोऽहं तीव्रदुःखेन, प्रवृत्तः शोचितुं प्रियाम् । ही ! रूपव्यत्ययादेषा, जन्मान्तरमिवाऽऽसदत् ॥ ४०३॥

---

१ महिषा । २ उद्भ्रातं ।

ययाऽङ्घ्रिमुखवक्षोजैः, पद्मेन्दुकलशा जिताः । शीर्णघ्राणाङ्गुलिः कृम्याकुला सैवेयमन्यथा ॥४०४॥ कुन्तलाधरदृग्भिर्या, मुनीनामहरन्मनः । कामिनामपि निर्वेदं दत्ते संप्रति सा हहा ! ! ! ॥४०५॥ यावद् ध्यायाम्यदस्तावद्राज्ञाऽऽहूय निदेशितः । सूदः सैरिभमांसं मे, रोचते नान्यदानय ॥४०६॥ षण्डाज्ञं भूपतिं मत्वा, कालक्षेपं तु रक्षितुम् । छित्त्वैकं पार्श्वकं मेऽसौ, भटित्रीकृत्य च क्षणात् ॥४०७॥ प्रैषीन्नृपाय तेनापि, तातस्योपनमत्विति । अग्रासनस्थविप्राग्र्याद्दत्तशेषमभुज्यत ॥४०८॥ [ विशेषकम् ] अथ मज्जननीजीवः, कलिङ्गविषये महः । युवा विशालामागच्छत्क्रयाणकभरं वहन् ॥४०९॥ तेन स्नाना-म्बुपानार्थमेतो नृपकिशोरकः । समग्रमन्दुराश्रेष्ठः, सिप्रानद्यामहन्यत ॥४१०॥ राज्ञा ज्ञात्वा तमानाय्य, महिषं प्रोचिरे निजाः । यद्भटित्रं विधत्तैनं, जीवन्तमपि वेगतः ॥४११॥ सर्वदिक्षु ततस्तस्य, निखन्याऽऽयमकीलकान् । लोहशृङ्खलया बद्ध्वा, पातितः पृथिवीतले ॥४१२॥ तत्पुरो निहितं हिङ्गुलवणत्र्यूषणाम्भसा । भृतं महाकटाहं च, ज्वालितो ज्वलनस्ततः ॥४१३॥ परितः खादिरैः काष्ठैस्तदासन्नप्रदीपितैः । शुष्यत्ताल्वोष्ठकण्ठोऽयमाकण्ठं तज्जलं पपौ ॥४१४॥ तेन क्षारेण बाढं स, देहस्यान्तः प्रदीपितः । पार्श्वकेन द्वितीयेन, किल्बिषं निर्गतं ततः ॥४१५॥ राजादेशात्ततः पक्वं, पक्वं छित्त्वाऽस्य जाङ्गलम् । प्रैषि सूपकृतागाच्च, नृपस्य परिवेषकः ॥४१६॥ स प्रोचेऽमुं विजातीयमरे किंचिद्भटित्रकम् । समर्पय तत-स्तेन, क्रूरदृश्याऽहमीक्षितः ॥४१७॥ ततस्त्रस्तस्य मूढस्य, मम कण्ठगतात्मनः । द्वितीये पार्श्वके छिन्ने, देहो जीवेन तत्यजे ॥४१८॥ ममं सैरिभजीवश्चाहं च भद्र ! गतायुषौ । अभूव कुक्कुटीगर्भे, विशालान्त्यजपाटके ॥४१९॥ समये प्रसवस्या-

१ सैरिभ० महिष । २ भटित्र० शूलोपरि पक्वमांस । ३ महिष । ४ त्रयाणामुष्णानां शुण्ठीपिप्पलीमरीचानां समाहार. त्र्यूषणम् । ५ मामं ।

ऽस्मन्माता विशसितौतुना[1] । तेन सा भक्षिता पुञ्जे, पतितं त्वण्डकद्वयम् ॥४२०॥ त्यजन्त्याऽन्त्यजया पुञ्जे कयापि
स्थगितं च तत् । तदूष्मणा न जीवेन, त्यक्तावावां स्वकर्मतः ॥४२१॥ स्फुटिताण्डकयोस्ताम्रचूडोऽहं सा तु कुक्कुटी ।
जातौ दृष्टौ च चण्डालदारकेणाऽथ जीवितौ ॥४२२॥ आवयोश्चन्द्रिकाशुभ्रा, पिच्छश्रेणिरभूत्क्रमात् । गुञ्जार्धकीरव-
क्त्राभा, बभूव मम मञ्जरी ॥४२३॥ गरुत्मच्चञ्चुतुल्या[2] च, चञ्चूरजनि मेऽसिता । अन्यदाऽऽवामपश्यत्तु, तत्पार्श्वे दण्ड-
पाशिकः ॥४२४॥ योग्यं युग्ममिदं राज्ञः, खेलनायेति सोऽग्रहीत् । दीनारेणोपदीचक्रे, राज्ञो गुणधरस्य च ॥४२५॥
तुष्टो राजा जगादैनं, यत्र यत्र व्रजाम्यहम् । आनेयौ तत्र तत्रैतौ, तदादेशं च सोऽग्रहीत् ॥४२६॥ नृपोऽन्यदा सशुं-[3]
द्धान्तो, वसन्तक्रीडया ययौ । कुसुमाकरमुद्यानमक्रीडत्कदलीगृहे ॥४२७॥ आवाभ्यां सहितो दण्डपाशिकोऽशोकवी-
थिकाम् । ययौ शशिप्रभं सूरिं, साधुयुक्तं ददर्श च ॥४२८॥ अलीकं वन्दनं कृत्वा, तन्मूले न्यषदत्तु सः । शान्तमूर्ति-
ममुं वीक्ष्य, मनाक् शान्त उवाच च ॥४२९॥ कीदृशो भवतां धर्मो, भगवानाह सुन्दर ! । एक एव भवेद्धर्मो, भेदान्मू-
र्दस्तु कल्पयेत् ॥४३०॥ संक्षेपात्कथ्यते सैष, न कार्यं परपीडनम् । नासत्यं भाष्यमादेयं, नादत्तं परवस्तु च ॥४३१॥
अब्रह्म वर्ज्यं स्वर्णाद्यः, परित्याज्यः परिग्रहः । भक्तं निशि द्विचत्वारिंशद्दोषाढ्यं च वर्जयेत् ॥४३२॥ [ युग्मम् ] स प्राह
यतिधर्मोऽयं, गृहिधर्मं निवेदय । गुरुणाऽणुव्रताद्येऽथाख्याते धर्मे जगाद सः ॥४३३॥ करोम्यमुमहं धर्मं, वेदोक्तविधिना
पुनः । त्यजामि पशुहिंसां न, प्रभुस्तं प्रत्यभाषत ॥४३४॥ यदि त्यजसि नो हिंसामिदं कुक्कुटयुग्मवत् । ततस्त्वमपि संसा-

१ विशसिता० सूता । २ गरुत्मत्० गरुड । ३ सान्तःपुरः ।

रसागरेऽनर्थमाप्स्यसि ॥४३५॥ तेनोक्ते कथमेतेनाऽनर्थः प्राप्तोऽवदद्गुरुः। इयं जनन्ययं सूनुः, पिष्टकुक्कुटघातकौ ॥४३६॥ शिखिश्वानावभूतां तौ, ततः पृषतभोगिनौ । सुंसुमारमहामत्स्यावजामेषौ चतुर्थके ॥४३७॥ अभूतां मेषमहिषौ, ततः कुक्कुटपक्षिणौ । दुःखजातं तयोर्जातं, जन्तुघातजपातकात् ॥४३८॥ [ विशेषकम् ] तद्दण्डपाशिकः श्रुत्वा, प्रोवाचाऽलं भवेन मे । देहि व्रतानि भगवन् !, गृहिधर्मोचितानि तु ॥४३९॥ न्यस्य पञ्चनमस्कारं, तस्मिन्पञ्चगृहिव्रती । न्यस्ता भगवताऽऽवाभ्यामपि जातिः स्मृता निजा ॥४४०॥ ततः संपन्नबोधाभ्यामावाभ्यां कूजितं मुदा । दूष्यान्तरस्थितेनेदं, श्रुतं गुणधरेण च ॥४४१॥ जयावल्या समं देव्या, क्रीडां कुर्वन्नयं नृपः । आदाय तीरिकासारमिषुमिष्वासमभ्यलम् ॥४४२॥ पश्य मे शब्दवेधित्वं, देवीमुक्त्वाऽमुचच्छरम् । हतौ मृतौ जयावल्याः, कुक्षावावां बभूविव ॥४४३॥ [ युग्मम् ] गर्भानुभावतो जातेऽभयदानस्य दोहदे । नृपः सकलसत्त्वेष्वभयदानमदापयत् ॥४४४॥ दारको दारिका चापि, जातावावामनेहसि । ममाभयरुचिः पुत्र्याः, संज्ञाऽभयमतिस्त्वभूत् ॥४४५॥ पुत्र्या विवाहं मे यौवराज्यं दध्यौ च भूपतिः । अथ पुर्या विनिर्याय, पापर्द्धौ वनमभ्यगात् ॥४४६॥ स्पृष्टः सुरभिवातेन, तदुद्यानं विलोकयन् । महामुनिं सुदत्ताख्यं, ध्यानस्थं नृप ऐक्षत ॥४४७॥ तं चाऽपशकुनं ध्यायन्नृपस्तस्य कदर्थनाम् । विधित्सुर्मोचयाञ्चक्रे, वक्रधीर्वक्रवालधीन् ॥४४८॥ ते वेगादागतास्तस्य, तपसा निष्प्रभीकृताः । औषधप्रभया ध्वस्तविषा विषधरा इव ॥४४९॥ ततः प्रदक्षिणां कृत्वा, शुनकैः प्रणतो मुनिः । सत्रपोऽथ नृपोऽध्यायद्वरमेते श्वपूरुषाः ॥४५०॥ न पुनः पुरुषश्वाऽहमस्याऽपि हि महामुनेः । ध्याय-

१ दूष्य० वस्त्रनिर्मितगृह 'तम्बु' इति लोके प्रसिद्धम् । २ इष्वास० धनुष् । ३ कुक्कुरान् ।

ष्रकुशलं यावदिति ध्यायति भूपतिः ॥४५१॥ तस्यैव तावदाबाल्यान्मित्रं जिनवचोरतिः । अर्हद्दत्ताभिधः श्रेष्ठितुग्नन्तुं मुनिमागमत् ॥४५२॥ ज्ञात्वोपसर्गबुद्धिं तां, राज्ञो मुनिपतिं प्रति । स प्राह किमिदं देव!, राज्ञोचे नृशुनोचितम् ॥४५३॥ स प्राह नरसिंहस्त्वं, तदुत्तर तुरङ्गमात् । वन्दस्व भगवन्तं च, सुदत्ताख्यं महामुनिम् ॥४५४॥ अस्य ह्यमरदत्ताख्यक-लिङ्गाधीशजन्मनः । यौवने कुर्वतो राज्यमारक्षेण घृतोऽन्यदा ॥४५५॥ स्तेनोऽस्मान्तिकमानीय, प्रोक्तं चैतेन देव! यत्। प्रविश्य वेश्म मुष्टं च, निहतश्च महानरः ॥४५६॥ [ युग्मम् ] निःसरन्विघृतोऽस्माभिः, प्रमाणं संप्रति प्रभुः । एतेना-हूय्य पृष्टाश्च, धर्मशास्त्रस्य पाठकाः ॥४५७॥ एतदीयागसः कः स्याद्दण्डस्ते च लभापिरे । अयं पुरुषहन्ता च, परद्रव्य-हरश्च यत् ॥४५८॥ परितो भ्रमयित्वा तच्चत्वरेषु त्रिकेषु च । जनाध्यक्षं महादण्डः, क्रियेतेति ऋषेर्वचः ॥४५९॥ [ पञ्चभिः कुलकम् ] श्रुत्वेत्यनेन धिग्राज्यं, यत्रैतदनुमन्यते । तदलं राज्यसौख्येन, विपाककटुकेन मे ॥४६०॥ ध्यात्वे-त्यानन्दसंज्ञाय, राज्यं दत्त्वा स्वबन्धवे । प्रतिपन्नव्रतो गुर्वन्तिकेऽयं वन्द्य एव हि ॥४६१॥ ससंभ्रममथो गत्वा, राज-र्षिमनमन्नृपः । पारयित्वा ततो ध्यानममुना धर्मलाभितः ॥४६२॥ भाषितश्च महाराजोपविशेति सगौरवम् । हृदि सानु-शयो दध्यौ, धिग्धिग्मामृषिघातकम् ॥४६३॥ शिरश्छेदं विना नान्यत्प्रायश्चित्तं ममास्ति च । धर्तुं न शक्नोम्यात्मानम-कृत्याचारदूषितम् ॥४६४॥ ततो मे जीवितेनाऽलं, कुर्वे हृदि समीहितम् । ध्यायन्निति नृपः प्रोचे, चतुर्ज्ञानवताऽमुना ॥४६५॥ नात्मघातमयं राजन्प्रायश्चित्तं प्रशस्यते । आत्मनोऽपि परस्यापि, वर्जनीय हि पीडनम् ॥४६६॥ किं चार्हद्वा-क्यमेवेदमात्मशुद्धिविधायकम् । संपादयासि ते किं च, श्रीसर्वज्ञस्य शासनम् ॥४६७॥ हृदाकूतपरिज्ञानतुष्टो राजा मुनी-

श्वरम् । नत्वाऽपृच्छदथ प्रायश्चित्तं किं? स्याद् गुरुर्जगौ ॥४६८॥ विपक्षासेवनं प्रायश्चित्तं तच्चानिदानतः । मिथ्यात्वयुक्तमज्ञानं, निदानमिति कीर्त्यते ॥४६९॥ तच्चान्यथा स्थिते भावे, प्रवृत्तिः स्याद्यदन्यथा । त्वयाऽपशकुनत्वेन, ध्यातोऽहं हृदि यत्किल ॥४७०॥ अस्नानोऽयं शिरस्तुण्डमुण्डः पाषण्डवेषभृत् । भिक्षुश्चेति महाराज!, तत्राकर्णय कारणम् ॥४७१॥ [युग्मम्] कृते स्नाने क्षणं शौचं, रागमानौ च चेतसि । स्त्रीजनप्रार्थनीयत्वं, ब्रह्मचर्यस्य दूषणम् ॥४७२॥ घातो जलस्थजीवानामन्यसत्त्वविबाधनम् । क्षीरक्षालनमङ्गार, इवाज्ञानप्रकाशनम् ॥४७३॥ अस्नाने तु न दोषास्ते किं च पावित्र्यकारणम् । कृपैव सर्वसत्त्वेषु, मनोवचनकर्मभिः ॥४७४॥ निष्कषायाः सदा गुप्तेन्द्रियाः सुविशदव्रताः । सद्ध्याननिरता नित्यं, शुचयो हि मुनीश्वराः ॥४७५॥ सङ्गतं च शिरस्तुण्डमुण्डनं जीवरक्षणात् । पाषण्डमपि सर्वज्ञप्रोक्तं नैव विरुध्यते ॥४७६॥ सर्वारम्भनिवृत्तस्य, भिक्षा श्लाघ्या हि सन्मुनेः । श्रमणत्वमतो राजन्परमं मङ्गलं मतम् ॥४७७॥ कुतोऽपशकुनस्तत्तो, श्रुत्वेति जगतीपतिः । मिथ्यात्वतिमिरे नष्टे, पपात मुनिपादयोः ॥४७८॥ उवाच च मया त्यक्तं, निदानं तत्क्षमस्व मे । अपराधं मुनिः प्राह, क्षमारूपा हि साधवः ॥४७९॥ वीतरागवचो ह्येतत्कर्तव्या मुनिना क्षमा । आक्रोशयातनाघातधर्मभ्रंशकरेष्वपि ॥४८०॥ नृपोऽध्यायद्भगवतो, ज्ञानस्याऽविषयोऽस्ति न । पृच्छामि सविशेषं तत्तातततताम्बयोर्गतिम् ॥४८१॥ ध्यात्वेति भूभुजा पृष्टः, पिष्टकुक्कुटघातजाम् । केक्यादितदपत्यत्वपर्यन्तां मुनिराख्यत ॥४८२॥ [युग्मम्] राजा दध्यौ भवो निन्द्यः, स्त्रीजनश्चानवस्थितः । मोहो महानिहाकृत्यं, विपाके दारुणं तथा ॥४८३॥ पिष्टकुक्कुटघातोऽपि, यदेवंविधदुःखदः । निर्मन्तुजन्तुहन्तुर्मे, लक्षशः का गतिस्ततः ॥४८४॥ गन्ताऽस्म्यहमवश्यं तन्नरके नरकीटकः ।

प्रोचे मनो महाराज!,
उपायः कोपि नास्त्यस्याऽपायस्य परिरक्षणे ॥४८५॥ अथ प्राच्यैः सुदत्तेन, दत्तेन सुकृतैः कृतैः। दुष्कृतेष्वनुतापेन, चित्तरत्नस्य शोध-
खेदमेदस्वि मा कृथाः ॥४८६॥ उपायोऽस्ति जिनोक्तस्य, प्रतिपत्तिर्निबोधताम्। मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानां च जन्तुषु ॥४८८॥ प्राक्कर्माणि
नम् ॥४८७॥ सर्वारम्भपरित्यागश्चारित्रस्योररीकृतिः। प्रयान्ति परमां गतिम् ॥४८९॥ [ विशेषकम् ] राज्ञोचे स्वल्प-
क्षपन्तीत्थं, न बध्नन्ति नवानि च। ततः क्षपितकर्माणः, स्यात्सुगतिः कथम् ॥४९०॥ मुनिरूचे चरित्रस्याऽसाध्यमस्ति न
केनापि, पापेन गतिरीदृशी। भवेत्तन्मे महापापकृतः विषं यथाऽप्रतीकारमल्पमप्यसुनाशनम्। पापमप्यप्रतीकारं,
किंचन। कल्पद्रुकामधुक्चिन्तारत्नातीतप्रभावतः ॥४९१॥ जरयन्ति महाविषम्। चारित्रेण महापापमपि संसारिणस्तथा
तथा सौख्यस्य नाशनम् ॥४९२॥ यथा कृतप्रतीकारा, रुच्या दोषनिवर्तनम् ॥४९४॥ उक्तं च ज्ञानवान्
॥४९३॥ नृपः प्रोवाच भगवंश्चारित्रं कीदृगुच्यते। गुरुः प्राह ज्ञानपूर्वं, इदं सानुभवं कर्मविगमस्य निबन्धनम्।
रोचमानो दोषान्निवर्तते। अन्यथा त्वप्रवृत्तिश्चानवृत्तिश्चैव भावतः ॥४९५॥ दोषपोषनिवर्तनम्। तद्धन्योऽसि त्वया
राज्ञोचे सेवमानस्य, त्वां मे ज्ञानं न दुर्लभम् ॥४९६॥ ततस्तीव्ररुचिस्तस्या, आज्ञां भगवतस्तस्मादनुतिष्ठासि सांप्र-
सार्धं, दर्शनं यस्य मेऽभवत् ॥४९७॥ कदापि दर्शनं दत्ते, नाधन्यानां महानिधिः। नृपः प्रोवाच मन्त्रिणः ॥४९९॥
तम् ॥४९८॥ किं चास्मि श्रमणत्वस्य, योग्योऽहं गुरुरूचिवान्। कोऽन्यो योग्यस्ततो हृष्टो, प्रभोः प्रमाणमादेश,
कार्योऽभयरुचे राज्याभिषेकः खेदवर्जितैः। भाव्यं भगवतः पार्श्वे, मुदा गृह्णाम्यहं व्रतम् ॥५००॥ गान्धर्वाद्यसमापितम्।
इत्युक्त्वा ते ययुः पुरे। निवेदिते च पौराणां, श्रुतमन्तःपुरेण तत् ॥५०१॥ हित्वा गुणनिकालेख्यगान्धर्वाद्यसमापितम्।

हाहारवं प्रकुर्वाणमन्तःपुरमवाप च ॥५०२॥ ततश्चरणचारेणाऽभयमत्या युतोऽप्यहम्। समेतस्तत्र दृष्टश्च, सर्वैरपि नरेश्वरः ॥५०३॥ भूमौ निविष्टं संविग्नं, तं वीक्ष्याऽऽच्छत्रचामरम्। उवाचान्तःपुरं देव!, किमुद्विग्न इवेक्ष्यसे ॥५०४॥ स प्राह भववैराग्याज्जगादान्तःपुरं ततः। कीदृक् ते भववैराग्यं, स प्राहाऽथावयोः कथाम् ॥५०५॥ तच्छ्रुत्वा मूर्च्छितावागमसंज्ञौ पतितौ भुवि। हाहेति सर्वदेवीभिर्गदितं च सगद्गदम् ॥५०६॥ अम्बा बाष्पजलक्लिन्ननेत्रा नौ पतितोपरि। आवाभ्यां लब्धसंज्ञाभ्यां, दुःखेनाश्वासिता ततः ॥५०७॥ विज्ञप्तोऽथ नृपो राजन्नलं नौ विषयैरिमैः। आवयोरनुजानीहि, दुःखौघशमनं व्रतम् ॥५०८॥ तदनुज्ञाय दत्त्वा च राज्यं विजयवर्मणः। जामेयस्य विधायाथ, चैत्येष्वष्टाहिकामहम् ॥५०९॥ सान्तःपुरप्रधानोऽयमावाभ्यां सह भूपतिः। व्रत्यभूदथ विज्ञप्तः, श्रीसुदत्तमुनिर्मया ॥५१०॥ [ युग्मम् ] यत्प्रभो! नयनावल्या, अप्यनुग्रहमातनु। असावप्यार्हतं धर्मं, प्राप्नोतु त्वत्प्रसादतः ॥५११॥ भगवानाह सा धर्मकथाया न हि गोचरे। कर्मव्याधिः प्रवृद्धोऽस्या, अकृत्यापथ्यसेवनात् ॥५१२॥ बद्धं तृतीयपृथ्व्यां च, नरकायुर्न चासकौ। धर्मचिन्तामणिं मोहपरायत्ता प्रपद्यते ॥५१३॥ किं च स्नेहं विमुच्याऽस्यां, संसारपरिवर्धनम्। त्रैलोक्यदुर्लभं लब्धं, व्रतमेव निजं कुरु ॥५१४॥ आवां गुरुप्रसादेन, प्रपाल्याथ व्रतं चिरम्। उदपद्यावहि स्वर्गे, निसर्गसुखशालिनौ ॥५१५॥ ततः कोशलदेशेऽहं, साकेतनगरेशितुः। विनयंधरराजस्य, लक्ष्मीवत्यां सुतोऽभवम् ॥५१६॥ नाम्ना यशोधर इति, पितृभ्यां च प्रतिष्ठितः। वृद्धः कलाकलापेन, शरीरोपचयेन च ॥५१७॥ च्युत्वाभयमतेर्जीवः, पाटलीपुत्रपत्तने। ईशानसेनभूपस्य, विजयाया सुताऽभवत् ॥५१८॥ असौ विनयमत्याख्या, क्रमाद्यौवनमासदत्। पित्रा स्वयंवरा मह्यं, प्रेषिता च कनीयिणा

॥५१९॥ ससैन्ययाऽपि समेता सा, तुष्टोऽहं हृदयेऽधिकम् । आवासिता बहिर्भागे, तातेन बहुमानिता ॥५२०॥ दत्ते मुहूर्ते दैवज्ञैः, कृतःस्नानादिकक्रियः । मदद्भिर्मङ्गलातोद्यैर्नृत्यति प्रमदाजने ॥५२१॥ पठत्सु बन्दिवृन्देषु, गायन्तीषु कलस्वरम् । श्वेतहस्तिनमारूढो, राजवृन्देन संयुतः ॥५२२॥ ईशानसेनभूपालपुत्रीमुद्वोढुमुत्सुकः । निरीक्ष्यमाणः पौरीभी, राजमार्गमुपागमम् ॥५२३॥ [ विशेषकम् ] अथ मे दक्षिणं चक्षुः, स्फुरितं मुदितं मनः । चिन्तितं च मया भाव्यं, प्रमोदेनाऽपरेण मे ॥५२४॥ तदा गोचरचर्यायां, कल्याणश्रेष्ठिमन्दिरे । दृष्टः साधुरसुं वीक्ष्य, ममोत्पन्नश्च संभ्रमः ॥५२५॥ अभ्यस्तसाधुधर्मत्वाच्चित्रत्वात्कर्मणां गतेः । हस्तिस्कन्धगतस्यैव, जातिस्मृतिरभून्मम ॥५२६॥ निपतन्तं च मां पार्श्ववर्ती हस्तिपकोत्तमः । रामभद्राभिधो दध्रे, हा ! किमेतदिति ब्रुवन् ॥५२७॥ निषिद्धाश्च ततो दूरात्तत्र वादित्रवादकाः । अविषाद्यपि भूपालो, विषण्णश्च समागमत् ॥५२८॥ अयं मदनितः पूगफलाद्यैरिति सेवितः । श्रीखण्डवारिणा लब्धचेतनः स्मेरलोचनः ॥५२९॥ संसारचारकोद्विग्नः, कृतासनपरिग्रहः । प्रोक्तस्तातेन किं ? वत्स !, अयोचे भववैशसम् ॥५३०॥ [ युग्मम् ] तातः प्रोवाच कः कालः, साम्प्रतं भववैशसे । मयोच्चेऽसौ कथाऽऽख्यातुं, संक्षेपेण न शक्यते ॥५३१॥ क्वचिन्निविश्य तत्तातो, मम मातृजनं जनम् । आकारयतु येनाऽहमाख्यामि भववैशसम् ॥५३२॥ तथा कृत्वा नृपः प्राह, वत्स ! संसारवैशसम् । निवेदय मया प्रोचे, त्वं ममाऽनुभवं शृणु ॥५३३॥ गुणहीनः सदा तात !, भव एष स्वभावतः । स्वरूपमस्य जानन्ति, न महामोहमोहिताः ॥५३४॥ अकृत्येषु प्रवर्तन्ते, समीक्षन्ते च नाऽऽयतिम् । सुराणामपि तुल्यास्तु,

१ वैशस० दुःख ।

जन्ममृत्युवियोगकाः ॥५३५॥ दारुणश्च विपाकोऽस्य, भवस्य प्रविजृम्भते । यत्पिष्टकुक्कुटस्यापि, वधः परिणतः कथम् ॥५३६॥ उक्त्वेति निजदुःखानुभवयुक्तं सविस्तरम् । आख्यं सुरेन्द्रदत्तादिजातिस्मृत्यन्तमात्मनः ॥५३७॥ अकृत्याचरणस्याहो, विपाकः पश्य दारुणः । जल्पन्निति नृपाम्बादिलोकः संविग्नतामगात् ॥५३८॥ ततो मयोक्तमीदृक्षं, परिणामं निरीक्ष्य मे । विरक्तं भवतश्चित्तं, जैनबोधश्च जृम्भितः ॥५३९॥ अनुजानातु मां तातो, यथा तातानुभावतः । निष्फलं मानुषं जन्म, सफलं विदधाम्यहम् ॥५४०॥ ततस्तातोऽवदन्मोहात्सफलं तेऽस्तु जीवितम् । परिणीय वधूमेतां, प्रजानां कुरु पालनम् ॥५४१॥ मयोचे तात! मच्चित्तं, विरक्तं भवचारकात् । तद्दारसंग्रहेणालं, कोऽत्र दोषो नृपोदिते ॥५४२॥ मयोचेऽसौ मदावासः, प्रतिपक्षः शमस्य च । व्याधिर्निरौषधो मित्रं, व्याक्षेपस्य क्षयो धृतेः ॥५४३॥ सद्ध्यानवैरी मोहस्याऽऽयतनं दुःखजन्मभूः । सीदन्ति पुरुषा ह्यत्र, पञ्चास्या इव पञ्जरे ॥५४४॥ [युग्मम्] नोचितं किं च सौवर्णस्थालेनाऽमेध्यशोधनम् । विषया हि पुरीषाभाः, स्वर्णस्थालं नृजन्म तु ॥५४५॥ तदलं सर्ववार्ताभिरनुजानीहि मे व्रतम् । राज्ञोचे वक्षि सत्यं त्वं, पीड्येऽहं स्नेहकातरः ॥५४६॥ मयोक्तं तात! सत्यस्य, स्नेह एष परो रिपुः । अयमेव प्रधानं च, भवबन्धनिबन्धनम् ॥५४७॥ भवो दीप इव स्नेहसहितः संसरत्यलम् । निरुपायो न निर्वाणं, लभते स कथंचन ॥५४८॥ नृपेणोक्तमिदं सत्यं, खिद्यते किं तु सा वधूः । मयोक्तमल्पकं ह्येतदन्यच्चास्यै निवेद्यते ॥५४९॥ कदापि सापि श्रुत्वैवं, बोधं प्राप्नोति तद्दृशम् । तातोऽथ युक्तमित्युक्त्वा प्रजिघाय पुरोधसम् ॥५५०॥ एवं स्थिते किमस्माभिः, कार्यं गत्वेति तां वद । स शङ्खवर्धनाख्योऽथ, गत्वाऽऽयातोऽवदन्नृपम् ॥५५१॥ महाराज! सुसंपन्नाः, कुमारस्य मनोरथाः । गतः सन् बहुमानेन, वेत्रिणाऽहं प्रवेशितः

॥५५२॥ सौवस्तिकस्तवेत्युच्चै, राजपुत्र्याऽभिनन्दितः । तद्दापितासने चोपविश्य तामित्यभाणिषम् ॥५५३॥ किंचिद्वक्तव्यमस्तीति, सा प्राहाऽऽर्यो वदत्विति । मयोक्तमेषा देवाज्ञा, सावधाना ततः शृणु ॥५५४॥ विधाय साऽथ नीरङ्गीमासनादवतीर्य च । बद्धाञ्जलिरुवाचेति, किमादिशति मे गुरुः ॥५५५॥ मया प्रोक्तं कुमारस्याऽऽगच्छतः साधुदर्शनात् । जातिस्मृतौ स्मृताः पूर्वभवास्त्वं तान्निशामय ॥५५६॥ विशालायां पुरि पुराऽमरदत्तोऽभवन्नृपः । देवी यशोधरा तस्य, सतीव्रतयशोधरा ॥५५७॥ तदङ्गभूर्बभूवाऽहं, वीतेऽस्माच्चवमे भवे । सुरेन्द्रदत्तनामास्मि, मन्त्रार्यो नवलग्नको ॥५५८॥ जल्पामि यावदेतावत्तावन्मोहं गता कनी । आकुलोऽभूत्परिजनो, विषण्णोऽहं च चेतसि ॥५५९॥ [illegible] तच्चेतना भाषिता मया । किमेतदिति सा प्राह, संसारस्य विचित्रता ॥५६०॥ मया कथमिति प्रोक्ते,सा प्राहऽहं यशोधरा । तन्माता प्राग्भवेऽतीते, नवमेऽथवमेऽभवम् ॥५६१॥ जल्पित्वेति तयाऽऽख्यायि, सकलं चरितं निजम् । यच्चाख्यातं कुमारेण, भवतां भवतान्तिदम् ॥५६२॥ मयाऽथ जल्पितं राजपुत्रि !, व्यतिकरादितः । भवोद्विग्नः कुमारोऽयं, जिनदीक्षां जिघृक्षति ॥५६३॥ एवंविधे किमस्माभिः, कार्यमित्यादिशद् गुरुः । तयोदितं महाराजमार्यो विज्ञापयत्विति ॥५६४॥ भवोऽयमीदृशस्तात !, सकर्णानां विरागदः । किं ? स्नेहेन कुमारस्य, कुरुध्वं चित्तवाञ्छितम् ॥५६५॥ भवे विरक्तचित्ताया, ममाऽप्यादिशत व्रतम् । नृपः श्रुत्वेति वृत्तान्तं, परं संवेगमागमत् ॥५६६॥ अवोचच्च न पुत्रस्त्वं, गुरुर्धर्मनियोजनात् । प्रव्रज्यां प्रतिपद्येऽहमपि तद्भवता सह ॥५६७॥ अम्बा अप्यूचिरे युक्तमार्यपुत्रेदमस्थिरे । नटपेटकतुल्येऽत्र, किं स्नेहेन

१ नीरङ्गी० 'बुरखा' इति भाषायां प्रसिद्धम् । २ सम्पूर्णं ।

कुडुम्बके ॥५६८॥ मयोदितं यथासौख्यं, प्रतिबन्धं विधत्त मा। तातेनाऽथ महादानं, दापितं दीनदुःस्थिते ॥५६९॥ पूजा च सर्वचैत्येषु, कारिता मानितो जनः। यशोवर्धननामा मेऽनुजो राज्ये निवेशितः ॥५७०॥ [ युग्मम् ] मया विनयमत्या च, शुद्धान्तेन जनैरपि । युक्तस्तातो व्रतं पूज्येन्द्रभूतेरन्तिके ललौ ॥५७१॥ तदेतच्चरितं स्वं मे, भद्र! निर्वेदकारणम् । धनः प्राह न कस्येदमन्यस्यापि मनोभिदे ॥५७२॥ ईदृशो ह्येष संसारस्तदादिशतु मे प्रभुः । यत्कर्तव्यं मयाचाऽऽर्यः, प्रोवाचाऽथ यशोधरः ॥५७३॥ उत्सर्पिण्योऽवसर्पिण्योऽसंख्याता वसुधादिषु । वनस्पतावनन्तास्तु, तास्तिष्ठति शरीरभृत् ॥५७४॥ ततस्त्रसत्वं तस्माच्च, तिर्यक्त्वं मर्त्यता ततः । आर्यदेशः शुभा जातिः, समस्तेन्द्रियपाटवम् ॥५७५॥ जीवितं धर्मबुद्धिश्च, जिनधर्मे स्थितिस्ततः । श्रद्धा तस्यां च चारित्रे, प्रतिपत्तिः सुदुर्लभाः ॥५७६॥ तस्यामपि मनःशुद्धिः, साम्यं तत्रापि दुर्लभम् । तत्प्राप्तावचिरेणापि, लभते परमं पदम् ॥५७७॥ [ कलापकम् ] तत्प्रपद्यस्व चारित्रं, किमन्येन कृतेन ते । अशाश्वता हि संयोगा, मृत्युः प्रभवति ध्रुवम् ॥५७८॥ एकवृक्षवसत्पक्षिसदृक्षाः स्वजनादयः । ततः संपन्नचारित्रपरिणामो धनोऽवदत् ॥५७९॥ प्रभुणाऽनुगृहीतोऽस्मि, निवेद्य जनकाम्बयोः । आदास्यामि परिव्रज्यामित्युक्त्वाऽगाद्धनो गृहम् ॥५८०॥ न्यवेदयच्च पित्रोस्तौ. दध्यतुः किं? भवेन नौ । तन्निवेश्य सुते भारं, प्रतिपद्यावहे व्रतम् ॥५८१॥ ध्यात्वा प्राह पिता सारं, मणिमुक्तादिकं धनम् । प्रतिजागृहि वत्स! त्वं, प्रतिपद्ये व्रतं त्वहम् ॥५८२॥ धनः प्राहोचितं ह्येतलब्धे मानुष्यकेऽनघे । प्राणिना कृत्यमेवेदमादिष्टं यदिदं पुनः ॥५८३॥ मणिमुक्तादिकं सारद्रव्यं त्वं प्रतिजागृहि । तस्य का सारता मृत्योः, समर्थं रक्षितुं किमु ॥५८४॥ किं वा जन्मजराहारि, निष्पुण्यं किमु नोज्झति । सम-

ग्रस्याऽर्थिवर्गस्य, किं मनोरथपूरकम् ॥५८५॥ परलोके गुणः कोपि, सद्द्रव्यस्य मृतस्य किम्? । पिताऽऽह न धनः प्रोचे,
किमनेन फलं ततः ॥५८६॥ [ कलापकम् ] तातोऽनुमन्यतां तन्मे, प्रव्रज्यामात्मना सह । श्रेष्ठ्यूचेऽनुमतं किं तु, यौवन-
स्याऽसमा गतिः ॥५८७॥ दुर्दमानीन्द्रियाणीह, वाढं प्रभवति स्मरः । आकर्षन्ति मनोहारिविषयाः पुरुषं मुहुः ॥५८८॥
धनः प्रोचेऽथ नो ताताविवेकाद्यौवनं परम् । निर्विवेका हि वृद्धत्वेऽपीक्ष्यन्ते विषयोन्मदाः ॥५८९॥ कुर्वन्ति कुन्तला-
न्कालान्सेवन्ते च रसायनम् । अप्रवृत्तौ प्रवर्तन्ते, नेक्षन्ते जीवितं गतम् ॥५९०॥ अन्ये तु यौवनावस्था, अपि विद्युल-
ताचलम्। जानन्ति जीवितं सौख्यमसारं चेन्द्रियार्थजम् ॥५९१॥ विपाकदारुणत्वं च, प्रमादस्य विदन्ति ते । पापहेतुपरित्रस्ताः,
सेवन्ते चरणं परम् ॥५९२॥ तस्मादकारणं तात!, यौवनं यद्विवेकिनः । न दुर्दमानि स्रोतांसि, दान्तानि स्युः शिवाय
च ॥५९३॥ स्मरोऽप्यनार्यसङ्कल्पैः, स्यात्तेषां त्यजने कुतः । प्रभवत्यपि न प्रायः, शमसातवतां हृदि ॥५९४॥ विषयाणां
च का नाम, स्यान्मनोहरता मता । इमे पुद्गलरूपा हि, शब्दाद्यास्तेऽनवस्थिताः ॥५९५॥ शुभा अप्यशुभास्ते स्युरशु-
भाश्च शुभाः क्वचित् । अनर्थभूतैरेतैः किं, दुःखदैः परमार्थतः ॥५९६॥ असंयोगे पुनः स्वस्वरूपे सविधवर्तिनि । मन्वा-
नान्वास्तवं सौख्यं, कर्षन्ति विषयाः कथम्? ॥५९७॥ तत्तातस्य प्रभावेण, सर्वं निर्विघ्नमेव मे । तत्प्रतिश्रुत्य तेनाथ, विद-
धेऽष्टाह्निकामहः ॥५९८॥ दापयित्वा महादानं, पितृभ्यां स्वजनैरपि । युतो यशोधराचार्यसमीपे प्राव्रजद्धनः ॥५९९॥
कियत्यपि गते काले, शुद्धसिद्धान्तबुद्धधीः । ज्ञातक्रियाकलापश्च, सम्यग्भावितभावनः ॥६००॥ एककप्रतिमां विभ्रन्न-

१ इन्द्रियाणि ।

गरे पञ्चरात्रिकम् । एकरात्रं वसन्ग्रामे, कौशाम्बीपुरमागमत् ॥ ६०१ ॥ [ युग्मम् ] इतश्च नन्दकः प्रातरप्येतमविलोकयन् । द्विधापि हि धनश्रीयुग्लङ्घयित्वा पयोनिधिम् ॥ ६०२ ॥ विस्मार्य तद्गिरा श्रेष्ठिधनयोः सुकृतं कृतम् । दत्त्वा समुद्रदत्ताख्यां, स्वस्य तत्र वसत्यसौ ॥ ६०३ ॥ [ युग्मम् ] धनर्षिरुचिते काले, गोचरे प्राविशद्गृहम् । नन्दकस्यैव दृष्ट्वोपलक्षितश्च धनश्रिया ॥६०४॥ साऽध्यायन्नायमम्भोधिमध्येऽपि पतितो मृतः । अहो! अधन्यता मे यत्पुनरक्षिगतोऽभवत् ॥६०५॥ साम्प्रतं तत्तथा कुर्वे, यथा वैरी न जीवति । दोपाकर इवाम्भोधिपतितः पुनरागतः ॥ ६०६ ॥ धनर्षिस्तु व्यतिक्रान्तं, याञ्चाकालं विचिन्तयन् । निर्जगाम धनश्रीस्तु, प्रद्वेपमधिकं दधौ ॥ ६०७॥ अयं प्रत्यभिजज्ञे मां, वेगतो निरगात्ततः । ध्यात्वेति चेटिकामूचे, स्वमनीषितमेषितुम् ॥ ६०८ ॥ हले! क्व? श्रमणोऽस्त्येष, सम्यग्ज्ञात्वा निवेदय । यदादिशति देवी मामित्युक्त्वा निर्गता च सा ॥ ६०९ ॥ लग्ना धनस्य पृष्ठेऽसौ, धनश्चालब्धभोजनः । पुर्या निर्याय तद्देव्युद्याने व्युत्सर्गमास्थितः ॥६१०॥ कञ्चित्कालं च सा स्थित्वा, तं मत्वा तत्र निश्चलम् । आगत्याकथयच्चेटी, यथावस्थं धनश्रियः ॥ ६११ ॥ तयाऽथ नन्दकः प्रोचे, शरीरेणाऽपटौ त्वयि । मयोपयाचितं पद्देव्या निर्व्याजमीदृशम् ॥६१२॥ यद्गृहीतोपवासाऽहं, कृष्णपक्षाष्टमीदिने । तव वेश्मनि वत्स्यामि; प्रमादात्त्वष्टमी गता ॥ ६१३ ॥ स्वप्नेऽद्य प्रेरिता देव्या, सुप्तायास्त्वं ममागमः । प्रातःकृत्याय तत्प्रातः, स्वप्नस्ते न निवेदितः ॥ ६१४ ॥ तन्मामुपोषितां गन्तुमनुजानीहि सज्जय । पूजोपकरणं चास्या, इत्युक्तः स तथा व्यधात् ॥ ६१५ ॥ [ कलापकम् ] अथ कर्मकराभ्यां च, तया चेट्या च संयुता । तदुद्यानमगादेषाऽपश्यच्च श्रमणं धनम्

१ प्रार्थितम् । नगरदेव्या ।

॥ ६१६ ॥ तदा शाकटिकः कोपि, शकटं सारदारुभिः । परिपूर्याऽऽगतस्तत्राऽऽभतस्याक्षस्त्वभज्यत ॥६१७॥ सूरे चास्तङ्गतप्राये, कः काष्ठानि ग्रहीष्यति ? । ध्यात्वेति धुर्यावादाय, जगाम स निजं गृहम् ॥६१८॥ चिराय रुचितं जातं, यतः काष्ठैरिमैरिमम् । धक्ष्याम्यद्येति सा ध्यात्वा, चण्डी चण्डीगृहं ययौ ॥ ६१९ ॥ अर्चित्वा चर्चिकां दत्त्वा, चेटीभृतकभोजनम् । तेषु सुप्तेषु सैकैव, गता भगवतोऽन्तिकम् ॥ ६२० ॥ प्राश्चिदानानुभावेन, तया मोहविमूढया । अर्दविष्ठानि काष्ठानि, रचितानि चिता यथा ॥ ६२१ ॥ गत्वा पापिष्ठकाष्ठां सा, ध्यानकाष्ठाजुषो मुनेः । सर्वकाष्ठासु नेदिष्ठे. काष्ठानि न्यस्तवत्यलम् ॥ ६२२ ॥ उभयप्रथमे प्रीतिरित्यभूज्ज्योतिषं मृषा । परितस्तं यतस्तेने, तया काष्ठपंडष्टकम् ॥ ६२३ ॥ तेन सद्ध्यानसंलीनमनसा लक्षिता न सा । न च काष्ठानि काष्ठा हि, योगसंयोगजेदृशा ॥ ६२४ ॥ ज्वालितज्वलनज्वालावलीलीढतनुर्धनः । करुणातरुणावस्थाप्रधानोऽध्यायदीदृशम् ॥ ६२५ ॥ धन्याः सत्पुरुषास्ते ये. गता मोक्षमनुत्तरम् । यतो न तेऽन्यजन्तूनां, कर्मबन्धनिबन्धनम् ॥ ६२६ ॥ एष मोहवशः कश्चिद्धन्ता मां प्राप्य दुर्गतिम् । अहो ! कष्टमहोकष्टं, बहुदुःखदुरुत्तराम् ॥६२७॥ अहं निमित्तमेतस्य, दुर्गतेर्गमने हहा!!! । न कारणं विना कार्यसिद्धिरित्यार्हतं वचः ॥६२८॥ न शोचामि निजं देहं, शोचाम्येतं तु देहिनम् । जिनवाक्यबहिर्भूतं, पतन्तं दुःखवारिधौ ॥ ६२९ ॥ कियदेतदथ क्लिष्टसत्त्वानां मोहशालिनाम् । एष मोहस्वभावो हि, धिग्मे संसारवासिताम् ॥ ६३० ॥ इति ध्यानमपध्यानविध्वस्तस्य व्यवर्धत । ज्वलत्यग्नौ निमग्नस्य, सुवर्णस्येव वर्णिका ॥ ६३१ ॥ इत्थं शुभपरीणामः, स हतः पापया तया । अभूत्पञ्चदशाब्ध्यायुः, शुक्रे शक्र-

---

१ अक्ष० शकटचक्र । २ बलीवर्दौ । ३ कोपवती । ४ मूर्त्ति । ५ निकटानि । ६ काष्ठा० दिशा । ७ पद्मष्टक० चिता । ८ अवस्था । ९ कान्ति ।

समः सुरः ॥ ६३२ ॥ इतः ससाध्वसाऽऽयाता, धनश्रीश्चण्डिकागृहम् । प्रविशन्त्यङ्गचिन्तार्थोत्थितयोचे भुजिष्यया ॥६३३॥ क्व स्वामिनि! गताऽसि त्वं, तया प्रोचे क्वचिन्न हि । चक्रे निशीथकालस्य, भगवत्याः प्रदक्षिणा ॥ ६३४ ॥ वह्न्युद्द्योतं निरीक्ष्यैषा, किमेतदिति चेटिका । चिन्तयन्ती पुनः सुप्ता, विभाता च विभावरी ॥ ६३५ ॥ कृत्वा देव्याः पुनः पूजां, संमान्य भृतकानलम् । धनश्रीः प्रस्थिता गेहं, दृष्टः प्लुष्टो मुनिः पथि ॥ ६३६ ॥ चेट्या कर्मकराभ्यां च, प्रोचे केनापि कीदृशम् । कर्मेदं विदधे प्राह, धनश्रीर्ज्ञायते न सः ॥ ६३७ ॥ चेटी दध्यौ मुनेरन्वेषणाय प्रेपिता ह्यहम् । निर्गता चार्धरात्रेऽसौ, प्रैक्ष्युद्द्योतस्तदा मया ॥ ६३८ ॥ तत्किमेतन्महापापे, मा भूवं योजिताऽनया । ध्यायन्तीति गृहं प्राप, सा सहैव धनश्रिया ॥ ६३९ ॥ इतः शाकटिको दृष्ट्वा, प्लुष्टं मुनिमचिन्तयत् । केनापि क्लिष्टसत्त्वेन, दुर्गतौ पातितोऽस्म्यहम् ॥६४०॥ तदाख्यामि नृपायेदमर्धयामे दिनस्य सः । गत्वा न्यवेदयत्तच्चाकर्ण्य क्रुद्धो धराधिपः ॥ ६४१ ॥ दण्डपाशिकमादिक्षल्लभस्व मुनिघातकम् । चण्डिकाऽऽयतने गत्वा, तेन पृष्टा तदर्चिका ॥६४२॥ अद्याऽत्र रात्रौ कः सुप्तस्तयोचे कोपि नाऽपरः । सुप्ता समुद्रदत्तस्य, धनश्रीर्गृहिणी पुनः ॥६४३॥ तलारक्षोऽवदत्तस्याः, किं? निवासस्य कारणम् । सा प्राह तन्न जानामि, तलारक्षस्ततोऽवदत् ॥ ६४४ ॥ को हेतुर्नाष्टमी नैव, नवमी न चतुर्दशी । उपयाचितकं स्याच्चेत्तर्कादृग्भौमभद्रयोः[1] ॥ ६४५ ॥ न दुष्टस्त्रीजनं मुक्त्वा, कर्म संभवतीदृशम् । गृहं समुद्रदत्तस्य, तद्गत्वोपलभे स्वयम् ॥ ६४६ ॥ [ युग्मम् ] गतेन तेन द्वारस्था, दृष्टा पृष्टा च चेटिका । गृहेऽस्ति गृहिणी भद्रे!, सार्थवाहस्य नाऽथवा ॥६४७॥ चेट्या प्रोचे ससंक्षोभं, किं? तया

१ मंगलविष्टिकरणयोः ।

ते प्रयोजनम् । ज्ञातभावोऽथ साटोपमवदद्दण्डपाशिकः ॥ ६४८॥ आः पापे! विस्मृतः किं ? ते, वृत्तान्तो मुनिसंभवः ।
ततः सा कर्मदुष्टत्वान्नियतेश्च बलित्वतः ॥ ६४९ ॥ चेट्याह प्रेषिता साधुं, स्वामिन्याऽहं गवेषितुम् । अपरं तु न जानामि,
स दध्यौ नान्यथा ह्यदः ॥ ६५० ॥ [ युग्मम् ] ऊचेऽथ भद्रे! मा भैषीः, किमुद्दिश्य गवेषितुम् । प्रेषितास्यवदच्चेटी, कल्ये
भिक्षाकृते स हि ॥ ६५१ ॥ तृतीयप्रहरेऽविक्षदगृहीत्वा च निर्गतः । निर्गच्छन्तं च तं प्रेक्ष्य, स्वामिन्या भणितास्म्यहम्
॥ ६५२ ॥ हले! मञ्जरिके! गच्छ, क्वायं श्रमणकः स्थितः । इति ज्ञात्वा ममाऽऽख्याहि, मया तच्च निवेदितम् ॥ ६५३ ॥
[ विशेषकम् ] कार्यं पुनर्न जानेऽहमथोचे दण्डपाशिकः । किं तया विहितं तत्र, सा प्राह प्रणतोऽपि न ॥६५४॥ चामुण्डा
चर्चिता तत्राऽऽरक्षेणाऽथ विचिन्तितम् । क्रूरदेवीविधानार्थं, तया परिजनं निजम् ॥६५५॥ विप्रतार्य हतोऽसौ, तज्ज्ञास्या-
म्यास्यविकारतः । गते पार्श्वमिह क्षुब्धा, धनश्रीस्तेन लक्षिता ॥ ६५६ ॥ [ युग्मम् ] उक्ता च मां महाराजः, प्रैषीदन्वेष-
णाकृते । ऋषिहत्याकृतस्त्वं च, प्रसुप्ता चण्डिकागृहे ॥ ६५७॥ अयं ज्ञातश्च वृत्तान्तो, मया तत्त्वं समापत । गच्छामो
नरनाथस्य, समीपे साऽथ साध्वसात् ॥ ६५८ ॥ प्रकम्पमानसर्वाङ्गा, पपात धरणीतले । धरणीधवतो रक्षत्यसाविति धिया
किल ॥ ६५९ ॥ [ विशेषकम् ] आरक्षो ध्यातवानेतदवश्यं विदधेऽनया । अन्यथा कथमीदृक्षं, भयं निर्भर्त्सिता ततः
॥ ६६० ॥ मिलितश्च जनः श्रुत्वा, नन्दकस्तत्तथाविधम् । ग्रहीष्येऽहमपि ध्यात्वा, द्वारादेव पलायितः ॥ ६६१ ॥ नीत्वा
नृपतिपार्श्वे तां, तद्वृत्तान्तं व्यजिज्ञपत् । तलारक्षोऽथ तां राजा, वीक्ष्य चित्ते व्यचिन्तयत् ॥ ६६२ ॥ आकृत्येदृक्षया
कर्म, किमीदृक्षं विधास्यति । ध्यात्वेत्यूचे नृपः कस्मात्त्वं चण्ड्यायतनं गता ॥ ६६३ ॥ क्षुब्धा किञ्चिन्न सा प्रोचे, साशङ्को

नृपतिस्ततः । पुनः पप्रच्छ कासि त्वं, कस्य पुत्री प्रियाऽसि च? ॥ ६६४ ॥ तयोचे पूर्णभद्रस्य, धनश्रीरित्यहं सुता । पत्नी समुद्रदत्तस्य, तद्भर्ताऽथ गवेषितः ॥ ६६५ ॥ तस्मिन्ननुपलब्धेऽथ, नृपः शुद्धस्वभावतः । यथास्थितं प्रजापाल, इति शब्दं समुद्वहन् ॥ ६६६ ॥ न शक्नोति वराकीयं, पुरो मम निवेदितुम् । प्रयोजन कदाचित्तु, विश्वस्ता कथयिष्यति ॥ ६६७ ॥ ध्यात्वेति गुप्तिपालेन, विदधे तां सुरक्षिताम् । नित्यशः पृच्छ्यमानापि, न सा किञ्चित्तु जल्पति ॥ ६६८ ॥ [ विशेषकम् ] ज्ञातुं कुलादिकं पूर्णभद्राय प्रैषि भूभुजा । तत्तद्वृत्तान्तलेखेन, सनाथो लेखवाहकः ॥ ६६९ ॥ तद्विज्ञप्तियुतः सोऽयमागात्कतिपयैर्दिनैः । धनश्रीर्नाम पुत्र्यासीत्परं सा कुलदूषणा ॥ ६७० ॥ तद्वीक्ष्य दध्यौ भूनेता, तयेदं विदधे ध्रुवम् । अकृत्याचारशीलेयं, महापापा विमूढधीः ॥ ६७१ ॥ तथापि हि न वध्या स्त्री, ध्यात्वेति निरवासयत् । स्वराज्यात्तां निजैर्भृत्यैर्दासेरीमिव[1] रोगिणीम् ॥ ६७२ ॥ [ युग्मम् ] व्रजन्ती वासरान्ते सा, क्षुत्तृषाभ्यां विबाधिता । ग्रामदेवकुले सुप्ता, दष्टा दुष्टेन भोगिना ॥ ६७३ ॥ कृतान्तस्य भुजेनेव, व्याकृष्टा भुजगेन सा । जज्ञे पृथ्व्यां तृतीयस्यां, सप्तसागरजीविता ॥ ६७४ ॥ पूर्वं कार्मणकर्मणा निजवपुः पुष्टं दधे कार्मणं, पश्चान्नीरधिमज्जनेन च भवाम्भोधौ ममज्ज स्वयम् । प्लोषं च स्वपतेर्यतेर्विदधती स्वप्लोषमेपाऽप्युपत्, तां भूमिं समुपागतेति नरकस्योदर्चिषा[2] पच्यते ॥ ६७५ ॥ इति श्रीहरिभद्रोक्त्या, प्रद्युम्नाचार्यगुम्फिते । समरादित्यसंक्षेपे, तुर्योऽयमभवद्भवः ॥ ६७६ ॥

---

१ दासेरी० उ्ष्ट्री । २ उदर्चिष्० भसि ।

[ अथ पञ्चमो भवः ]

अस्यैव जम्बूद्वीपस्य, क्षेत्रे भरतनामनि । यत्र लोकः सदाऽऽनन्दी, काकन्दी नाम सा पुरी ॥ १ ॥ अगाधपरिखानीरे,
था वप्रप्रतिबिम्बतः । जेतुं भोगवतीं प्रत्तप्रस्थानेव विभाव्यते ॥ २ ॥ ग्रस्तान्यशूरतेजाः श्रीसूरतेजा महीपतिः । समस्ति
तत्र विध्वस्तविरोधिध्वान्तसंततिः ॥ ३ ॥ प्रसर्पति प्रतापेऽस्य, रिपुस्त्रीजनकानने । नेत्राम्बुसिच्यमानापि, चित्रं पत्रलता-
ऽशुषत् ॥ ४ ॥ तस्यास्ति निजलीलास्तस्वर्गिलीलावतीजना । नाम्ना लीलावती देवी, लीलागतिजितद्विपा ॥ ५ ॥ भुञ्जानस्य
तया सार्धं, तस्य वैषयिकं सुखम् । कियानपि ययौ कालः, क्षणवत्क्षणदायकः ॥ ६ ॥ इतो धनमुनेर्जीवः, सप्तमस्वर्गत-
श्च्युतः । लीलावतीमहादेव्याः, कुक्षौ समुदपद्यत ॥ ७ ॥ स्वप्ने रजन्यां संपूर्णमण्डलं कुण्डलं निशः । प्रविशन्तं मुखेनेन्दु-
मुदरे सा व्यलोकत ॥ ८ ॥ विबुद्धा दयितस्याऽऽख्यत्स प्राह भविता तव । तेजस्तन्वन्दिशामन्तः, सुतः सामन्तचन्द्रमाः
॥ ९ ॥ तत्प्रतिश्रुत्य सा तुष्टा, दध्रे दोहदलक्षणम् । आगात्त्रिवर्गसंपत्तिसुखिन्याः प्रसवक्षणः ॥ १० ॥ सुतं सूते स्म सा तं
च, कथयामास भूभुजे । चेटिका निर्वृतिर्नाम, मनसो निर्वृतिप्रदम् ॥ ११ ॥ निजाङ्गलग्नमाकल्पं[3], दत्त्वाऽस्यै पारितोषि-
कम् । अयं व्यधापयद्वर्धापनमृद्ध्यनुमानतः ॥ १२ ॥ गर्भस्थेऽत्र जयो मातुर्द्यूतेऽभूदिति भूपतिः । मास्यतीतेऽस्य बालस्य,
जय इत्यभिधां व्यधात् ॥ १३ ॥ कुमारत्वमितो राजकुमारत्वोचिताः कलाः । जग्राह प्राग्भवाभ्यासादयं धर्मानुरक्तधीः
॥ १४ ॥ चन्द्रोदयाख्य उद्यानेऽन्यदा प्रासुकदेशगः । दीप्त्या दिवाकरः साक्षात्सोमत्वेन सुधारुचिः ॥ १५ ॥ गम्भीरत्वेन

१ सर्पनगरीम् । २ आनन्ददः । ३ आभूषणम् ।

पाथोधिः, स्पृहणीयतयाऽम्बुदः । रमणीयतया स्वर्गोऽनौपम्येन च मोक्षवत् ॥ १६ ॥ सूरिः सनत्कुमाराख्यः, समाराधितसद्व्रतः । दृष्टो जयकुमारेण, मारेण[1]ेव मधुः सुहृत् ॥ १७ ॥ [ त्रिभिर्विशेषकम् ] तं वीक्ष्य जातसंवेगः, कुमारो हृद्यचिन्तयत् । संपूर्णचक्रवर्तित्वलक्षणैरीदृशैरपि ॥ १८ ॥ महापुंभिः परित्यक्तो, भवो निर्गुण एव हि । पृच्छामि तु परित्यागहेतुमस्य विशेषतः ॥ १९ ॥ [ युग्मम् ] ध्यात्वेत्यस्यान्तिके गत्वा, तं नत्वा सपरिच्छदम् । तद्दत्तधर्मलाभाशीरुपाविक्षद्गुरोः पुरः ॥ २० ॥ बद्धाञ्जलिरवोचच्च, संसारोऽयमसारकः । कस्य नाम सकर्णस्य[2], न स्यान्निर्वेदकारणम् ॥ २१ ॥ तथापि प्रायशो न स्याद्विना बाह्यनिबन्धनम् । कृत्वा प्रसादमाख्याहि, तन्निर्वेदस्य कारणम् ॥ २२ ॥ किंकुलः ? किंपिता ? क्वत्यः ?, किंनामा ? भगवन्भवान् । दध्यौ गुरुरहो ! अस्य, विवेकः कोप्यलौकिकः ॥२३॥ अहो ! वचनविन्यासः, कथयिष्यामि चेन्न हि । तन्मामलौकिकं चित्ते, सैष सम्भावयिष्यति ॥ २४ ॥ ध्यात्वेत्याह विभुर्ज्ञातभवभाव ! तवाऽग्रतः । कथ्यते कौतुकादेव, बाह्यं निर्वेदकारणम् ॥ २५ ॥ अल्पस्याऽपि निदानस्य, विपाकमतिदारुणम् । श्रुत्वा चित्राङ्गदादीक्षा, चारणर्षेर्मयाऽऽददे ॥ २६ ॥ जयः प्रोचे भगवता, श्रुतं किं ? स जगौ शृणु । श्वेतवी श्वेतवीहारहारिण्यस्ति पुरी वरा ॥ २७ ॥ तत्र भिन्नारिवर्माऽभूद्यशोवर्मा नरेश्वरः । अहं सनत्कुमाराख्यः, सुतस्तस्यातिवल्लभः ॥२८॥ बाल्येऽपि मम तातस्य, पुरतः परितस्थुषः । विद्याधराधिराजत्वमादिष्टं दिष्टवेदिभिः[3] ॥ २९ ॥ यावत्कुमारभावोऽस्मि, वाहकेल्यां गतोऽन्यदा । तावद्ध्यानीयमानानपश्यं पश्यतोहरान्[4] ॥ ३० ॥ तैरूचे देव ! रक्षाऽस्माञ्शरण्य ! शरणागतान् । मोचितास्ते मयाऽरुष्यंस्तन्सत्वा पौरपूरुषाः

१ कामेन । २ विदुषः । ३ नैमित्तिकैः । ४ चौरान् ।

॥ ३१ ॥ आरक्षकैर्महाराजस्याग्रे तच्च निवेदितम् । जनाराधनधीराह, धराधीशोऽथ तानिति ॥ ३२ ॥ यत्तस्करान्पुनर्धृत्वा, नागराणां निवेद्य च । यथा कुमारो नो वेत्ति, व्यापादयत तांस्तथा ॥ ३३ ॥ तांस्तातघातितान्मत्वा रुष्टोऽहं मेदिनीभुजः । प्रधानैर्वार्यमाणोऽपि, तामलिप्त्यां समागमम् ॥ ३४ ॥ तत्पुरीस्वामिना ज्ञातवृत्तान्तेनाऽभियायिना । संमान्येशानचन्द्रेण वत्सलेनेति भाषितः ॥ ३५ ॥ वत्सैतदपि ते राज्यं, तत्त्वया सुन्दरं कृतम् । यदत्रैवागतोऽसीति, प्रोच्य पुर्यां प्रवेशितः ॥ ३६ ॥ [ युग्मम् ] दिनैः कतिपयैरुक्तो, गृहाण ग्रासमीप्सितम् । न मया प्रतिपन्नं तत्तदायत्तत्वभीरुणा ॥ ३७ ॥ अन्यदा तिष्ठतस्तत्र, वसन्तर्तुरुपागमत् । निर्विवेकस्य लोकस्य, हृदयानन्दकारकः ॥ ३८ ॥ उद्यानानि प्रफुल्लानि, कोकिलैः कूजितं कलम् । प्रवृत्ताः पुरचर्चर्यः[2], प्रसृतो मलयानलः ॥ ३९ ॥ तदात्युज्ज्वलनेपथ्यः, सवयस्यो गृहादहम् । क्रीडार्थं गन्तुमुद्यानं, चलितोऽनङ्गनन्दनम् ॥ ४० ॥ राजमार्गगतो राजपुत्र्या वातायनस्थया । विलासवत्या दृष्टोऽहं, दृष्ट्वा गाढानुरागया ॥ ४१ ॥ तन्मत्त[3]वारणासन्नं, व्रजतश्च ममोपरि । स्वहस्तग्रथितामेषा, मुमोच बकुलस्रजम् ॥ ४२ ॥ लक्षिता च द्वितीयेन, मदीयेन हृदेव सा । कण्ठदेशे निपतिता, सुहृदा वसुभूतिना ॥ ४३ ॥ ऊर्ध्वं विलोकमानेन, वातायनविनिर्गतम् । आस्यं तस्या मया दृष्टमिन्दुबिम्बमिवामलम् ॥ ४४ ॥ तुष्टोऽहं प्रेक्षमाणायास्तस्याः स्वहृदये न्यधाम् । इमां मालां च बालां च, बिभ्रतीमन्तरे गुणम् ॥ ४५ ॥ परितोषविषादाभ्यां, गर्भितं हसितं तया । तथा निःश्वसितं चापि, सङ्कीर्णरसया तदा ॥ ४६ ॥ चित्रक्रीडाप्रवृत्तोऽपि, तदीतमुद्देशमतिक्रान्तो, गात्रेण मनसा न तु । अनङ्गनन्दनोद्यानं, प्राप्तो मित्रानुरोधतः ॥ ४७ ॥

---

१ घेतमम् । २ चर्चरी० वसन्तक्रीडा । ३ मत्तवारण० गवाक्ष ।

यमुखपङ्कजम् । ध्यायन्स्थित्वा दिनं तत्र, निजमावासमासदम् ॥ ४८ ॥ शिरो मे दुष्यतीत्युक्त्वा, विसृष्टाः सुहृदो निशि । तत्राऽनाख्येयदुःखस्य, विनिद्रस्य निशाऽगमत् ॥ ४९ ॥ प्रातःकृत्ये कृते प्राग्वद्वसुभूत्यादिभिः समम् । गतोऽहं भवनोद्यानं, क्रीडाभिः क्रीडितं चिरम् ॥ ५० ॥ मच्चित्तान्यतया कामविकारो वसुभूतिना । लक्षितोऽहमथ प्रोक्तः, प्रस्तावे भो वयस्य! किम्? ॥ ५१ ॥ दिनेन्दुरिव विच्छायः, साधुवद्रुद्धचेष्टितः । क्षणं सपरितोषस्त्वं लब्धरेखाक्षधूर्तवत् ॥ ५२ ॥ आकारसंवृति कृत्वा, मया प्रोचे न किञ्चन । लक्षयामि सुहृत्प्राह, हसित्वा लक्षयाम्यहम् ॥ ५३ ॥ स्रग्व्याजाद्राजपुत्र्या ते, चित्तभारोऽधिरोपितः । विद्धः स्मरशरश्रेण्या, दृष्टिपातच्छलेन च ॥ ५४ ॥ तत्सम्भूतो विकारोऽयं, पाण्डुच्छायमुखं ततः । ताम्रे दृशावनिद्रत्वान्निःश्वासाश्चायतायताः ॥५५॥ मा सन्तापं विधाः सा हि, तव सङ्गममिच्छति । सस्नेहबहुमानं यत्, स्रग्दूती प्रेषिता तया ॥ ५६ ॥ अन्यच्चावहितो द्वीपादन्यस्मादप्ययं विधिः । अनुकूलो मनोभीष्टं, घटयत्येव देहिनाम् ॥ ५७ ॥ उपायमहमप्यत्र, करोमीति प्रतिश्रुते । मया वाक्येऽस्य स प्रीतो, मित्रकार्यचिकीर्षया ॥ ५८ ॥ विलासवत्या धात्र्यस्ति, विचारमतिसंज्ञया । तत्पुत्र्याऽनङ्गसुन्दर्या, सह स्नेहं ततान सः ॥ ५९ ॥ तयोः परस्परस्नेह[illegible]ातपर्यैर्दिनैः । अहं दध्यौ न मित्रस्याऽदः कार्यं मतिगोचरे ॥ ६० ॥ ततो न विहितं ध्यायन्निति स्मरवशोऽगमम् । [illegible]ऽवस्थां ग्रहिलत्रस्तमूढमूर्च्छितमूकवत् ॥ ६१ ॥ [ युग्मम् ] इन्द्रियेभ्योऽप्रभुर्यावदित्थं तिष्ठाम्यचेतनः । क्षणेन प्रमना[illegible]सुभूतिः समागमत् ॥ ६२ ॥ मामूचे च शुचं मुञ्च, सम्पन्नं ते समीहितम् । मया कथमिति प्रोक्ते, स प्राह मसृणः शृणु ॥ ६३ ॥ गतोऽद्याऽनङ्गसुन्दर्या गृहे दृष्टा च सा मया । प्रम्लानवदना पृष्टा, किं तवोद्वेगकारणम् ॥ ६४ ॥ सा माह दुःखिभिर्दुःखं, कथं तस्मै निवेद्यते ।

न सङ्क्रामति तथस्मिन्नादर्शे प्रतिबिम्बवत् ॥ ६५ ॥ मयोक्तं विरला एव, गुणज्ञाः कविताजुषः । साधारणधना एवं, परदुःखेन दुःखिनः ॥ ६६ ॥ तथाप्यस्ति त्वदाशंसाविधाने मन्मनोरथः । तयोक्तं शृणु यद्येवमस्ति मे परमा सखी ॥ ६७ ॥ कन्या विलासवत्याख्येशानचन्द्रनृपात्मजा । निर्विशेषात्मनस्तस्या, अवस्था पश्चिमाऽधुना ॥ ६८ ॥ [ युग्मम् ] कुतो हेतोर्मया प्रोक्ते, साह स्मरविकारतः । मयोचे मदनस्याऽऽज्ञा, जिनवत्केन खण्डिता ॥ ६९ ॥ सा प्राह तन्न जानामि, खण्डिता वा न खण्डिता । सन्तापस्तु महानस्या, य आख्यातुं न पार्यते ॥ ७० ॥ मया कथमिति प्रोक्ते, सा प्राह शृणु सादरः । कोपि वर्वरिकासञ्चचेटीसहितया तया ॥ ७१ ॥ दृष्टो युवा स्मरो मूर्तः, पूजितो बकुलस्रजा । चित्तं तदीयमादाय, गतोऽयं तद्दिनादसौ ॥ ७२ ॥ निर्नष्टसर्वचेष्टाऽस्ति, वृत्तान्तोऽयं मयाऽखिलः । ज्ञातो वर्वरिकाख्यानाद्राजपुत्रीमुखादपि ॥ ७३ ॥ उक्ता चाऽलं विषादेन, तव स्वामिनि! वल्लभम् । सम्पादयामि ज्योत्स्ना स्यान्न दूरे कौमुदीशितुः ॥ ७४ ॥ इत्युक्त्वा चारनेत्रैः स, मया सर्वत्र वीक्षितः । नोपलब्धश्च तेनाऽद्य, निराशा सा गवाक्षगा ॥ ७५ ॥ तं राजमार्गं पश्यन्ती, वाष्पाविलविलोचना । अपहस्त्य सखीवर्गं, मूर्च्छिता न्यपतद्भुवि ॥७६॥ [ षड्भिः कुलकम् ] ससम्भ्रममथोत्थाय, वसुभूतिर्मयोदितः । क्व? सा मित्र! ममाऽग्रे तां दर्शय स्नेहलां मयि ॥७७॥ तस्या अत्याहिते हन्त!, जीवितेनाऽपि किं? मम । वसुभूतिस्ततः प्राह, देव! वृत्तमिदं खलु ॥ ७८ ॥ सत्रपेऽथ मयि स्मित्वा, निविष्टे सुहृदूचिवान् । अनङ्गसुन्दरीप्रोक्तं, तल्पं नीता सखीजनैः ॥ ७९ ॥ मया वाष्पाम्बुसिक्तेन, तालवृन्तेन वीजिता । दत्तो मृणालिकाहारः, सश्रीखण्डद्रवो हृदि ॥ ८० ॥ कथञ्चि-

---

१ गुप्तपुरुषचक्षुर्भिः । २ निराकृत्य । ३ मरणे ।

लब्धचैतन्या, प्रोक्ता किं? ते विबाधते। सोवाच दर्शनं तस्य, मयाऽलीकमथोदितम् ॥८१॥ लब्धा प्रवृत्तिस्तस्याऽस्ति, कथयिष्यामि तामहम्। ततः शुचिस्मिता स्मित्वा, कटिसूत्रमदान्मम ॥८२॥ अथैत्य तज्जनन्योचे, वत्से! सारय वल्लकीम्। कार्यो वीणाविनोदोऽद्य, महाराजस्य शासनात् ॥८३॥ तस्यामाहूतवैणिक्यां, गुरुवर्गत्रपावशात्। किङ्कर्तव्यविमूढाऽहमविसृष्टा तयाऽऽगमम् ॥८४॥ किन्तु विज्ञपयिष्यामि तत्प्रवृत्तिमजानती। चिन्तापिशाच्यालीढाहमिदमुद्वेगकारणम् ॥८५॥ मयोक्तं चिन्तयाऽलं ते, तं जानेऽहं ततस्तथा। करिष्यामि यथा सुस्था, स्वामिनी ते भविष्यति ॥८६॥ तनयः श्वेतवीस्वामियशोवर्मनरेशितुः। नाम्ना सनत्कुमारो हि, मम स्वामी सुहृच्च सः ॥८७॥ तयोचे सदृशः कस्य, तव स्वामी सुहृच्च सः। य एवं स्वामिनीचित्तं, विज्ञायाऽपि निरुद्यमः ॥८८॥ मयोचेऽनुद्यमो नायमुपायं चिन्तयत्यलम्। अनिन्द्यविधिना केन, प्राप्येयमिति चेतसि ॥८९॥ सा प्राह निन्द्यो नैपोऽपि, विधिर्विधिनिदेशितः। तुल्यरूपकुलप्रेमवती कन्या ह्रियेत चेत् ॥९०॥ क्वानयोर्दर्शनोपायो, मयेत्युक्ते जगाद सा। स्वामिनीं मन्दिरोद्यानमानेष्यामि त्वयापि तत् ॥९१॥ कुमारेण सहाऽऽगम्यं, मयाप्यङ्गीकृतं च तत्। संप्रति त्वं प्रमाणं तु, तच्छ्रुत्वाऽहं ससम्मदः ॥९२॥ दत्त्वाऽस्मै कटकद्वन्द्वमद्वन्द्वसुखमन्दिरम्। ययौ तेन सहोद्यानं, सर्वर्तुकुसुमाकरम् ॥९३॥ [ विशेषकम् ] लवलीमण्डपान्तःस्थां, तामैक्षिपि सखीयुताम्। जनचित्तभिदे हस्तभल्लीमिव मनोभुवः ॥९४॥ समुत्थिताऽऽसनादेषा, तदुक्तो न्यपदं त्वहम्। ढौकितं कनकस्थाले, ताम्बूलं च समाददे ॥९५॥ अनुज्ञाता मया सापि, यावदासन्युपाविशत्। उपवीणयितुं तावत्तामाह्वास्त मह-

---

१ लवली॰ वृक्षविशेषः। २ वीणया उपगातुम्। ३ कञ्चुकी।

ळकः ॥ ९६ ॥ अप्रेक्षमाणं मां प्रेक्षमाणा वलिततारकम् । जगाम साऽहमप्युक्तः, सुहृदा वसुभूतिना ॥ ९७ ॥ किं ? स्थितेना-
ऽत्र निर्यावो, यावदुद्यानमध्यतः । अनङ्गवत्या भूपालपत्न्या तावन्निरीक्षितः ॥ ९८ ॥ तस्यास्तदाभिलाषोऽभून्मयि तु स्वगृहं
गते । अनङ्गसुन्दरी सन्ध्याक्षणे सप्राभृताऽऽगमत् ॥ ९९ ॥ ऊचे स्वहस्तदृब्धाऽसौ, माला ताम्बूलमप्यद । कुमारप्रेषितं
देव !, त्वत्कृते च विलेपनम् ॥ १०० ॥ श्रुत्वाऽहं तदिति न्यास्थं, ताम्बूलं वदनाम्बुजे । अङ्गरागं व्यधामङ्गे, न्यधां च
शिरसि स्रजम् ॥ १०१ ॥ मन्मित्रमूचे तां पश्य, कुमारस्य विनीतताम् । सोचे किमत्र चित्रं यदीदृशेषु विनीतता ॥ १०२ ॥
मया प्रोचेऽयमावासो, वसुभूतियुतोऽपि हि । तवैव तदिहाऽऽगम्यं, सदा नत्वाऽथ साऽगमत् ॥१०३॥ इति प्रीतिरवर्धिष्ट,
सखीमित्रगतागतैः । आवयोरन्यदा राजसदनाच्च विनिर्गतः ॥१०४॥ अनङ्गवत्या राज्याश्च, दास्याऽऽहूतः समागतः । तां
नत्वोपाविशं मातरादिशेति जगाद च ॥१०५॥ सोवाच निर्यानुद्यानाद्यदाऽऽदि त्वमसीक्षितः । ततः प्रभृति मामुच्चैः, पञ्च-
बाणो विबाधते ॥ १०६ ॥ तस्मादशरणां दीनां, शरण्य ! शरणागताम् । रक्ष सर्वाङ्गचङ्ग ! त्वमङ्गसङ्गेन मामतः ॥ १०७ ॥
अहो ! स्त्रीनिर्विवेकत्वमिति चिन्तयता हृदि । मयोक्तं सुतयोग्यं मे, देह्यादेशं जनन्यसि ॥ १०८ ॥ तयाऽन्तःक्रोधवत्याऽपि
विलक्षहसितस्पृशा । प्रोचे यद्वत्स ! गच्छ त्वं, मया सत्त्वं परीक्षितम् ॥ १०९ ॥ राज्ञीं पुनः प्रणम्याऽहमागमं सदने निजे ।
कियत्यामपि वेलायां, पुरा रक्षः समागमत् ॥ ११० ॥ नृपतेरपरं चित्तं, विनयन्धरसंज्ञया । स प्राह वक्तुकामोऽस्मि, किञ्चि-
देकान्तमादिश ॥ १११ ॥ मयाऽथ वसुभूत्याद्या, वयस्या वीक्षिता गताः । स प्रोचे सावधानस्त्वं, कुमार ! शृणु मे वचः
॥ ११२ ॥ अस्ति स्वस्तिमती नाम, पुरी भुक्तौ पितुस्तव । वीरसेनोऽभिधानेन, तत्राऽस्ति कुलपुत्रकः ॥ ११३ ॥ दानी मानी

गभीरश्च, शरण्यः करुणापरः । परोपकारी तस्यैवं, ययौ कालः कियानपि ॥११४॥ [ युग्मम् ] सोऽन्यदाऽऽपन्नसत्त्वायाः, स्वपत्न्याः पितृमन्दिरे । जयस्थले पुरे गच्छन्नागतः श्वेतवीपथि ॥ ११५ ॥ वहिरावासितो भृत्यवर्गेण परिवारितः । तदा च तस्करः कश्चित्रस्तस्तं शरणं श्रितः ॥ ११६ ॥ कान्तयोक्तः किमेतेन, सागसा रक्षितेन ते । स प्रोवाच प्रियेऽवश्यं, त्रातव्यः शरणागतः ॥ ११७॥ अथो हत हतेत्युच्चैर्वदन्तो नृपपूरुषाः । समेयुस्तैरयं प्रोक्तस्तस्करं नः समर्पय ॥ ११८ ॥ स प्राह शरणायातं, जीवन्नाहं समर्पये । तैस्तु तत्र स्थितैरेव, ज्ञापितं तन्महीपतेः ॥ ११९ ॥ सशरण्यं हत स्तेनमिति राज्ञा नियोजिताः । सैनिका रुरुधुस्तस्याऽऽवासमासन्नवर्तिनः ॥ १२० ॥ सन्नद्धैः स्वभटैर्वीरसेनस्तैः सैनिकैः सह । युध्यते यावदायातस्तावत्तत्र नृपात्मजः ॥ १२१ ॥ वाहवाहनभूमेः स, व्यावृत्तः सादिसंयुतः । निजान्पप्रच्छ किं न्वेतत्तैराख्याते यथातथे ॥ १२२ ॥ कुमारः प्राह को नाम, शरण्यं मयि जीवति । हन्तीत्याख्यात तातस्य, तैर्गत्वाऽस्य निवेदितम् ॥ १२३ ॥ राज्ञा निषेधिते युद्धे, कुमारः कुलपुत्रकम् । विससर्ज स च स्तेनं, सन्मान्य वसनादिभिः ॥१२४॥ जयस्थलं समायाते, वीरसेनेऽस्य गेहिनी । असूत तनयं सोऽहं, विनयंधरसंज्ञया ॥१२५॥ त्वत्तातस्तद्यशोवर्मा, जयवर्मनृपात्मजः । मत्तातस्य मदम्बाया, उपकारी ममाऽपि च ॥ १२६ ॥ रात्रिंदिवं गुणग्रामं, पितरौ मे पितुस्तव । नैव विस्मरतश्चित्रं, तामलिप्तीस्थितावपि ॥ १२७॥ किञ्चाऽद्य नृपतिः प्रापाऽनङ्गवत्या निकेतनम् । दृष्टा च रुदती तेन, सा नखोल्लिखिता हृदि ॥ १२८ ॥ राज्ञा पृष्टा बलात्कारकारिणं त्वां शशंस सा । ततः क्रुद्धः समादिक्षत्प्रच्छन्नं त्वद्वधे स माम् ॥ १२९ ॥ निस्सृतोऽहं नृपादेशात्तोरणेऽश्रृणवं क्षुतम् । स्थितो नैमित्तिकेनोक्तः, क्षुतमेतद्धि सुन्दरम् ॥१३०॥ ततो गतो गृहं मात्रा, पृष्टः कालुष्यकारणम् । ततश्चाकथयं

तस्यै, रुदती साप्यदोऽवदत् ॥ १३१ ॥ हा ! वत्स ! माऽवधीरेनमुपकारिसुतो ह्ययम् । इत्यागतोऽहमत्राऽतः, परं यत्कृत्य-
मादिश ॥१३२॥ ततो दध्यावहं स्त्रीणामहो ! मायाविता परा । स्वभावः कथ्यते राज्ञ्यों, यदि सा क्लिश्यते ततः ॥ १३३ ॥
तलारक्षोऽवदद्देव ! शाधि मां करवाणि किम् ? । मयोचे कष मां पापं, जनिकृद्वंशपांसनम् ॥ १३४ ॥ अत्रान्तरे क्षुतं मार्गे
कैरप्युक्तं च पूरुषैः । विशुद्ध एष गङ्गाम्बुसन्निभः किं? वहूदितैः ॥ १३५ ॥ स प्राह त्वां हि निर्दोषं, वक्तः! क्षुतमुपश्रुतिः ।
तदाख्याहि यथा दुष्टां, तामेवाख्यामि भूपतेः ॥ १३६ ॥ मयोक्तं सा हि माता मे, तत्को गुरुषु मत्सरः । स प्राह त्वत्कृते,
तस्याः, स्थाने कूपं खनाम्यहम् ॥ १३७ ॥ सोऽथ व्रजन्भुजे धृत्वा, मयोचे यदि यास्यसि । ततः स्वं घातयिष्यामि, स प्रोचे
तत्करोमि किम् ? ॥ १३८ ॥ मयोचे नृपतेराज्ञां, स प्राह बहुनाऽत्र किम् ? । यदि रक्षसि तां रक्ष, स्वं च मां च कथञ्चन
॥ १३९ ॥ ध्यात्वा मयोचे तदिदं, भवेद्देशान्तरे कृते । स प्राह स्वर्णभूमौ तत्पोतोऽद्यैव प्रयास्यति ॥ १४० ॥ वसुभूतित-
लारक्षयुतोऽहमगमं ततः । गुप्तं मामार्पयत्पोतपतेः ससुहृदं च सः ॥ १४१ ॥ कुमार ! खेदितोऽसि त्वं क्षन्तव्यमिति साश्रु-
दृक् । मां सम्भाष्य च नत्वा च, व्यावृत्तो विनयंधरः ॥ १४२ ॥ समित्रेऽथ समारूढे, मयि यानमपूर्यत । दिनैः कतिपयैः
स्वर्णभूमिकामाजगाम च ॥ १४३ ॥ समुद्रदत्तं पोतेशमापृच्छ्योत्तीर्य पोततः । समित्रः प्रविवेशाऽहं, श्रीपुरं नामतः पुरम्
॥ १४४ ॥ श्वेतवीतः समायातं, सिद्धदत्तवणिक्सुतम् । सुमनोरथदत्ताख्यं, तत्राद्राक्षं सुहृत्तमम् ॥ १४५ ॥ असम्भाव्यं स
मां प्रेक्ष्य, नत्वाऽनैषीन्निजे गृहे । पृष्टो भुक्तोत्तरं तेन, तस्याऽऽख्यं सरलं वचः ॥१४६॥ तातरोषेण याताऽस्मि, सिंहलं मातु-
लान्तिके । तत्त्वं मे सिंहलद्वीपगामिपोतं निवेदयेः ॥ १४७ ॥ तदाख्यातेऽथ पोते मे, व्रजतोऽयमढौकयत् । अदृश्यीकरणे

हेतुं, पटं नयनमोहनम् ॥ १४८॥ मया पृष्टस्तदुत्पत्तिं, स आख्यत्सुहृदा मम । आनीय मण्डले यक्षकन्याऽध्यक्षीकृता पुरा ॥ १४९॥ तया मे तुष्टया दृष्टिममोघां कर्तुमात्मनः । कुमार! मह्यं दत्तोऽयं पटः प्रकटकौतुकः ॥ १५०॥ ततः पटं गृहीत्वाऽहं समित्रस्तेन संयुतः । उपपोतं ययौ तेन, बभाषे पोतनायकः ॥ १५१॥ कुमारोऽयं मम स्वामी, सर्वस्वं च किमुच्यते । स प्राह यादृशस्तेऽसौ, मम तादृश एव हि ॥ १५२॥ भालयित्वेति मां मय्यारूढे यानमसौ गतः । नावर्गलान्समुत्पाट्य, यानपात्रमपूर्यत ॥ १५३॥ अकाले कालरूपोऽथ, मेघकालः समापतत् । ततो वातेरितः पोतः, खमारुह्याऽपतन्मुहुः ॥ १५४॥ उत्पत्योत्पत्य तन्मध्येवार्धिभूधरमूर्धनि । पोतोऽभज्यत निर्भाग्यनरस्येव मनोरथः ॥ १५५॥ अहं तु फलकं प्राप्याऽहोरात्रात्तीरमागतः । सवाष्पाणीव वस्त्राणि, निश्चोत्याऽशोपयं तटे ॥ १५६॥ दृग्मोहनपटः स्वानुभावात्तीमितो[1] एव न । मद्दुःखक्षणे दक्षः, स किं जाड्येन पीड्यते? ॥ १५७॥ अहं पटस्याऽभेदेन, विस्मिताऽऽत्मैकया दिशा । जम्बूतरोरधः श्रान्तो, विश्रान्तः सन्व्यचिन्तयम् ॥ १५८॥ एवंविधां दशां प्राप्य, जीव्यते यत्तदद्भुतम् । किं वा मे जीवितेनाऽपि, तेनर्ते वसुभूतिना ॥१५९॥ यद्वा कृतं विषादेन, विचित्रा कर्मणां गतिः । यथाऽहं जीवितः सोऽपि, यदि क्वापि भवेत्तथा ॥ १६०॥ ध्यात्वेति क्षुत्तृषार्तोऽहं, व्रजामि स्मोत्तरामुखः । नदीमेकामपश्यं च, वनराजीविराजिताम् ॥ १६१॥ कृत्वा फलजलाहारं, तत्र प्रेक्ष्य ससम्मदम् । सारसं सारसीयुक्तं, निजचेतस्यचिन्तयम् ॥ १६२॥ पक्षिणोऽमी वरं येऽत्र, रमन्ते पुष्करे[2] द्विधा । स्वकीयप्रियया युक्ता, न त्वहं तद्वियोजितः ॥ १६३॥ इति ध्यायन्नहं सन्ध्याक्षणे स्मृतनमस्कृतिः । शिलाशय्यामवष्टभ्य,

---

१ तीमितः—आर्द्रितः । २ जले वा कमले ।

सुप्तो वन्य इव द्विपः ॥ १६४ ॥ निशाप्रान्ते विबुद्धोऽहं, विहङ्गकलकूजितैः । कृतदेवगुरुध्यानो, गच्छामि स्म वनाद्वनम्
॥ १६५ ॥ ततो गिरिसरित्तीरसोमालसिकतातले । अपश्यं रमणीयाभां, रमणीपदपद्धतिम् ॥ १६६ ॥ गच्छंस्तदनुसारेण,
चित्तान्निर्वासितेनापि, रागेणाऽध्यासितां पदोः । कल्क[1]वल्कलवाससम् । तप्तस्वर्णसवर्णाङ्गीमुद्भिन्ननवयौवनाम् ॥ १६७ ॥
गभीरनाभीमुत्तुङ्गवक्षोजां मृदुवाहिकाम् । कम्बुकण्ठीं जपापु-
करभोरुं नितम्बाढ्यां, मध्येऽतिकृशतास्पृशम् ॥ १६८ ॥ अधिज्यचापभ्रूवल्लिमष्टमीन्दुनिभालिकाम्
ष्पाधरामच्छां कपोलयोः ॥ १६९ ॥ उत्तुङ्गनासिकावंशां, त्रस्तसारङ्गलोचनाम् । केशभारेण शोभिताम् ॥ १७१ ॥ तपस्विकन्य-
॥ १७० ॥ पृष्ठदेशनिलीनेन, वदनेन्दुद्युतिव्रजात् । भीतेनेवाऽन्धकारेण, व्यलोकयम् ॥ १७२ ॥ [षड्भिः कुलकम्] दध्यौ च
कामेकां, वामहस्तात्तछज्जिकाम् । पुष्पाणि पाणिनाऽन्येनोच्चिन्वतीं च
तां विलोक्याऽहं किमियं नृपकन्यका । सा विलासवती यद्वा, काऽसौ? क्व च वनस्थितिः? ॥१७३॥ मयीदं चिन्तयत्येव, सा
कृत्वा कुसुमोच्चयम् । यावद् बाला चचालाऽऽत्मतपोविपिन[2]सम्मुखी ॥ १७४ ॥ स्मारं विकारं सङ्गोप्य, तावत्तामुपसृत्य च ।
प्रणम्य च जजल्पाऽहं, तपस्ते वर्धतां शुभे! ॥१७५॥ श्वेतवीवास्यहं ताम्रलिप्त्या यान् प्रति सिंहलम् । अन्तराभग्नपोतत्वा-
देकाकीह समागमम् ॥१७६॥ तन्मे भगवती शंसत्विदं किं जलधेस्तटम्? । को द्वीपः? कः प्रदेशश्च ?, कुत्राऽऽश्रमपदं च वः
॥ १७७ ॥ मां वीक्ष्य वक्रदृष्टिः सा, क्षणं तस्थौ ससाध्वसा । अदत्तप्रतिवाक्यायां, गच्छन्त्यां तु व्यचिन्तयम् ॥ १७८ ॥
तापसीयं तरुण्येका, पृच्छाम्यन्यं ततो नरम् । व्यावृत्तः पुनरप्येतां, प्रष्टुं यावदवस्थितः ॥ १७९ ॥ तावत्करण्डकं मुक्त्वा,

१ कल्क० मलीन । २ विपिन० वन ।

वल्कं सा पर्यधात्पुनः । वभञ्जाऽङ्गं जजृम्भे च, ववन्ध कवरीं पुनः ॥ १८० ॥ तन्निरीक्ष्य किमेतेन, विरुद्धाऽऽलोकनेन मे । ध्यात्वेति तटिनीं गत्वा, फलाहारो मया दधे ॥ १८१ ॥ कालेनाऽथ नभोवृक्षफले कवलिते रवौ । सुप्तोऽहं यामिनीशेषे, स्वप्नमीदृक्षमैक्षिषि ॥१८२॥ कयापि काञ्चनतरोरन्तिकस्थस्य मे स्त्रिया । दत्त्वा पुष्पस्रजं व्यक्तमित्युक्तं पुरतो मम ॥ १८३ ॥ यदियं पूर्वनिर्वृत्तोपनीता भवतः पुनः । गृहाण सा गृहीत्वाऽथ, मया कण्ठे निवेशिता ॥ १८४ ॥ तदा सारसनादेन, विबुद्धोऽहं व्यचिन्तयम् । नूनं स्वप्नोऽयमासन्नकन्यकालाभसूचकः ॥ १८५ ॥ स कथं स्याद्वने मेऽथ, दक्षिणं चक्षुरस्फुरत् । ततश्चेतसि निश्चिक्येऽवश्यमेष भविष्यति ॥ १८६ ॥ विलासराजधानीं तु, तां विलासवतीं विना । न मेऽन्यकन्यकालाभो, वहुमानाय मानसे ॥ १८७ ॥ स्वप्नोऽपि पूर्वनिर्वृत्ता, स्रगिति स्पष्ट एव मे । सा विलासवती मन्ये, तापस्यां हि क्व विभ्रमाः? ॥ १८८ ॥ इति मे ध्यायतः पुण्यमिव सूर्यः समुद्ययौ । वीक्षमाणोऽथ वभ्राम, तापसीं तां वने वने ॥ १८९ ॥ माधवीश्लिष्टमाकन्दतलेऽन्येद्युरहं स्थितः । इमां ध्यायन्नशृणवं, मसृणं मुर्मुरध्वनिम् ॥ १९० ॥ ततो विवलितग्रीव, आगच्छन्तीं व्यलोकयम् । जरन्तीं तापसीमेकां, तपःकृशतमामहम् ॥ १९१ ॥ नता सा सुचिरं जीव, राजपुत्रेति मां जगौ । अहं दध्यौ कथं वेत्ति, मां ज्ञानी वा मुनिर्जनः ॥ १९२ ॥ मत्प्रमार्जितभूमौ सोपविष्टा मामुवाच च । कुमार! श्रूयतामस्ति, वैताढ्यो नाम पर्वतः ॥ १९३ ॥ तत्र गन्धसमृद्धाख्ये, पुरे विद्याधरेश्वरः । सहस्रवल इत्याऽसीत्तत्प्रिया तु शुभाऽभिधा ॥ १९४ ॥ तयोरेका वभूवऽहं सुता मदनमञ्जरी । उदूढा पवनगतिनाम्ना खेचरभूभुजा ॥ १९५ ॥ गताभ्यामन्यदाऽऽवाभ्यां, नन्दने

---

१ चम्पकवृक्षस्य ।

क्षीणतैलप्रदीपवत् ॥१९६॥ ततोऽहं तमसाऽऽक्रान्ता, भ्रमन्ती भूतलेऽपतम्।
क्रीडितं चिरम्। मङ्क्ता तत्र विध्यातः, यावत्तावत्समाययौ। देवानन्दाभिधो विद्याधरः
उत्पतन्ती पुनर्विद्याभ्रंशादुदपतं न हि ॥१९७॥ स्वापराधं स्मरन्त्यस्मि, मयाप्युक्तमार्यपुत्रो व्यपद्यत ॥१९९॥
सत्तापसव्रतः ॥१९८॥ स प्राह किमिदं वत्से!, मयोचे दैवचेष्टितम्। तेनोक्तं किं? परम् ॥२००॥ किं च शोकार्तया
विद्या च विस्मृता सोऽथ, प्राह किं परिदेवितैः?। चलं वैभवमायुश्च, धर्म एकः स्थिरः परम् ॥२००॥ किं च शोकार्तया
वत्से! सिद्धकूटमलङ्घयत। तत्राऽपतच्च त्वन्माल्यं, विद्याभ्रंशस्ततोऽभवत् ॥२०१॥ अथो मयोचे भगवन्व्रतमेव ददस्व
मे। इहलोकोपकारिण्या, विद्यया सर्वथाप्यलम् ॥२०२॥ ततो भगवताऽऽख्याय, तापसाचारमात्मनः। आपृच्छय पितरौ
श्वेतद्वीपेऽत्रानीय दीक्षिता ॥२०३॥ कियत्यपि गते कालेऽन्यदाऽहं समिदाहृतौ। गताऽम्भोधितटेऽद्राक्षं, कन्यां फलकस-
ङ्गताम् ॥२०४॥ मूर्च्छितामपि जीवन्तीं, मत्वा लावण्यतो द्रुतम्। अभ्यषिञ्चमहं वारि, समादाय कमण्डलौ ॥२०५॥
दृशावुन्मीलयन्ती सा, समभाषि मया ततः। वत्से! धीरा भवाऽहं यदस्मि ते तापसी पुरः॥२०६॥ ततोऽश्रुमिश्रनेत्राऽसौ,
नत्वा मामुपविश्य च। दीर्घमुष्णं च निःश्वस्य, चित्ते चिरमखिद्यत ॥२०७॥ आकृत्या ज्ञातवत्येनां, महाकुलसमुद्भवाम्।
वलादपि फलैः प्राणवृत्तिं वत्स! व्यधापयम् ॥२०८॥ नीताऽऽश्रमे कुलपतिं, नता तेनाऽभिनन्दिता। पृष्टा च वत्से! कासि
त्वं, कुतश्चासि समागता ॥२०९॥ तामलिप्त्याः समायातेत्युक्त्वा सा तु निरश्वसीत्। मयाऽध्यायि कुलपतिः, प्रष्टव्यो-
ऽस्याः कुलादिकम् ॥२१०॥ स हि ज्ञानेन विज्ञाततत्त्वः सर्वं प्रवक्ष्यति। सन्ध्याकृत्ये कृते नत्वा, पृष्टोऽथ भगवान्मया
॥२११॥ भगवन्कन्यका केयं, कथं प्राप्तेदृशीं दशाम्। काऽवस्था भाविनी चाऽस्या, ममाऽऽख्याहि प्रसादतः ॥२१२॥ ज्ञान-

दत्तोपयोगोऽथ, भगवानूचिवाञ्शृणु । इयं हि तामलिप्तीशेशानचन्द्रनृपात्मजा ॥२१३॥ भर्तृस्नेहपरायत्तत्वादवापेदृशीं दशाम् । किं? कन्याऽसौ मया प्रोक्ते, द्रव्यतो भगवाञ्जगौ ॥२१४॥ ततश्च श्वेतवीत्यागतामलिप्त्यागमादिकः । स्वर्णद्वीपगतिप्रान्तो, वृत्तान्तो मे निवेदितः ॥२१५॥ इयं तु तं हतं श्रुत्वा, निशीथे निर्गतैकिका । प्राणांस्त्यक्तुमवाप्ता च, स्तेनैर्नृपपथस्थितैः ॥२१६॥ गृहीत्वाऽऽभरणान्युच्चैः, सार्थवाहाचलस्य तैः । दत्ता बर्बरकूलाभिगामिनस्तत्क्षणादियम् ॥२१७॥ अचलेन ततो यानं, निजमारोप्य चालिता । स्फुटितं यानमेतस्य, फलकं चेयमासदत् ॥२१८॥ इदं कूलं त्रिरात्रेण, ततः प्रापाऽम्बुधेरियम् । इदं वीतं भविष्यत्तु, भर्ता सोऽस्या मिलिष्यति ॥२१९॥ प्राप्य विद्याधरैश्वर्यं, भुक्तभोगोऽनया सह । परलोकहितेनेहलोकं सफलयिष्यति ॥२२०॥ श्रुत्वेत्यपृच्छं भगवन्किमस्या न हतः पतिः? । नेति प्रोक्ते भगवता, हृदि प्रीतिमधामहम् ॥२२१॥ श्यामास्या सा मया प्रोचे, राजपुत्रि! विषीद मा । भवे क्लेशमये ह्यत्र, सुलभा क्लेशसंहतिः ॥२२२॥ सोचे भगवती दत्तां, सुप्रसन्ना मम व्रतम् । मयाऽवादि ततो वत्से! पूर्यतां व्रतवार्तया ॥२२३॥ पृष्टश्च तव वृत्तान्तं, दिव्यज्ञानी मुनिर्मया । श्वेतवीशसुतालोकादिकं सर्वं न्यवेदयत् ॥२२४॥ मा सन्तप ततो वत्से!, जीवत्येव तव प्रियः । तेन दीर्घायुषा भावी, भूयोऽपि तव सङ्गमः ॥२२५॥ श्रुत्वेति तुष्टा सङ्कल्पादुत्तार्याऽऽभरणं ददौ । लज्जिताऽथ मया प्रोक्तमीदृग्दानोचितासि यत् ॥२२६॥ व्रताग्रहेण तदलमिति मद्वचनादियम् । तुष्टा जगाद युष्माकमादेशो मेऽस्तु मूर्धनि ॥२२७॥ अथ तापसकन्यार्हवेषेणैषा चिरं स्थिता । ययौ कुलपतिस्तीर्थं, प्रणन्तुं सिद्धपर्वतम् ॥२२८॥ इतः कतिपयातीतदिनेभ्यः परतो वने । समित्कुशकृते गत्वाऽऽगता स्विन्ना सबाष्पदृक् ॥२२९॥ पृष्टा च किमिदं वत्से!, बन्धूनां स्मृतमाह सा ।

मयोचे भगवानेतु, स त्वां नेष्यति बन्धुषु ॥२३०॥ तदेतत्प्रतिश्रुत्याऽस्थात्पञ्चषाणि दिनानि सा । देवातिथ्यक्रियामन्दा-
दरा स्मारविकारयुक् ॥२३१॥ मरालं वार[1]लायुक्तं, चूतं नागलताश्रितम् । सबाष्पं वीक्ष्य निश्वस्याऽन्येद्युरेषाऽऽश्रमाद्ययौ
॥२३२॥ तस्याः पृष्ठे गता गुप्तमहं सा त्वकरण्डका । पुष्पोच्चयावनौ याता, वीक्षामास दिशोऽखिलाः ॥२३३॥ ततोऽ-
ध्यायि मया किं नु, पश्यत्येषा गता तु सा । अशोकवीथिकारम्भावनं तत्र रुरोद च ॥२३४॥ विललापेति हा! तत्रभ[2]-
वत्यो वनदेवताः!। स्थानं तदेतद्यत्राऽऽर्यपुत्रोऽभ्यागात्कुतश्चन ॥२३५॥ तापसीति धिया तेन, विनीतेन नतास्मि च। उक्ता
च मृदुलालापं, तपस्ते वर्धतां शुभे! ॥२३६॥ श्वेतवीवास्यहं तामलिप्त्या यान्प्रति सिंहलम् । अन्तराभग्नपोतत्वादेकाकीह
समागमम् ॥२३७॥ तन्मे भगवती शंसत्विदं किं जलधेस्तटम्?। को द्वीपः? कः प्रदेशो? वा, कुत्राश्रमपदं च वः ॥२३८॥
अदत्तोत्तरया स्तोकं, भूभागं गतया मया । धैर्यमालम्ब्य पश्यन्त्या, स दृष्टः पृष्ठमापतन् ॥२३९॥ तन्न जाने स एवाऽयं,
किं वा मे निर्गतो हृदः। कोप्यार्यपुत्ररूपोऽथ, विप्लावयति मां सुरः ॥२४०॥ स्वमुद्भ्रामि वासन्त्यामहं तद्विरहासहा।
आर्यपुत्रस्य गात्रे तु, त्राणं कुर्यात सर्वथा ॥२४१॥ भगवत्यो ममेदक्षं, वृत्तान्तं कथयेत च। अहं तु शंसितुं नेशेऽमन्द-
मन्दा[3]क्षमन्दिरा ॥२४२॥ इत्युक्त्वाऽऽरुह्य वल्मीकं, पाशे न्यस्य शिरोधराम् । यावद्विमुञ्चत्यात्मानं, तावदस्मि प्रधाविता
॥२४३॥ अपास्य पाशमित्युक्त्वा, वत्से! नाप्रच्छनं मयि । कार्यस्याऽकथनं चापि, वत्सलायां तवोचितम् ॥२४४॥ ततो
हि सर्वमनया, श्रुतमित्याहितत्रपा । सोचे प्रसीद भगवत्यत्र लज्जाऽपराध्यति ॥२४५॥ अथाऽभापि मया वत्से! सत्यगीर्भगवा-

---

१ वारला० हंसी । २ तत्रभवत्यः—पूज्याः । ३ मन्दाक्ष० लज्जा ।

न्खलु। मन्ये त्वत्प्रियमायातमतो यावश्चलाऽऽश्रमम् ॥२४६॥ इत्यागत्याऽऽश्रमं स्थित्वा, पार्श्वेऽस्याः प्रयता स्वयम् । त्वां गवेषयितुं प्राहिणवं मुनिकुमारकान् ॥ २४७॥ तैरदृष्टमहं द्रष्टुं, वत्स! त्वामुत्सुकागमम् । भवितव्यतया नित्योद्यतया दर्शितोऽसि च ॥ २४८ ॥ तदेहि दर्शनं देहि, देहसदेहसंयुजः । स्मरज्वरजुषस्तस्या, जीवसञ्जीवनौषधम् ॥ २४९ ॥ तया समं समाजग्मिवानस्म्यथ तदाश्रमम् । तां पद्मवदनां पद्मस्रस्तरस्थामलोकयम् ॥ २५० ॥ तापस्या गौरवेणाऽहमासने विनिवेशितः । सापि सापत्रपेवाऽऽशु प्राविशन्मम मानसम् ॥ २५१ ॥ तापसीवचसा चासावर्घपाद्यादिकं व्यधात् । तदा माध्यन्दिनीं सन्ध्यामध्यास्त च दिनाधिपः ॥ २५२ ॥ आतिथ्यं पनसैः कृत्वा, तापसी साश्रु मां जगौ । किमातिथ्यं विधत्तां ते, निःसङ्गो मादृशो जनः ॥ २५३ ॥ तद्विलासवती सेयं, धात्रा सम्पादिता पुरा । पुनः सम्पाद्यते तुभ्यं, जीविताभ्यधिका मम ॥ २५४ ॥ इत्युक्त्वा रुदतीं वल्कपिहितास्यामहं जगौ । इदं भगवति! त्यक्तसंसारायाः किमद्य ते ॥ २५५ ॥ ततस्तापसकन्याभिरुपनीतेन पाथसा । सा प्रक्षाल्य मुखं वल्कान्तेन निर्मार्ज्य चोत्थिता ॥ २५६ ॥ स्वालङ्कारयुतामेतामदान्मेऽनलसाक्षिकम् । पर्यणैषमहं स्विन्नकराङ्गुलिमिलत्करम् ॥ २५७ ॥ वने रन्तुं गतावावामवाचिन्व सुमोत्करम् । मयोक्ताप्याश्रमं गन्तुं, नैच्छत्सा पुष्पलोभतः ॥२५८॥ वञ्चिताऽथ मयाऽऽवृत्य, पटं नयनमोहनम्। मामनालोक्य साऽकस्मान्मूर्च्छिता न्यपतद्भुवि ॥ २५९ ॥ हा! किमेतदुपक्रान्तमित्यहं संत्यजन्पटम् । तां समाश्वासयामास, कदलीदलवीजनैः ॥ २६० ॥ स्वस्थीभूता जगादैषा, नाथ! दृष्टोऽसि नो मया । मयोचे नाऽगमं क्वापि, साऽऽह तत्किं न वीक्षितः ॥ २६१ ॥ तदप्रत्ययभीतेन, पटव्यतिकरो मया । निवेदितः समस्तोऽपि, तं परीक्ष्य च साऽग्रहीत् ॥२६२॥ इति प्रीतिमये काले, कियत्यपि गते प्रिया ।

मयोक्ता देशयानाय, साऽमन्यत च मद्वचः ॥२६३॥ तापस्यनुज्ञया भिन्नपोतसंसूचनं ध्वजम् । तीरे नीरेशितुः प्रांशुतरे वंशे व्यधामहम् ॥२६४॥ तत्र स्थितं च नौकास्था निर्यामा एत्य मां जगुः । भग्नवाहन ! हे! भानुदेवेन प्रहिता वयम् ॥२६५॥ महाकटाहवास्तव्यः, स गच्छन्मलयाचलम् । भग्नपोतध्वजं दृष्ट्वा, त्वामाह्वयति सत्वर ॥२६६॥ मयोचे मम कान्ताऽस्ति, प्रोचुः साप्युपैतु तत् । अथाऽऽवां दम्पती तापसादीनापृच्छ्य जग्मिव ॥२६७॥ सप्रियः सार्थवाहस्य, बहुमानेन वाहनम् । आरूह्याऽहं प्रियापार्श्वात्पटरत्नमुपाददे ॥२६८॥ सार्थवाहसुतेनाऽथ प्रस्नवन्पातितोऽम्बुधौ । सम्प्राप्तफलकः पञ्चरात्रान्मलयमासदम् ॥२६९॥ दध्यौ च वणिजा तेन, कुतोऽहं पातितोऽम्बुधौ । हुं विलासवतीलोभान्मूढोऽयं वेत्ति तां नहि ॥२७०॥ जीवनं[1] मां विना सा यच्छफरीव[2] न जीवति । पटावगुण्ठनाज्ज्ञातमिति पुष्पोच्चयक्षणे ॥२७१॥ तरौ क्वापि समुद्बन्ध्य, तत्त्यजाम्यहमप्यसून् । इति पश्यन्दिशोऽपश्यं, नीपमेकं[3] समीपतः ॥२७२॥ स्थलमौलिस्थिते तस्मिन्गतोऽहं विगतोत्सवः । ससरोजं सरोऽद्राक्षं, सनक्षत्रमिवाम्बरम् ॥२७३॥ हंसं विरहिणं वीक्ष्य, तत्र हंसीयुतं पुनः । अहं दध्यौ ममास्त्येव, प्रियाऽवश्यं मिलिष्यति ॥२७४॥ अन्यच्च मुनिनाऽप्यस्ति, कथितं यदियं पतिम् । प्राप्य विद्याधरीत्वं, चोत्तमार्थं साधयिष्यति ॥२७५॥ तन्न स्वं घातयिष्यामि, विचित्रा कर्मणां गतिः । प्राप्तकालं ममाऽप्येतत्तस्या एव गवेषणम् ॥२७६॥ चिन्तयित्वेति नारङ्गः, कृतनारङ्गभोजनः । तामन्वेष्टुं प्रवृत्तोऽब्धेर्यावत्तटमटाम्यहम् ॥२७७॥ अपश्यं तावदाश्लिष्टफलकामात्मनः प्रियाम् । रुरोद सापि मां वीक्ष्याऽपृच्छमाश्वास्य तामहम् ॥२७८॥ सोचे त्वयि तदा नाथ !, पतिते मन्दभा-

---

१ जलम् । २ शफरी० मत्सी । ३ वृक्षम् ।

ग्यतः । सार्थेशपोतः पोतश्चोत्पथेनाऽभजतां गतिम् ॥ २७९ ॥ त्वद्वियोगेन मे क्रन्दमानाया इव पीडया । निलीने रजनी नौश्च, द्रागिमीलिततारके ॥ २८० ॥ ततः फलकमासाद्य, निजं पुण्यमिवाञ्जसा । लङ्घितो दुःखवद्वार्धिर्दृष्टश्च त्वं तदन्तवत् ॥ २८१ ॥ तत्पृष्टेन मयाप्यूचे, प्रमादात्पतितोऽस्म्यहम् । प्राच्यनौफलकं प्राप्याऽत्रागतस्त्वामलोकयम् ॥ २८२ ॥ सोचे नाथ! तृषार्ताऽहं, मयोक्तं निकटं सरः । सा तु नाऽशकदाऽऽगन्तुं, खिन्ना मृद्वी नितम्बिनी ॥ २८३ ॥ मयोचे तावदत्रैव देवि! तिष्ठ लतागृहे । पद्मिनीपुटके तोयं, यावत्त्वद्योग्यमानये ॥ २८४ ॥ तयोचे तोयतृष्णा मां, न तथा नाथ! बाधते । यथा त्वद्वदनाम्भोजतृष्णाऽथ जगदे मया ॥ २८५ ॥ तावद्धीरा भवेदानीं, यावत्पानीयमानये । इत्युक्त्वा पल्लवैः कृत्वा, स्रस्तरं तामशाययम् ॥ २८६ ॥ पटं चास्या राम्यर्योचे विघ्नव्यूहघने वने । पटेन च्छन्नया स्थेयं, त्वया यावदिहैम्यहम् ॥ २८७ ॥ तया मदीय आदेशः, प्रत्यगृह्यत मौलिना । गत्वाहं तु सरो नीरं, फलानि च समानयम् ॥ २८८ ॥ आगच्छन्वामदृक्स्पन्दसाशङ्कस्त्वहमूचिवान् । दृग्मोहनपटं मुञ्च, जलं देवि! गृहाण च ॥ २८९ ॥ अलब्धप्रतिवाचा च, तदेवोचे पुनर्मया । तथैव पुनरप्राप्तोत्तरः स्रस्तरमस्पृशम् ॥ २९० ॥ अलब्धायां ततो देव्यां, हा! हतोऽस्मीति जल्पतः । पपात मे विलक्षस्य, वलं चित्ताज्जलं करात् ॥ २९१ ॥ विलपन्देवि! देवीति, परितः पदपद्धतिम् । वीक्षमाणोऽजगरस्य, पर्दर्णी च व्यलोकयम् ॥ २९२ ॥ तां दृष्ट्वा हता! हा हन्त!, कान्ता मेऽजगरेण किम् ? । इति शोकार्णवे मज्जन्निव मूर्च्छामुपागमम् ॥ २९३ ॥ ततोऽम्भोधितटासन्नसशीकरसमीरणैः । मूर्च्छाव्यपगमे जाते, चिन्तयामासिवानहम् ॥ २९४ ॥ यावन्नाजगरो

१ लीटो इति गुर्जरभाषायाम् ।

ध्यात्वेत्यहं समीपेऽस्य, गत्वा कोप- मम ॥२९५॥
दूरं, याति तावद्विशाम्यहम् । मुखेऽस्य संमतो मृत्युरपि देव्या समं मम ॥२९५॥ ध्यात्वेत्यहं समीपेऽस्य, गत्वा कोप-
यितुं च तम् । न्यहनं मूर्ध्नि पादेन, पटस्तेनोदगीर्यत ॥२९६॥ ततः कुण्डलिताङ्गेऽस्मिन्नहं पटमुपाददे । हृद्यमुं हृद्यमाधा-
योद्बन्धनं च व्यधां वटे ॥२९७॥ रक्षितुं मां समुल्लासिशाखामिषभुजस्तदा । वनदेवीः खगारावैरिवाहृत महावटः॥२९८॥
समाथ लम्बमानस्य, पश्यतो भ्रमतस्तरून् । मूर्च्छाऽतुच्छा समागच्छत्त्रुटितः पाशकस्तु सः ॥२९९॥ अत्रान्तरे मुनिः क-
श्चिदकस्मादेत्य सत्वरः । कमण्डलुजलैर्गात्रं, सिञ्चति स्म ममोच्चकैः ॥३००॥ मूर्च्छाव्यपगमे चाहमालोक्य स्वं भुवि स्थि-
तम् । अचिन्तयं कथं मन्दभाग्योऽहं न मृतोऽस्मि हा! ॥३०१॥ मुनिर्मदीयमङ्गं च, मृदुना पाणिना स्पृशन् । मयोचे
किमिदं चक्रे, भगवन्भवता मम ॥३०२॥ मुनिरूचे मया वीक्ष्य, त्वामात्मनिधनोद्यतम् । चिन्तितं कुरुते कर्म, कोपि
कापुरुषोचितम्॥३०३॥ ध्यात्वेति शीघ्रमायामि, यावत्तावदमुच्यत । त्वयाऽऽत्माऽत्रागतश्चाहं, पाशश्च त्रुटितस्तत्र ॥३०४॥
मूर्च्छितः पतितः सिक्तः, कमण्डलुगतैर्जलैः । लब्धसंज्ञः परामृष्टः, पाणिनेति कृतं मया ॥३०५॥ तदाऽऽचक्ष किमीदृक्षमृ-
त्योस्तव निबन्धनम् । न किंचन मया प्रोचे, लज्जासज्जात्मना मनाक् ॥३०६॥ मुनिरूचे मुनिजने, जननीजनसन्निभे ।
का त्रपाऽत्र ततः सत्यं, वृत्तान्तं मे निवेदय ॥३०७॥ ततोऽहं पुरतस्तस्य, सर्वं वृत्तान्तमात्मनः । श्वेतवीतः समारभ्यो-
द्बन्धनान्तं न्यवेदयम् ॥३०८॥ अथाऽऽह मुनिरीदृक्ष, एवाऽयं दुःखभूर्भवः । तद्विपादनिपादं मा, स्पृश मालिन्यकारणम्
॥३०९॥ सर्वदुःखक्षयोपायं, धर्मकर्म समाश्रय । यद्विनाऽन्यभवेऽप्यङ्गी, सुखमङ्गीकरोति न ॥३१०॥ मयोचे सत्यमेवेदं,
भगवन्भवतो वचः । अहं कान्तावियोगार्तो, धर्तुं प्राणान्न तु क्षमः ॥३११॥ तदुपायं समाख्याहि, मुमूर्षोस्तादृशं मम ।

प्राप्नोमि प्रेयसीं येन, परलोकगतामपि ॥ ३१२॥ मुनिः प्रोवाच यद्येवं, तदस्त्यत्र महीधरे । तीर्थभूतं तटं यस्मात्पतनं सर्वकामदम् ॥ ३१३॥ ततो मुनिसमादिष्टवर्त्मनाऽगां त्रिभिर्दिनैः । तत्राऽऽरुह्य प्रियाप्राप्तिकामः कामं पपात च ॥ ३१४॥ एकेन खेचरेणाऽहं, दृष्टश्च निपतंस्ततः । हहा!! प्रमाद इत्युच्चैर्वदता विधृतोऽस्मि च ॥ ३१५॥ श्रीखण्डद्रुमखण्डेऽहं, नीत्वा तेनाऽस्मि भाषितः । किं? ते साहसिकोत्तंस!, कर्मेदं प्राकृतोचितम् ॥३१६॥ किं चात्र कारणं भ्रातः!, कथ्यं चेत्कथयस्व मे । मयोचे किमकथ्यं स्यात्त्वादृशामीदृशां सखे! ॥ ३१७॥ प्रियावियोगतो मर्तुकामस्य मुनिना मम । कथितो भृगुपातोऽयं, परत्राऽपीष्टमेलकृत् ॥ ३१८॥ श्रुत्वा स्मित्वा च सोऽवादीन्नास्ति स्नेहस्य दुष्करम् । अयं हि मूलमाध्यर्त्तिनिर्विवेकत्वभूरुहाम् ॥ ३१९॥ स्नेहमोहमहो! हित्वा, बोधदीपेन पश्य तत् । कर्माधीनाङ्गिनामेका, क्व गतिः? क्व च संगतिः? ॥ ३२०॥ सर्वकामप्रदं तीर्थं, नान्यदस्ति जगत्त्रये । श्रीसर्वज्ञसमादिष्टं, विना धर्मं चतुर्विधम् ॥ ३२१॥ संरम्भेण तदेतेन, कृतं किं तु निवेदय । कथं कदा वियोगस्ते, जायया समजायत ॥३२२॥ अथाऽजगरवृत्तान्तमहं तस्मै महात्मने । त्रिदिन्याः परतः पङ्क्तियोजनान्ते[1] न्यवेदयम् ॥ ३२३॥ स प्रोचेऽलं विषादेन, तर्हि जीवति ते प्रिया । मयोचे कथमित्याह, खेचरः शृणु बान्धव! ॥ ३२४॥ चक्रसेनाभिधानोऽस्ति, विद्याधरधराधिपः । तेन चाप्रतिचक्रायाः, समाराध्यत साधनः ॥३२५॥ पूर्वसेवा कृता चास्यास्तेन द्वादशमासिकी । अधुनोत्तरसेवायां, सप्तलक्षीं जपत्यसौ ॥ ३२६॥ तद्विधिश्चाष्टचत्वारिंशद्योजनभुवोऽन्तरे । क्षेत्रशुद्धिं विधायात्र, सप्ताहोरात्रमङ्गिनाम् ॥ ३२७॥ रक्षणं च समादिश्य, राज्यं न्यस्य च मन्त्रिषु ।

१ पङ्क्तिशब्द'—दशसङ्ख्यावाचकः ।

मन्त्रजापं च तस्याऽद्य, कुर्वतः सातलाक्षिकम् । ससाहोरा-
पौपधस्थैरिव स्थेयं, मलयाद्रिगुहान्तरे ॥ ३२८ ॥ [ युग्मम् ] मन्त्रजापं च तस्याऽद्य, कुर्वतः सातलाक्षिकम् । यतो विद्याधराः स्वामिकार्येऽभू-
त्रमापूर्णं, सहाऽस्माकं मनोरथैः ॥ ३२९ ॥ इयन्मात्रे ततः क्षेत्रे, वेद्मि ते न मृता प्रिया । यतो विद्याधराः स्वामिकार्येऽभू- ॥ ३२१ ॥ कथं
वन्कृतोद्यमाः ॥ ३३० ॥ अचिन्तयमहं युक्तियुक्तमस्य वचः खलु । तत्प्रावृतपटस्यैवोद्गिरणं कथमन्यथा ॥ ३२१ ॥ कथं
वा ग्रस्तसत्त्वस्य, तस्याऽहेः कुण्डलक्रिया । इति ध्यात्वा मया प्रोचे, मुदितेन स खेचरः ॥ ३३२ ॥ [ युग्मम् ] महापुरुष !
यद्येनं, तत्ते भवतु मङ्गलम् । भवताऽऽश्वासितो मृत्योर्निर्वृत्तोऽसि सुहृत्तम ! ॥ ३३३ ॥ तत्तिष्ठ त्वमिहैवाहं, याम्यन्वेष्टुं पुनः
प्रियाम् । खेचरोऽभिदधे माऽगा, विधास्ये सर्वमप्यहम् ॥ ३३४ ॥ मयाथ वचनं तस्य, तथेति प्रत्यपद्यत । सह मच्चित्त-
तापेन, तपनोऽस्तमितस्तदा ॥ ३३५ ॥ अर्धरात्रे ततोऽमानप्रोच्यमानजयध्वनिः । विद्याधरविमानः खे, द्योतमानः समा-
गमत् ॥ ३३६ ॥ ससंभ्रममथोत्थाय, स मां विद्याधरोऽवदत् । स्वामिनोऽत्यद्भुतामृद्धिं, सिद्धविद्यस्य पश्य भो ! ॥ ३३७ ॥
पश्यतोरावयोश्चक्रसेनविद्याधरेशितुः । सैन्यं बहु वहद्व्योममार्गेणाऽगाद्यथेप्सितम् ॥ ३३८ ॥ विभाते स समादाय, मां
निर्वृतिकरे तटे । गत्वा विद्याधरोऽनंसीच्चक्रसेनं निजेश्वरम् ॥ ३३९ ॥ स स्वस्मै स्वामिने विश्वं, मद्वृत्तान्तं न्यवेदयत् ।
विद्याधराधिराजस्तं, श्रुत्वा मामिदमभ्यधात् ॥ ३४० ॥ महापुरुष ! मा भूस्त्वं, मनागपि हि दुर्मनाः । अद्य सम्पादयिष्यामि
नियतं दयितां तव ॥ ३४१ ॥ खेचरद्वयमागत्य, तदा चामुं व्यजिज्ञपत् । देवादेशादहिंसार्थमावां यथित्र कानने ॥ ३४२ ॥
अद्राक्ष्वाऽजगरत्रस्तामसंव्यानां वराङ्गनाम् । हहाऽऽर्यपुत्र ! हा ! हाऽऽर्यपुत्रेति च विलापिनीम् ॥ ३४३ ॥ तद्विपत्तिभिया-
ऽऽवाभ्यामानीता शिखरेऽपि सा । हहाऽऽर्यपुत्र ! हा ! हाऽऽर्यपुत्रेति प्रालपत्पुनः ॥ ३४४ ॥ ततश्च भणितावाभ्यामलमार्ये !

प्राप्नोमि प्रेयसीं येन, परलोकगतामपि ॥ ३१२॥ मुनिः प्रोवाच यद्येवं, तदस्त्यत्र महीधरे । तीर्थभूतं तटं यस्मात्पतनं सर्वकामदम् ॥ ३१३॥ ततो मुनिसमादिष्टवर्त्मनाऽगां त्रिभिर्दिनैः । तत्राऽऽरुह्य प्रियाप्राप्तिकामः कामं पपात च ॥ ३१४॥ एकेन खेचरेणाऽहं, दृष्टश्च निपतंस्ततः । हहा!! प्रमाद इत्युच्चैर्वदता विधृतोऽस्मि च ॥ ३१५॥ श्रीखण्डद्रुमखण्डेऽहं, नीत्वा तेनाऽस्मि भाषितः । किं? ते साहसिकोत्तंस!, कर्मेदं प्राकृतोचितम् ॥३१६॥ किं चात्र कारणं भ्रातः!, कथ्यं चेत्कथयस्व मे । मयोचे किमकथ्यं स्यात्त्वादृशामीदृशां सखे! ॥ ३१७॥ प्रियावियोगतो मर्तुकामस्य मुनिना मम । कथितो भृगुपातोऽयं, परत्राऽपीष्टमेलकृत् ॥ ३१८ ॥ श्रुत्वा स्मित्वा च सोऽवादीन्नास्ति स्नेहस्य दुष्करम् । अयं हि मूलमाध्यर्त्तिनिर्विवेकत्वभूरुहाम् ॥ ३१९ ॥ स्नेहमोहमहो! हित्वा, बोधदीपेन पश्य तत् । कर्माधीनाङ्गिनामेका, क्व गतिः? क्व च संगतिः? ॥ ३२० ॥ सर्वकामप्रदं तीर्थं, नान्यदस्ति जगत्त्रये । श्रीसर्वज्ञसमादिष्टं, विना धर्मं चतुर्विधम् ॥ ३२१ ॥ संरम्भेण तदेतेन, कृतं किं तु निवेदय । कथं कदा वियोगस्ते, जायया समजायत ॥३२२॥ अथाऽजगरवृत्तान्तमहं तस्मै महात्मने । त्रिदिन्याः परतः पङ्क्ति[1]योजनान्ते न्यवेदयम् ॥ ३२३ ॥ स प्रोचेऽलं विषादेन, तर्हि जीवति ते प्रिया । मयोचे कथमित्याह, खेचरः शृणु बान्धव! ॥ ३२४ ॥ चक्रसेनाभिधानोऽस्ति, विद्याधरधराधिपः । तेन चाप्रतिचक्रायाः, समाराध्यत साधनः ॥३२५॥ पूर्वसेवा कृता चास्यास्तेन द्वादशमासिकी । अधुनोत्तरसेवायां, ससलक्षीं जपत्यसौ ॥ ३२६ ॥ तद्विधिश्चाष्टचत्वारिंशद्योजनभुवोऽन्तरे । क्षेत्रशुद्धिं विधायात्र, सप्ताहोरात्रमङ्गिनाम् ॥ ३२७ ॥ रक्षणं च समादिश्य, राज्यं न्यस्य च मन्त्रिषु ।

---

१ पङ्क्तिशब्द.—दशसंख्यावाचकः ।

पौषधस्यैरिव स्थैर्यं, मलयाद्रिगुहान्तरे ॥ ३२८ ॥ [ युग्मम् ] मन्त्रजापं च तस्याऽद्य, कुर्वतः साप्तलाक्षिकम् । सप्ताहोरात्रमापूर्णं, सहाऽस्माकं मनोरथैः ॥ ३२९ ॥ इयन्मात्रे ततः क्षेत्रे, वेद्मि ते न मृता प्रिया । यतो विद्याधराः स्वामिकार्येऽभूवन्कृतोद्यमाः ॥ ३३० ॥ अचिन्तयमहं युक्तियुक्तमस्य वचः खलु । तत्प्रावृतपटस्यैवोद्गिरणं कथमन्यथा ॥ ३३१ ॥ कथं वा ग्रस्तसत्त्वस्य, तस्याऽहेः कुण्डलक्रिया । इति ध्यात्वा मया प्रोचे, मुदितेन स खेचरः ॥ ३३२ ॥ [ युग्मम् ] महापुरुष ! यद्येवं, तत्ते भवतु मङ्गलम् । भवताऽऽश्वासितो मृत्योर्निर्वृत्तोऽस्मि सुहृत्तम ! ॥ ३३३ ॥ तत्तिष्ठ त्वमिहैवाहं, याम्यन्वेष्टुं पुनः प्रियाम् । खेचरोऽभिदधे माऽगा, विधास्ये सर्वमप्यहम् ॥ ३३४ ॥ मयाथ वचनं तस्य, तथेति प्रत्यपद्यत । सह मच्चित्ततापेन, तपनोऽस्तमितस्तदा ॥ ३३५ ॥ अर्धरात्रे ततोऽमानप्रोच्यमानजयध्वनिः । विद्याधरविमानः खे, द्योतमानः समागमत् ॥ ३३६ ॥ ससंभ्रममथोत्थाय, स मां विद्याधरोऽवदत् । स्वामिनोऽत्यद्भुतामृद्धिं, सिद्धविद्यस्य पश्य भो ! ॥३३७॥ पश्यतोरावयोश्चक्रसेनविद्याधरेशितुः । सैन्यं बहु वहद्व्योममार्गेणाऽगाद्यथेप्सितम् ॥ ३३८ ॥ विभाते स समादाय, मां निर्वृतिकरे तटे । गत्वा विद्याधरोऽनंसीच्चक्रसेनं निजेश्वरम् ॥ ३३९ ॥ स स्वस्मै स्वामिने विश्वं, मद्वृत्तान्तं न्यवेदयत् । विद्याधराधिराजस्तं, श्रुत्वा मामिदमभ्यधात् ॥३४०॥ महापुरुष ! मा भूस्त्वं, मनागपि हि दुर्मनाः । अद्य सम्पादयिष्यामि नियतं दयितां तव ॥ ३४१ ॥ खेचरद्वयमागत्य, तदा चामुं व्यजिज्ञपत् । देवादेशादहिंसार्थमावां यथित्र कानने ॥ ३४२ ॥ अद्राक्ष्वाऽजगरत्रस्तामसंव्यानां वराङ्गनाम् । हहाऽऽर्यपुत्र ! हा ! हाऽऽर्यपुत्रेति च विलापिनीम् ॥ ३४३ ॥ तद्विपत्तिभियाऽऽवाभ्यामानीता शिखरेऽपि सा । हहाऽऽर्यपुत्र ! हा ! हाऽऽर्यपुत्रेति प्रालपत्पुनः ॥ ३४४ ॥ ततश्च भणितावाभ्यामलमार्ये !

भिया तव । क्काऽऽर्यपुत्रस्तवेत्येषाऽऽचख्यावस्ति गतोऽम्भसे ॥ ३४५॥ गवेपयन्त्यामावाभ्यां, न स दृष्टः क्वचित्पुनः । सा तु तन्नामलग्नाऽस्ति, तदादित्यक्तभोजना ॥३४६॥ इति श्रुत्वा तयोर्वाचं, विद्याधरपुरन्दरः । मामभापत भद्र! त्वं, जानीहि तत्र सा किमु? ॥ ३४७॥ विद्याधरद्वितीयोऽहमथ तत्र प्रयातवान् । लतामिवाब्दः स्वाभावक्लान्तां कान्तां च दृष्टवान् ॥ ३४८ ॥ आश्वास्य प्रीणयित्वाऽऽत्मदर्शनेनाऽशनेन च । तामानयमवक्रस्य, चक्रसेनस्य सन्निधौ ॥ ३४९॥ चक्रसेनोऽभ्यधाद्भद्र!, किं ते कुर्वे प्रियं पुनः? । अहं जजल्प देवाऽतः, परमप्यस्ति किं प्रियम्? ॥ ३५०॥ चक्रसेनः पुनः प्राह, तथाप्यातिथ्यमस्तु ते । विद्याऽजितवला नाम, साधिता खेचरत्वदा ॥ ३५१॥ ततोऽध्यायि मया नैमित्तिकदृष्टमिदं पुरा । निरुपाध्युपकारी च, मान्य एग महामनाः ॥ ३५२॥ चिन्तयित्वेति तद्दत्तां, विद्यामहमुपाददे । साधनोपायमाख्याय, खेचरेन्द्रो जगाम च ॥ ३५३॥ तां सिषाधयिषुर्विद्यां, दध्यावुत्तरसाधकम् । वसुभूतिं तदा यावत्तावदागात्कुतोप्ययम् ॥ ३५४॥ अहो! विधिपरीणाम, इत्यनेन प्रजल्पता । एत्य तापसवेषेण, सुदृढं पर्यरम्भ्यहम् ॥ ३५५॥ किमेतदिति साकूतावावां नेमिव तं ततः । आवयोः स यथौचित्यमाशीर्वादमदान्मुदा ॥ ३५६॥ मया स्वरेण विज्ञातो, वसुभूतिरसाविति । हर्षाश्रु मुञ्चताऽस्मै च, मुमुचे पल्लवासनम् ॥ ३५७॥ चक्रे विलासवत्याऽथ, क्षालनं तस्य पादयोः । भोजनानन्तरं चैप, सतोषं भाषितो मया ॥ ३५८॥ सखे! कथय पाथोधिः, कथं तीर्णस्त्वया तदा । तापसत्वं कथं प्रापे, साम्प्रतं च कुतो भवान्? ॥ ३५९॥ वसुभूतिरथोवाच, प्राप्यैकं फलकं मया । तेनाब्धिं पञ्चरात्रेण, तीर्त्वा मलयमासदम् ॥ ३६०॥ दृष्टस्तपस्विनाऽऽनीतोऽनमं कुलपतिं वने । भोजनान्तेऽमुना पृष्टः, सर्वं तस्मै न्यवेदयम् ॥ ३६१॥ ततः कुलपतिः प्राह, वत्सेदृग्विप्लवं

भवम् । विचिन्त्य मुनयो गेजुस्तदातङ्कावनं वनम् ॥ ३६२ ॥ स मया याचितो दीक्षां, प्राह जीवति ते सखा । मिलिष्यति
च शुश्रूषापरः साधुस्तु तिष्ठ तत् ॥ ३६३ ॥ ज्ञानिनोऽस्य गिरा जातप्रत्याशस्तव दर्शने । अस्थामहमिहैवेयत्कालं सालम्ब-
नव्रतः ॥ ३६४ ॥ इतोऽतीते तृतीयेऽहन्येकेनाऽहं तपस्विना । तव वृत्तान्तमश्रौषं, कथ्यमानं गुरोः पुरः ॥ ३६५ ॥ कथान्ते
मे सखा सैष, इत्यापृच्छय मुनीश्वरम् । अगां मनोरथापूरं, शिखरं त्वत्प्रवृत्तये ॥ ३६६ ॥ दृष्टो विद्याधरस्तत्र, पृष्टोऽशंस-
त्कथां तव । त्वामन्विष्यंस्ततोऽप्यत्राऽऽगमं मित्राऽसि वीक्षितः ॥ ३६७ ॥ अहं दध्यौ ध्रुवं विद्यासम्पदा भाव्यमेव मे । वसु-
भूतिरकाण्डेऽसावागतः कथमन्यथा ॥ ३६८ ॥ ततो न्यवेदयं विद्यासम्पदं वसुभूतये । स प्रीतः प्राह सपदि, सम्पादय समी-
हितम् ॥ ३६९ ॥ ततस्तत्रैव षण्मासं, पूर्वसेवां व्यधामहम् । देवीमूचे च सिद्धिं मे, विद्ध्यहोरात्रमध्यतः ॥ ३७० ॥ तत्त्वया
नातिदूरेऽत्र, स्थेयं गिरिगुहागृहे । विषोढकष्टयाऽद्यैकं, कष्टं सोढव्यमस्ति ते ॥ ३७१ ॥ [ युग्मम् ] तदुभाकर्णि चाकर्ण्य,
सा विलासवती सती । उवाच तव पूर्यन्तामार्यपुत्र ! मनोरथाः ॥ ३७२ ॥ न्यस्यैतां स्थानके कृत्वा, मित्रमुत्तरसाधकम् ।
पूजयित्वाऽजितबलामूर्तिं च स्थण्डिलस्थिताम् ॥ ३७३ ॥ होमकुण्डं प्रचण्डाग्निं, मण्डयित्वा च मण्डले । आत्मरक्षां दध-
लक्षहोममारब्धवानहम् ॥ ३७४ ॥ [ युग्मम् ] तदा क्रमेण मत्तेभपिशाचीप्रलयाम्बुदैः । वेतालराक्षसीवृन्दैर्ममाऽभूवन्विभी-
षिकाः ॥ ३७५ ॥ ताः स्वर्गिगिरिणा वात्या, इवोच्चैर्भैरवारवाः । असह्या अप्यसह्यन्त, मया निश्चलताजुषा ॥ ३७६ ॥
त्रियामायां ततो यामशेषायां पवनो ववौ । होमे समापितप्राये, कुसुमामोदमेदुरः ॥ ३७७ ॥ पुष्पगन्धाम्बुवृष्टिश्च, जज्ञे

१ उभाभ्यां कर्णाभ्यां आकर्ण्येत्यर्थः उभाकर्णि । २ भीतयः । ३ रात्रौ ।

प्रिया तव । क्काऽऽर्यपुत्रस्तवेत्येषाऽऽचख्यावस्ति गतोऽम्भसे ॥ ३४५ ॥ गवेपयञ्चासावाभ्यां, न स दृष्टः क्वचित्पुनः । सा तु तन्नामलन्नाऽस्ति, तदादित्यक्तभोजना ॥३४६॥ इति श्रुत्वा तयोर्वाचं, विद्याधरपुरन्दरः । मामभापत भद्र! त्वं, जानीहि तत्र सा किमु? ॥ ३४७॥ विद्याधरद्वितीयोऽहमथ तत्र प्रयातवान् । लतामिवाब्दः स्वाभावक्लान्तां कान्तां च दृष्टवान् ॥ ३४८ ॥ आश्वास्य प्रीणयित्वाऽऽत्मदर्शनेनाऽशनेन च । तामानयमवक्रस्य, चक्रसेनस्य सन्निधौ॥ ३४९॥ चक्रसेनोऽभ्यधाद्भद्र!, किं ते कुर्वे प्रियं पुनः? । अहं जजल्प देवाऽतः, परमप्यस्ति किं प्रियम्? ॥ ३५० ॥ चक्रसेनः पुनः प्राह, तथाप्यातिथ्यमस्तु ते । विद्याऽजितवला नाम, साधिता खेचरत्वदा ॥ ३५१ ॥ ततोऽध्यायि मया नैमित्तिकदृष्टमिदं पुरा । निरुपाध्युपकारी च, मान्य एप महामनाः ॥ ३५२॥ चिन्तयित्वेति तद्दत्तां, विद्यामहमुपाददे । साधनोपायमाख्याय, खेचरेन्द्रो जगाम च ॥ ३५३ ॥ तां सिपाधयिषुर्विद्यां, दध्यावुत्तरसाधकम् । वसुभूतिं तदा यावत्तावदागात्कुतोप्ययम् ॥ ३५४ ॥ अहो! विधिपरीणाम, इत्यनेन प्रजल्पता । एत्य तापसवेपेण, सुदृढं पर्यरम्भ्यहम् ॥ ३५५ ॥ किमेतदिति साकूतावावां नेमिव तं ततः । आवयोः स यथौचित्यमाशीर्वादमदान्मुदा ॥ ३५६ ॥ मया स्वरेण विज्ञातो, वसुभूतिरसाविति । हर्षाश्रु मुञ्चताऽस्मै च, मुमुचे पल्लवासनम् ॥ ३५७॥ चक्रे विलासवत्याऽथ, क्षालनं तस्य पादयोः । भोजनानन्तरं चैप, सतोषं भाषितो मया ॥ ३५८ ॥ सखे! कथय पाथोधिः, कथं तीर्णस्त्वया तदा । तापसत्वं कथं प्रापे, साम्प्रतं च कुतो भवान्? ॥ ३५९ ॥ वसुभूतिरथोवाच, प्राप्यैकं फलकं मया । तेनाब्धिं पञ्चरात्रेण, तीर्त्वा मलयमासदम् ॥ ३६० ॥ दृष्टस्तपस्विनाऽऽनीतोऽनमं कुलपतिं वने । भोजनान्तेऽमुना पृष्टः, सर्वं तस्मै न्यवेदयम् ॥ ३६१ ॥ ततः कुलपतिः प्राह, वत्सेदृग्विप्लवं

भवम् । विचिन्त्य मुनयो भेजुस्तदातङ्कावनं वनम् ॥ २६२ ॥ स मया याचितो दीक्षां, प्राह जीवति ते सखा । मिलिष्यति च शुश्रूषापरः साधुषु तिष्ठ तत् ॥ २६३ ॥ ज्ञानिनोऽस्य गिरा जातप्रत्याशस्तव दर्शने । अस्थामहमिहैवेयत्कालं सालम्बनव्रतः ॥ २६४ ॥ इतोऽतीते तृतीयेऽह्न्येकेनाऽहं तपस्विना । तव वृत्तान्तमश्रौषं, कथ्यमानं गुरोः पुरः ॥ २६५ ॥ कथान्ते मे सखा नैष, इत्यापृच्छ्य मुनीश्वरम् । अगां मनोरथापूरं, शिखरं त्वत्प्रवृत्तये ॥ २६६ ॥ दृष्टो विद्याधरस्तत्र, पृष्टोऽशंसत्कथां तव । त्वामन्विष्यंस्ततोऽप्यत्राऽऽगसं मित्राऽसि वीक्षितः ॥ २६७ ॥ अहं दध्यौ ध्रुवं विद्यासम्पदा भाव्यमेव मे । वसुभूतिरकाण्डेऽसावागतः कथमन्यथा ॥ २६८ ॥ ततो न्यवेदयं विद्यासम्पदं वसुभूतये । स प्रीतः प्राह सपदि, सम्पादय समीहितम् ॥ २६९ ॥ ततस्तत्रैव षण्मासं, पूर्वसेवां व्यधामहम् । देवीमूचे च सिद्धिं मे, विद्ध्यहोरात्रमध्यतः ॥ २७० ॥ तत्त्वया नातिदूरेऽत्र, स्थेयं गिरिगुहागृहे । विषोढकष्टयाऽद्यैकं, कष्टं सोढव्यमस्ति ते ॥ २७१ ॥ [ युग्मम् ] तदुभाकर्णि[1] चाकर्ण्य, सा विलासवती सती । उवाच तव पूर्यन्तामार्यपुत्र! मनोरथाः ॥ २७२ ॥ न्यस्यैतां स्थानके कृत्वा, मित्रमुत्तरसाधकम् । पूजयित्वाऽजितबलामूर्तिं च स्थण्डिलस्थिताम् ॥ २७३ ॥ होमकुण्डं प्रचण्डाग्नि, मण्डयित्वा च मण्डले । आत्मरक्षां दधलक्षहोममारब्धवानहम् ॥ २७४ ॥ [ युग्मम् ] तदा क्रमेण मत्तेभपिशाचीप्रलयाम्बुदैः । वेतालराक्षसीवृन्दैर्ममाऽभूवन्विभीषिकाः[2] ॥ २७५ ॥ ताः स्वर्गिगिरिणा वात्या, इवोच्चैर्भैरवारवाः । असह्या अप्यसह्यन्त, मया निश्चलताजुषा ॥ २७६ ॥ त्रियामायां[3] ततो यामशेषायां पवनो ववौ । होमे समापितप्राये, कुसुमामोदमेदुरः ॥ २७७ ॥ पुष्पगन्धाम्बुवृष्टिश्च, जज्ञे

१ उभाभ्यां कर्णाभ्यां साकर्ण्यवद्धृति उभाकर्णि । २ भीतयः । ३ रात्रौ ।

जयजयध्वनिः । प्रकाशश्च शरज्ज्योत्स्नासनाभिरभवत्परः ॥ ३७८ ॥ स्तूयमानाऽमरीवर्गैर्गीयमाना च किन्नरैः । राजमाना-ऽऽतपत्रेण, वीज्यमाना च चामरैः ॥ ३७९ ॥ पीयूषवृष्टिवद्दृष्टिमगलां मयि तन्वती । किलाऽजितबला देवी, ततः प्रत्यक्षतामिता ॥ ३८० ॥ [ युग्मम् ] होमशेषं समाप्याशु, प्रणनाम च तामहम् । देवी तु प्राह मां वत्स !, यच्छ मे यत्समीहितम् ॥ ३८१ ॥ व्यजिज्ञपमहं देवि !, किं तद्भूयोऽपि साऽऽवदत् । द्वात्रिंशल्लक्षणजुषो, नार्या नुर्वाथ जाङ्गलम् ॥ ३८२ ॥ मयोचे विदधे नाहं मातः !, स्त्रीघातपातकम् । मनसापि निशुम्भामि, नरं न च निरागसम् ॥ ३८३ ॥ द्वात्रिंशल्लक्षणोऽहं चेत्तदादिश यथेप्सितम् । किमनेन शरीरेण, रक्षितेन विनाशिना ? ॥ ३८४ ॥ एवमस्त्विति देव्याऽहमुक्तो रोमाञ्चमुद्वहन् । होमकुण्डे पतन्देव्या, स्वेनाऽह्नाय भुजे धृतः ॥ ३८५ ॥ अहमूचेऽथ मां मुञ्च, मुञ्च देवि ! महाबले ! । असारेण शरीरेण, यशः सारं यथार्जये ॥ ३८६ ॥ अथाऽजितबला देवी, प्रोचे विरम साहसात् । परीक्षितोऽसि धर्मे त्वं, निर्व्यूढोऽसि च वत्स ! यत् ॥ ३८७ ॥ अहो ! धैर्यमहो ! वीर्यमहो ! स्थैर्यमहो ! महः । अहो ! ते वत्स ! गाम्भीर्यमहो ! ते धर्मशीलता ॥ ३८८ ॥ तवाऽहं भक्तितः सत्त्वशक्तितः सुकृतोक्तितः । तुष्टास्मि सर्वथेत्युक्त्वा, ततो देवी तिरोदधे ॥ ३८९ ॥ [ विशेषकम् ] अथाऽश्रौषमहं व्योम्नि, भेरीभाङ्कारभासुरम् । किङ्किणीक्वणितं हस्तिबृंहितं हयह्रेषितम् ॥ ३९० ॥ यावत्पश्यामि विस्मेरदृगहं विस्मितो नभः । तावद्विद्याधरचमूमागच्छन्तीमलोकयम् ॥ ३९१ ॥ चत्वारः पुरतः कान्तिहृद्या विद्याधरास्ततः । आगत्य मां नमस्कृत्य, कृत्यमित्यभ्ययुः स्फुटम् ॥ ३९२ ॥ देव ! सद्गुणचित्ताढ्य !, वैताढ्यगिरिभूषणम् । समस्ति दक्षिणश्रेण्यां, पुरं गगनवल्लभम् ॥ ३९३ ॥ तत्र विद्याधराधीशः, पुरासीत्कनकध्वजः । अपुत्रः प्राप पञ्चत्वमेष दैवप्रपञ्चतः ॥ ३९४ ॥ ततो

राज्यप्रधानाङ्गः, स्वामिशोकविसंस्थुलान् । एत्याऽजितबला देवी, स्वप्नान्तरिदमादिशत् ॥ ३९५ ॥ सनत्कुमारनामाऽयं, यशोवर्मनृपात्मजः । मलयेऽस्ति स वः स्वामी, प्रदत्तरतुष्टया मया ॥ ३९६ ॥ देव्यादेशेन तद्देव! मुदिता वयमागताः । राज्यं वैद्याधरं चैतत्त्वाऽऽयाति स्वयंवरम् ॥ ३९७ ॥ अत्रान्तरे परेऽप्येत्य, मां नमन्ति स्म खेचराः । ऊचे विद्याधरै राज्याभिपेकाय च तैरहम् ॥३९८॥ तदा वामभुजादण्डस्पन्दमन्दमना अपि । अवोचं धैर्यमालम्ब्य, तानहं सुमना इव ॥३९९॥ भवत्वेवं पुनर्मित्रं, वसुभूतिः समेतु मे । सोऽथ तैः शब्दितो नोचे, नाऽलक्ष्यत च दीक्षितः ॥४००॥ मयाथ तं स्वयं द्रष्टुमुत्पेते सह खेचरैः । ततो दृष्टः स दृष्ट्वा तु, साक्षेपं खेचराङ्गगौ ॥४०१॥ खेटखेटा[1]! मदीयस्य, सुहृदो हृदयेश्वरीम् । हा! विलासवतीं हृत्वा, क्व प्रयास्यथ सम्प्रति? ॥४०२॥ तन्निशम्य मयाऽचिन्ति, किं केनापि हृता प्रिया? । निष्फलो मन्दभाग्यस्य, प्रयासस्तर्ह्यसौ मम ॥४०३॥ मया नीचेन भूत्वाथ, वसुभूतिरभाष्यत । स तु मां विटपेनाऽहन्मया घातोऽस्य वञ्चितः ॥४०४॥ आच्छिद्य विटपं हस्तात्पुनरप्येष भाषितः । प्रत्यभिज्ञाय मां विज्ञस्त्यक्त्वा संरम्भमब्रवीत् ॥४०५॥ देव! त्वया समारब्धे, विद्यासाधनकर्मणि । प्राप वैद्याधरं वृन्दं, मया तदवधीरितम् ॥४०६॥ क्षणार्धेन ततोऽश्रौषं, देव्याः क्रन्दितमुच्चकैः । सशङ्कस्तामपश्यं च, विद्याधरविमानगाम् ॥४०७॥ हहाऽऽर्यपुत्र! हा! तस्य, मित्र! त्रायस्व मामिति । निशम्य क्रन्दितं तस्या, गुहां गत्वा न्यभालयम् ॥४०८॥ तामदृष्ट्वानुधावंश्च, विमानं न व्यलोकयम् । तन्न वेद्मि हृता देवी, केनापि क्वापि तिष्ठति ॥४०९॥ ततोऽहमवदं मित्र!, वसुभूते! विषीद मा । ममाऽजितबला देवी, तुष्टास्ति

---

१ विद्याधराधमा !। २ स्तम्भेन ।

किमिदं ततः? ॥४१०॥ अथो मलयशैलस्य, शृङ्गे तत्रैव तस्थुषा। मयाऽऽत्मसेवकैः सार्धममन्त्र्यत नभश्चरैः ॥४११॥ तेऽप्यूचुः खेचराः स्वामिन्देवी येन हृता यदि। सोऽपि विद्याधरस्तन्न, भक्ष्यते नखिभिर्नखी ॥४१२॥ विग्रहीष्यामहे तं च, विज्ञायेति निगद्य माम्। शुद्ध्यै पवनगत्याख्यं, प्राहिण्वन्खेचरं च ते ॥४१३॥ [युग्मम्] त्रिभिर्दिनैरसौ सर्वं, विज्ञो विज्ञाय मूलतः। एत्य विज्ञपयाञ्चक्रेऽप्राकृतः प्रकृताञ्जलिः ॥४१४॥ स्वामिन् समस्ति वैताढ्योत्तरश्रेणिविभूषणम्। चक्रवालोत्तरपदं, पुरं श्रीरथनूपुरम् ॥४१५॥ देवी तत्पतिनाऽनङ्गरतिना खेचरेन्दुना। जानकीव दशास्येनाऽपहृता निहतात्मना ॥४१६॥ देवी तु तद्गृहोद्यानमध्ये विद्याधरीवृता। अस्त्यखण्डितचारित्रा, सहकारलतागृहे ॥४१७॥ मयाऽदृश्यत सा स्वामिगोत्रमन्त्राक्षरावलीम्। जपन्ती निजमोक्षाय, योगिनीव वियोगिनी ॥४१८॥ तन्निशम्य मया वक्त्रं, वसुभूतेर्व्यलोक्यत। स त्वभापत दूतोऽस्य, प्रेष्यते प्रथमं प्रभो! ॥४१९॥ अथ विद्याधराः प्राहुरस्मानेवादिश प्रभो!। यमदूता वयं तस्य, दूतेनाऽन्येन किं ततः? ॥४२०॥ मयाथ जगदे दूतप्रेषणं नयभूषणम्। पश्चादपि हि हे वीरा!, युष्माभिर्जेष्यते पुनः ॥४२१॥ मयैवं बोधयित्वा तान्शिक्षयित्वा च तत्क्षणात्। दूतः पवनगत्याख्यः, स एव प्रैगि विद्विषे ॥४२२॥ स गत्वाऽनङ्गरतये, कथयामास तत्तथा। यत्त्वां सनत्कुमाराख्यो, वक्ति विद्याधराधिपः ॥४२३॥ अज्ञानाद्यदसावस्मत्परोक्षे भवता हृता। तद्विलासवतीं मुञ्च, नैतद्धि पुरुषव्रतम् ॥४२४॥ अथाऽऽधिपत्यवैयात्यवशो नोज्झसि मे प्रियाम्। तत्कृतान्तनिशान्तस्य, प्रवेशे प्रगुणो भव ॥४२५॥ अथानङ्गरतिः प्राह, सोपहासं तदेव हि। मदीयशिक्षया पूर्वं, यद्दूतेन

१ रावणेन। २ गोत्र० नाम। ३ वैयात्य० निर्लज्जत्व। ४ निशान्त० गृह।

किलोदितम् ॥४२६॥ अब्रवीच्चेति कस्कोऽत्र, ब्रुवन्तं खेचराधमम्। गले गृह्णीत दूतत्वं, भूधरस्याऽऽचचार यः ॥४२७॥ तदाऽऽस्येनाऽथ पवनगतिः क्रुद्धोऽस्य दुर्धियः। अङ्घ्रिप्रहारतो दन्तान्पातयन्नुत्पपात खे ॥४२८॥ आगत्य सत्यमेतत्स, शशंस पुरतो मम। तमहं क्षयकालाब्द, इव भीमोऽभ्यषेणयम् ॥४२९॥ मां निशम्य समायान्तमनङ्गरतिना निजः। सेनानीः प्रैषि संख्यार्थं, दुर्मुखो नाम सम्मुखः ॥४३०॥ षण्डसिंहाभिधेनैष, पातितो मम पत्तिना। सदैन्यमनशत्सैन्यमस्य त्रस्तैणयूथवत् ॥४३१॥ मया द्वौ खेचरौ प्रेष्य, द्विड् प्रोक्तो गच्छ वा वनम्। नो वा मदीयशस्त्राग्रप्रदीपे शलभो भव ॥४३२॥ ताभ्यामित्युदितोऽनङ्गरतिर्भेरीमवादयत्। एकोऽप्यनेकधा तस्याः, सैनिकैः शुश्रुवे रवः ॥४३३॥ प्रथमं भयवित्रस्तलयनैः कातरैर्नरैः। सैन्यस्त्रीभिः पुनर्भाविवियोगस्रवदश्रुभिः ॥४३४॥ भटैः कण्टकितैः रूढस्फुटितव्रणकन्दरैः। स्वस्वामिसुकृतानृण्यसम्पदा सम्मदाकुलैः ॥४३५॥ द्रष्टुं प्रथमसङ्ग्रामं, धृतोत्कण्ठैः कुमारकैः। नियोगकारिभिः स्वस्वनियोगकरणोद्यतैः ॥४३६॥ [कलापकम्] अथ दुर्जनवाणीव, भेदिकास्तीक्ष्णभल्लयः। ढौक्यन्ते स्वर्णसन्नाहाः शुद्धौषधिगिरिप्रभाः ॥४३७॥ महिषध्वजजिह्वाभाः, प्रकव्यन्तेऽसिपष्टयः। सगुणा अपि वेश्यावद्वक्राश्चेष्वासवल्लयः ॥४३८॥ दुर्जनालापवन्मर्मोद्घट्टनप्रवराः शराः। इत्थमानीयमानेषु, युद्धोद्करणेष्वलम् ॥४३९॥ केनचिद्दयितास्पर्शरोधकं वर्म नाऽऽदधे। केनाप्यशब्दं स्थूलाश्रु, रुदत्यवमता वधूः ॥४४०॥ परेण विगलत्काञ्चीकङ्कणाश्रुजलाविला। एषोऽहमागतोऽस्मीति, वदताऽऽश्वासिता प्रिया ॥४४१॥ अन्येन गच्छता पीतोद्धृताम्बु जलभाजनम्। अर्पितं काचिदस्राम्भःपूर्णं चक्रेऽपिबन्त्यपि

१ खेचराधमम्। २ तदास्येन तत्कालेन। ३ रोमाञ्चितैः। ४ महिषध्वज० पम।

॥४४२॥ आपृच्छ्य गच्छति प्रेयस्यन्यया संज्ञया विना। अतुच्छमूर्च्छयाऽदर्शि, स्वानुरागस्य चेष्टितम् ॥४४३॥ अनङ्गरतिसैन्यस्य, वृत्तो वृत्तान्त ईदृशः। विद्याधराभ्यामागत्य, ताभ्यां मम निवेदितः ॥४४४॥ [अष्टभिः कुलकम्] अथ भेरी ममाऽऽदेशात्ताड्यमाना जगर्ज सा। स्फूर्जथुप्रलयाम्भोदयमहुंकारसोदरम् ॥४४५॥ ततोऽङ्गरागताम्बूलमाल्यदानादिसोद्यमम्। पीयमानासवं मान्यमानामानमहाभटम् ॥४४६॥ सज्ज्यमानविमानं च, वर्ण्यमानविपक्षकम्। उदस्यमानकेतूच्चैर्दीयमानपताकिकम् ॥४४७॥ निनदत्किङ्किणीजालमालं विचरचामरम्। रच्यमानमहाव्यूहं, मण्ड्यमानातपत्रकम् ॥४४८॥ उद्घुष्टजयशब्दं च, गीयमानोरुमङ्गलम्। भवत्पुण्याहनिर्घोषं, सन्नद्धं च बलं मम ॥४४९॥ [कलापकम्] उत्पेतुः खेचराः पेतुर्विमानानि समन्ततः। निवेशितो मया पद्मव्यूहश्च कटके निजे ॥४५०॥ अग्रतश्चण्डसिंहोऽभूद्वामे समरसेनकः। देवौपधो दक्षिणेन, मतङ्गः पश्चिमेन च ॥४५१॥ मध्ये पिङ्गलगान्धारौ, स्थितोऽहं तु विहायसि। वायुवेगादिभिर्विद्याधरैर्युक्तो विमानगः ॥४५२॥ अथासन्ने रिपोः सैन्ये, पृष्टोऽमितगतिर्मया। नामानि शकटव्यूहेऽरिभूपानां शशंस सः ॥४५३॥ तुण्डे काञ्चनदंष्ट्रोऽयमशोको वामपार्श्वगः। दक्षिणे कालजिह्वाख्यो, विरूपो मध्यतः स्थितः ॥४५४॥ पृष्ठेऽनङ्गरतिर्देव, दैवेन प्रत्यदुर्मतिः। इत्थं विरोधिनामानि, ममाऽऽख्याति स खेचरः ॥४५५॥ अथ जज्ञे रणं चण्डसिंहकाञ्चनदंष्ट्रयोः। नदत्सङ्ग्रामवादित्रं, वन्दिघोषितपूर्वजम् ॥४५६॥ वलगद्विद्याधरं मुच्यमानक्ष्वेडाभयङ्करम्। पतन्ति भल्लयो यत्र, खलर्द्धिवदसौख्यदाः ॥४५७॥ नाराचनिचयाः, कालरात्रिनेत्रवदर्त्तिदाः। यमसैरिभशृङ्गाभा, गदा हृतमदा द्विषाम् ॥४५८॥

---

१ भूतः। २ स्फूर्जथु० वज्रध्वनि। ३ आसव० मदिरा। ४ क्ष्वेडा० सिंहनादवत् शूरनाद। ५ नाराच० बाण। ६ कालरात्रि० प्रलयरात्रि।

उत्पातमण्डलानीव, च्छत्राण्यर्धेन्दुभेदतः। बाधाविधायिनो यत्र, मुद्गरा वज्रसोदराः ॥४५९॥ यत्र शोणितकुल्याऽभूच्छि-
र:कमलमालिनी । पतन्ति यत्र शस्त्राणि, कबन्धानि च पृष्ठतः ॥४६०॥ [ अष्टभिः कुलकम् ] अथ काञ्चनदंष्ट्रेण, चण्ड-
सिंहोऽसिना हतः । भाले तदक्षराणीव, लिखितानि निरीक्षितुम् ॥४६१॥ हतेऽत्र भग्ने तत्सैन्ये, रिपुसैन्ये प्रधाविते । अहं
समरसेनेन, सहाऽस्याऽभिमुखोऽभवम् ॥४६२॥ गगने सर्वतश्छन्ने, शरैर्जलधरैरिव। शस्त्रास्फालस्फुलिङ्गौघैस्तदा विद्युल्लता-
यितम् ॥४६३॥ तदा हंसैरिवोड्डीनं, विमानधवलध्वजैः । किं च कीलालपूरेण, तटिन्यजनि दुस्तरा ॥४६४॥ एवं भवति
सङ्ग्रामे, दृष्टोऽनङ्गरतिर्मया। इत्युक्तश्चावयोर्वैरं, किमेभिर्निहतैरतः॥४६५॥ स प्राह कीदृशं वैरं, हन्त! सिंहशृगालयोः?।
मयोचे क्रिययैवेदं, ज्ञातव्यं किं बहूदितैः ॥४६६॥ युयुत्सुरेष मायास्त्रैर्मयोचे युध्यतां बलात् । तत्प्रपद्य हतः शक्त्या,
तेनाहं पतितो भुवि ॥४६७॥ ततः सरोषमुत्थाय, मयापि गदया हतः । स विभिन्नशिरस्त्राणः, पपात पृथिवीतले ॥४६८॥
उत्थापितो मयाऽऽश्वास्य, स नियुद्धेऽप्यढौकत। आवां युध्यावहे बाहूबाहव्यथ तलातलि ॥४६९॥ कथंचित्स मया जिग्ये,
तन्न जानामि किंचन । सिद्धविद्याधरैः किंतु, ममाऽघोषि जयध्वनिः ॥४७०॥ जज्ञे कुसुमवृष्टिश्च, जयतूर्यं समाहतम् ।
निःस्पृहः स तु सन्त्यज्य, राज्यं यातस्तपोवनम् ॥४७१॥ ततः पुरे प्रविष्टोऽहं, विद्याधरचमूवृतः । दृष्टा देव्यथ देहेन,
द्वितीयेन्दुकलातुला ॥४७२॥ सर्वविद्याधरेन्द्रैः सा, प्रणता देवता यथा । कृतो राज्याभिषेको मे, श्रेणिद्वितयखेचरैः
॥४७३॥ कियत्यपि गते काले, गजेन्द्रस्वप्नसूचितम्। देव्यसूत सुतं राजलक्षणैरखिलैर्युतम् ॥४७४॥ तुष्टाऽजितबला देवी-

१ कीलाल० रुधिर । २ शिरस्त्राण० मस्तकरक्षार्थकपचविशेष ।

ददौ राज्यं सुतं च मे। तेनाऽजितबलः पुत्रो, विदधेऽभिधया मया॥ ४७५॥ तत्र प्राप्ते कुमारत्वं, मया पित्रोरथ स्मृतम्। पर्यालोच्य समं देव्या, खेचरेन्द्रैश्च तैर्मतः॥ ४७६॥ दुर्गपालं विधायाऽत्र, नृपं देवौषधाभिधम्। दिव्यं विमानमारूढः, समं देव्या सुतेन च॥ ४७७॥ श्वेतवीमागतः पित्रोर्ज्ञापयामासिवानहम्। निजमागमनं ताभ्यामभ्युद्गम्य प्रवेशितः॥ ४७८॥ [ विशेषकम् ] महामहोत्सवस्तत्र, स कोपि समभूत्तदा। कवीनामपि यः कामं, वचनस्य न गोचरः॥ ४७९॥ कालेन कतिथेनाऽपि, पित्रोः पञ्चत्वमीयुषोः। श्रीकान्तिनिलयाभिख्यं, राज्ये न्यास्थं निजानुजम्॥ ४८०॥ स्वयं गतस्तु वैताढ्ये, नगरे रथनूपुरे। कुर्वे तत्रोत्तरश्रेणिराज्यं प्राज्यं स्वपुण्यतः॥४८१॥ अथ चित्राङ्गदो नाम चारणश्रमणः प्रभुः। भव्याम्बुजविबोधैकवासरः समवासरत्॥ ४८२॥ तं चतुर्ज्ञानिनं श्रुत्वा, वाह्योद्याने समागतम्। निर्गतो वन्दनायाऽहं, देवीसुतयुतस्ततः॥ ४८३॥ तं प्रणम्याऽथ लब्धाशीरुपाविक्षमहं पुरः। उक्तो भगवता भो भो, विद्याधरधराधिप!॥४८४॥ पूर्वपुण्यफलं मत्वा, पुनः पुण्यं समर्जय। मयोचे तदुपायं तद्वद सद्यः प्रसद्य मे॥ ४८५॥ गुरुणाऽऽदेशितं धर्मं, सम्यक्त्वाणुव्रतात्मकम्। अस्माभिरात्मसात्कृत्वा, पृष्टोऽथ भगवानिति॥ ४८६॥ भगवन्किं पुरा कर्म, मर्माविद्विदधे मया। प्रियावियोगसन्तापानलेन प्लोषितोऽस्मि यत्॥ ४८७॥ गुरुः प्रोवाच भरतश्रेष्ठे काम्पील्यनामनि। पुरे त्वं रामगुप्ताख्यश्चन्द्रगुप्तनृपात्मजः॥४८८॥ इयं तव प्रियतमा, तारापीडनृपात्मजा। नाम्ना हारप्रभा हारप्रभातारदद्युतिः॥४८९॥ अन्यदा सुरभौ[1] पुष्पसमूहसुरभौ युवाम्। ययथुर्भवनोद्याने, पुष्पावचयलीलया॥ ४९०॥ क्रीडावाप्यां च मज्जित्वा, सुचिरं सारसाविव। तत्तीरसंस्थिते दृष्टौ, निविष्टौ

---

१ वसन्तर्तौ।

कदलीगृहे ॥४९१॥ तत्कारिकोपनीतेऽथ, कुङ्कुमस्य विलेपने । युवाभ्यामनुरागिभ्यामङ्गरागः कृतो मिथः ॥४९२॥ अथ तत्राऽऽगतं हंसमिथुनं पृथुनर्मणा । भवता जगृहे हंसी, कुङ्कुमाक्तेन पणिना ॥४९३॥ हंसस्तव गृहिण्या तु, रञ्जितौ कुङ्कुमेन तौ । अन्योन्यं विरहक्लान्तौ, मुक्तौ च स्तोकवेलया ॥४९४॥ हंसेन चक्रवाकीति, हंस्या चक्र इति भ्रमात् । परस्परपरित्यक्तौ, दर्शनेऽपि न सङ्गतौ ॥४९५॥ ततो व्यवसितौ मृत्यै, गृहवाप्याममज्जताम् । स्थितौ निरुद्धनिःश्वासौ, वेलां च महतीमपि ॥४९६॥ असूनां दुस्त्यजत्वेन, भावित्वेन च सङ्गतेः । कर्मणोऽचिन्त्यशक्तित्वाद्धौतकुङ्कुमवर्णकौ ॥४९७॥ ततः कण्ठगतप्राणावुन्मग्नौ दीर्घिकाजलात् । स्वयं च प्रत्यभिज्ञाय, मिलितौ कलितौ मुदा ॥४९८॥ [षड्भिः कुलकम्] अस्माद्व्यतिकरात्कर्म, युवाभ्यां यदबध्यत । तदीयपरिणामस्य, दुस्तरो विस्तरो ह्यसौ ॥४९९॥ ततोऽचिन्ति मयाऽल्पस्य, निदानस्य महानहो! । विपाको दुस्सहस्तत्किं, प्रयासेनाऽमुनाऽधुना ॥५००॥ ततो नत्वा मया प्रोचे, भगवन्कुर्वनुग्रहम् । उत्तारय भवाटव्या, देहि श्रामण्यमुज्ज्वलम् ॥५०१॥ अनुज्ञातस्ततस्तेन, दत्त्वा राज्यं स्वसूनवे । समं मित्रेण देव्या च, श्रामण्यं प्रत्यपादिषि ॥५०२॥ इदं मम व्रतप्राप्तौ, तद्विशेषनिबन्धनम् । प्रोचे जयकुमारेण, सुन्दरं भगवन्नदः ॥५०३॥ तद्धन्योऽसि प्रभो! किं तु, कथमुत्तीर्यते जनैः । असौ भवाटवी तस्या, उत्तीर्णैः क्व च गम्यते? ॥५०४॥ गुरुः प्राहाऽटवी द्वेधा, द्रव्यभावविभेदतः । तदुदाहरणं द्रव्याटव्या मे वादिनः शृणु ॥५०५॥ कुतश्चिन्नगरात्कश्चित्सार्थवाहः पुरान्तरम् । यियासुर्घोषयत्येवमागच्छत यियासवः ॥५०६॥ निजादेशकरं मर्त्यं, प्रापयामीहितं पुरम् । तच्चाकर्ण्य सहाऽनेन, प्रचेलुः

१ तत्कारिका० उद्यानपालिका । २ अङ्गलेप । ३ विस्तृतक्रीडया । ४ रञ्जितौ । ५ वर्णक० विलेपन ।

सार्थिका घनाः ॥५०७॥ तेषां च कथयत्येपोऽध्वनो दोषान्गुणानपि । द्वौ मार्गौ गच्छतामत्र, ऋजुराद्यः परोऽनृजुः ॥५०८॥ योऽनृजुर्गम्यते तेन, कालेन बहुना सुखात् । पर्यन्ते चावतीर्यर्जौ, गम्यते पुरमीप्सितम् ॥ ५०९ ॥ ऋजौ तु गम्यते दुःखात्प्राप्यते तु पुरं लघु । निःसत्त्वानां यतोऽतीव, विषमः सङ्कटश्च सः ॥ ५१० ॥ यत्तत्र द्वार एव स्तो, व्याघ्रसिंहौ भयावहौ । तौ सत्त्वेन परिध्वस्याऽवतर्यं तत्र वर्त्मनि ॥ ५११ ॥ तत्रापि चानुवर्तेते, तावीप्सितपुरावधि । हतश्चोन्मार्गगं जन्तुं, न तु प्रभवतः पथि ॥ ५१२ ॥ वृक्षाश्च तत्र सन्त्येके, पत्रपुष्पफलान्विताः । अन्ये शटितपत्रास्तु, फलपुष्पविवर्जिताः ॥५१३॥ तत्राऽऽदिमानां छायापि, मृत्यै भोगे तु का कथा ?। ततस्तेषु न विश्रम्यं, विश्रम्यमपरेषु तु ॥५१४॥ तटस्थास्तस्य मार्गस्य, रम्यवेषधरा नराः । वदन्त्याहूय मार्गेणाऽनेनाऽस्मिन्गम्यते पुरे ॥ ५१५ ॥ न श्रोतव्यं वचस्तेषां, न मोक्तव्याः सुसार्थिकाः । एकस्य नियमेन स्याद्भयं नात्र विचारणा ॥ ५१६ ॥ दवः स्तोकोऽपि निर्वाप्यो, दहत्यपरथा त्वयम् । उच्चोऽद्रिरुपयुक्तैश्च, लङ्घ्यो मृत्युरलङ्घने ॥ ५१७ ॥ उल्लङ्घ्या वंशजाली च, महोपद्रवकारिणी । मार्गेऽस्ति च लघुर्गर्तस्तस्य पार्श्वे द्विजोऽस्ति च ॥ ५१८ ॥ मनोरथाभिधः सैष, वक्ति पूरय गर्तकम् । न श्रोतव्यं वचस्तस्य, गन्तव्यमवमत्य च ॥ ५१९ ॥ पूर्यमाणो हि गर्तोऽयं, भवत्यतितरां महान् । मार्गाच्च भ्रंशयत्येव, सर्वस्वं स्रंसयत्यपि ॥ ५२० ॥ फलानि पञ्चधा सन्ति, रम्याणि सुखदानि च । किंपाकानां न दृश्यानि, न भोक्तव्यानि तानि च ॥ ५२१ ॥ तत्र द्वाविंशतिर्घोराः, पिशाचाश्च क्षणे क्षणे । अभिद्रवन्ति ते नैव, गणनीया मनागपि ॥ ५२२ ॥ दुर्लभे विरसे चान्नपाने भाव्यं न खेदिना । उत्प्रयाणं न

१ प्रमादम् ।

कर्तव्यं, निशायामह्नयेऽपि हि ॥५२३॥ इत्थं व्रजद्भिः सा शीघ्रं, लङ्घ्यते च महाटवी । दौर्गत्यादिविहीनं च, प्राप्यते
वाञ्छितं पुरम् ॥५२४॥ न क्लेशोपद्रवाः केऽपि, जायन्तेऽत्र समीयुषाम् । दृष्टान्तोऽयं तवाऽऽख्यातोऽधुना तूपनयं शृणु
॥५२५॥ सार्थवाहो जिनाधीशो, घोषणा धर्मदेशना । ज्ञेया भावाटवी सोऽयं, चतुर्गतिमयो भवः ॥५२६॥ यतिधर्मं
ऋजुः पन्थाः, श्राद्धधर्मोऽनृजुः पुनः । सोऽप्यन्ते साधुधर्मेण, युतः शिवपदप्रदः ॥५२७॥ भावतः प्रतिपन्ने हि, यतिधर्मे
गतिः शिवे । जन्मादिक्लेशहीनं च, ज्ञेयमिष्टपुरं शिवम् ॥५२८॥ व्याघ्रसिंहौ तु विज्ञेयौ, रागद्वेषौ यदेतयोः । भयान्न
प्रतिपद्यन्ते, श्रामण्यं शिवसाधकम् ॥५२९॥ यावत्केवलमेतौ च, नरानात्तव्रतानपि । न मुञ्चतः पथस्थांस्तु, नैवाऽभिभ-
वतः क्वचित् ॥५३०॥ रम्यवृक्षाः पुनः शय्याः, स्त्रीषण्ढपशुसङ्गताः । ता एव निरवद्यास्तु, शुष्कद्रुमसमा मताः ॥५३१॥
तटस्थाह्वायका ज्ञेया, ये विरुद्धोपदेशकाः । धृताष्टादशशीलाङ्गसहस्राः स्युः सुसार्थिकाः ॥५३२॥ ज्ञेयो दवानलः क्रोधो,
मानस्तूच्चो महीधरः । माया वंशकुडङ्गी[1] च, लोभो गर्त इतीरितः ॥५३३॥ ज्ञेय इच्छाविशेषस्तु, मनोरथ इति द्विजः ।
पूर्यमाणश्च गर्तोऽयं, लाभाल्लोभः प्रवर्धते ॥५३४॥ किंपाकफलतुल्यास्तु, विज्ञेया विषया अमी । परीषहाः पिशाचास्तु,
पानान्नं चैषणीयकम् ॥५३५॥ प्रयाणमप्रसादश्च, रात्रियामयुगेऽपि यः । इत्थं भावाटवी लङ्घ्या, प्राप्यते च शिवं पुरम्
॥५३६॥ तस्माज्जयकुमारोऽथ, गृहीतश्रावकव्रतः । प्रविष्टो नगरं पित्रा, यौवराज्येऽभिषेचितः ॥५३७॥ नित्यं सनत्कु-
मारं च, गुरुमेष न्यषेवत । मासकल्पे तु संपूर्णे, विजहाराऽन्यतः प्रभुः ॥५३८॥ इतश्च नरकोद्वृत्तो, धनश्रीजीवनारकः ।

1 वंशजाली ।

भ्रान्त्वा सुबहु संसारं, विधायाऽकामनिर्जराम् ॥५३९॥ जज्ञे जयकुमारस्य, समानोदर्यभावतः[1] । पितृभ्यां विजयो नाम, तस्य चापि प्रतिष्ठितम् ॥५४०॥ [ युग्मम् ] प्राप्तः कुमारभावं स, जयस्य त्वतिवल्लभः । प्राच्यकर्मानुभावेन, जयस्त्वस्य न वल्लभः ॥५४१॥ अन्यदा दैवयोगेन, पितर्युपरते सति । राज्ये जयकुमारोऽथ, न्यस्तः सामन्तमन्त्रिभिः ॥५४२॥ विजयो जयराजस्योपरि विद्वेषमावहन् । पलायमान आदाय, निबद्धो राज्यचिन्तकैः ॥५४३॥ जज्ञे शोकश्च तन्मातुरास्थानस्थेऽन्यदा नृपे। कृताञ्जलिः समागत्य, वेत्रिणीति व्यजिज्ञपत् ॥५४४॥ द्वारि त्वज्जननी देव!, तिष्ठत्यथ ससम्भ्रमम् । तामेत्य नृपतिर्नत्वा, प्रोचेऽहं किं न शब्दितः? ॥५४५॥ अत्र चाऽऽगमने किं वा, कियद्वाऽम्ब! निबन्धनम्? । ततः सा रुदती प्राह, देहि मे पुत्रजीविकाम् ॥५४६॥ ततो जयनृपः प्राह, कुमारस्य कुतो भयम्? । तयोचे स्थितिरेवैषा, यद्विपक्षो नियन्त्र्यते ॥५४७॥ नृपतिः प्राह यद्येवं, कः सपक्षस्ततो मम? । उक्त्वेत्यानीय तामन्तरासनेऽथ न्यवेशयत् ॥५४८॥ कुमारानयने प्रेष्य, मन्त्रिणोऽथ व्यचिन्तयत् । धिग्राज्यमीदृशं मातृबन्धुवर्गस्य दुःखदम् ॥५४९॥ तत्किमेतेन संक्लेशाऽऽयासमात्रफलेन मे । तद्दत्त्वेदं कुमाराय, मातृशोकं हराम्यहम् ॥५५०॥ तदा वधपरीणामं, दधत्तं प्रति तल्लघुः । आनीतो मन्त्रिभी राज्ञा, भद्रपीठे निवेशितः ॥५५१॥ अभिषिक्तः स्वयं राज्ये, समं सामन्तमन्त्रिभिः । उद्घुष्टं च समस्तानां, भवतामेष भूपतिः ॥५५२॥ ततः स्वयं ससामन्तमन्त्रिणा च प्रणम्य तम् । प्रोचेऽम्ब! विगतः शोकस्तव सा त्वाह विस्मिता ॥५५३॥ यत्कृते विदधत्यन्ये, विरोधं बन्धुभिः सह । लीलया तत्त्यजन्राज्यं, तन्महापुरुषो भवान् ॥५५४॥ न तादृश-

[1] समानोदर्य० भ्रातृ ।

उवाच जयभूपालः, पालयिष्यत्यसौ
स्तव भ्राता, न्यायधर्मपरस्ततः । राज्यं वत्स! विधेहि त्वं, युवराजमिमं कुरु ॥५५५॥ उवाच जयभूपालः, पालयिष्यत्यसौ
प्रजाः । कृतराज्याभिषेकस्य, यौवराज्यं न युज्यते ॥५५६॥ मम चित्तं विरक्तं च, तत्प्रसादं विधेहि मे । येनाऽऽददामि प्रव्र-
ज्यामित्युक्त्वा न्यपतत्पदोः ॥५५७॥ तयोचेऽथ त्वया सार्धं, ममापि व्रतमस्तु तत् । स प्राह युज्यते ह्येतत्प्रकृत्या निर्गुणे
भवे ॥५५८॥ बन्धवेऽथ ददौ शिक्षां, पालनीयाः प्रजाः सुखम् । यशः पोष्यं सुलब्धश्च, विधेयो मानुषो भवः ॥५५९॥
उक्ताश्च मन्त्रिणस्तेन, युष्माभिः कुलसम्भवैः । प्रजाप्रजापयोरिष्टं, चिन्तनीयं सदा हितैः ॥५६०॥ तदा सनत्कुमारश्च,
पुनः प्रभुरुपागतः । विज्ञप्तं च नृपायेदं, सिद्धार्थेन द्विजन्मना ॥५६१॥ नष्टकष्टोऽथ ससाऽष्ट, पदान्यभिमुखो व्रजन् ।
गुरुं ननाम तत्रस्थः, प्रचचाल च तं प्रति ॥५६२॥ विज्ञप्तो मन्त्रिसामन्तैर्जज्ञे देव! तवेहितम् । प्रव्रज्या तदिहैवास्तु, मुहूर्ते
सुन्दरे प्रभोः ॥५६३॥ प्रतिश्रुत्येति भूपालो, ययौ गुरुपदान्तिके । मन्त्रिभिस्तु महादानं, दापितं नृपतेर्नवात् ॥५६४॥
ततः समस्तचैत्येषु, पूजायाः समनन्तरम् । रथारूढश्चचालैष, राजलोकेन संयुतः ॥५६५॥ दानं ददानो दीनानां, शस्यमा-
नश्च नागरैः । अहो! अस्योत्तमं वृत्तं, कीदृक्षमिति वादिभिः ॥५६६॥ काकन्द्यनाथा कः कालो, व्रतस्याऽस्येति साश्रुभिः ।
नागरीभिर्वदन्तीभिः, कथञ्चिदपि वीक्षितः ॥५६७॥ जनन्या च प्रधानैश्च, सार्धमुद्यानमागतः । गुरोः सनत्कुमारस्य,
समीपे व्रतमाददे ॥५६८॥ [कलापकम्] वन्दित्वाऽथ निरानन्दाः, काकन्दीं विविशुर्जनाः । मासकल्पे व्यतीते च, भग-
वानन्यतो ययौ ॥५६९॥ ततोऽधीतश्रुतः शुद्धं, श्रामण्यमनुपालयन् । निःसङ्गो विजहारैष, गुरुणा करुणामयः ॥५७०॥
कियत्यपि गते काले, विजयोऽथ दधौ हृदि । अहतोऽयं व्रती जज्ञे, हन्यते यदि तद्वरम् ॥५७१॥ ध्यात्वेति प्रेषयामास,

स्वप्रत्ययितपूरुषान्। तं हन्तुं ते तु दध्युः किं, वधोऽयमनिबन्धनः? ॥५७२॥ अहत्वा तं हतं तस्याऽऽचख्युरेष तुतोष तु । अन्यदा जयराजर्षिर्गुरुमाह कृताञ्जलिः ॥५७३॥ बोधः कस्यापि मां वीक्ष्य, स्यात्काकन्दीं व्रजाम्यतः । गुरुणाऽनुमतो भाव्याकृष्टस्तत्राऽऽपपात सः ॥५७४॥ तच्छ्रुत्वा नृपतिः क्रुद्धो, घातकानवदच्च रे! । मद्वैरी न हतः सैष, यदस्ति वहिरागतः ॥५७५॥ तैरूचे गतकेशोऽयमस्माभिर्नोपलक्षितः । पृष्टोऽन्यपार्श्वे भ्रान्त्या तत्कोप्यन्यो निहतो भवेत् ॥५७६॥ अधुनाऽपि विनष्टं किं?, हनिष्यामस्तवाऽहितम् । प्रतिश्राव्येति तानेष, तं नन्तुं कैतवादगात् ॥५७७॥ तद्दत्तधर्मलाभाशीर्निषसाद तदग्रतः । मुनिना देशितो धर्मो, न त्वस्य मनसि स्थितः ॥५७८॥ मुनिरूचे पुना राजन्समग्रसुखभूरुहाम् । धर्म एव दृढं मूलमवलम्बस्व तं ततः ॥५७९॥ मैत्रीं सत्त्वगणे धेहि, दानं देहि दयां कुरु । नृपो दध्यौ भयान्मृत्योरिदं वक्त्येष मेऽग्रतः ॥५८०॥ क्व पुनर्यास्यति? ध्यात्वा, प्रोवाच विजयो नृपः । आरभ्य त्वद्व्रतात् सर्वमिदं हि विदधाम्यहम् ॥५८१॥ भव्यमेतन्मुनिप्रोक्ते, पर्युपास्य समुत्थितः । बद्धबुद्धिर्वधे तस्थौ, स्वसौधे सकलं दिनम् ॥५८२॥ मृगाङ्केऽस्तं गते रात्रौ, पूर्वसङ्केतितैः सह । गतश्च विजयस्तत्र, दृष्टश्च मुनिपुङ्गवः ॥५८३॥ तं वीक्ष्याऽतीवतीव्रकुत्कृष्टरिष्टिरसौ जवात् । पुराकृतनिदानोत्थकर्मबन्धानुभावतः ॥५८४॥ एकेनैव प्रहारेणाऽस्योत्तमाङ्गमपातयत् । तदीयवधनिर्माणादात्मानमिव दुर्गतौ ॥५८५॥ [ युग्मम् ] अहो! विजय एवैष, मत्वेति श्रमणाः परे । चित्रं चरित्रं जन्तूनां, चिन्तयन्तोऽन्यतो ययुः ॥५८६॥ देहे निर्ममतावशेन मनसः स्थैर्येण धृत्या धृतेर्मोक्षासन्नतया समाहिततया सद्ध्यानसन्धानधीः । तेनाऽयं तरवारिणा विनिहतो भव्यानतस्त्वानतस्वर्गेऽभूद् द्विनवाम्बुराशिगणनायुः स्वर्गिणामग्रणीः ॥५८७॥ इतरोऽपि

महाव्याधिवेदनाग्रस्तविग्रहः । मृत्वा दशजलध्यायुस्तुर्योर्व्यां नारकोऽभवत् ॥५८८॥ इति श्रीहरिभद्रोक्त्या, प्रद्युम्नाचा-
र्यगुम्फिते । समरादित्यसंक्षेपे, पञ्चमोऽयं भवोऽजनि ॥५८९॥

## [ अथ षष्ठो भवः ]

इतश्च भरतेऽत्रैव, माकन्दी नामतः पुरी । माकन्दी[1] भूविशेषेण, यत्र सर्वो वनव्रजः ॥ १ ॥ समदप्रमदालीलागतिक्व-
णितनूपुरैः । यत्र हंसा विडम्ब्यन्ते, क्रीडावापीगता अपि ॥ २ ॥ कालमेघो नृपस्तत्र, कालमेघ इवाऽपरः । सस्यवृद्धिवि-
धातापि, जलपङ्काश्रयो न यः ॥ ३ ॥ यदसेर्जलदश्यामात्प्रतापाग्निः समुत्थितः । ततः स्पष्टमदीपिष्ट, शत्रुस्त्रीनेत्रवारिभिः
॥ ४ ॥ तत्र धर्मार्जने लुब्धः, परलोके च भीरुकः । बन्धुदत्तोचितः श्रेष्ठी, बन्धुदत्तोऽस्ति विश्रुतः ॥ ५ ॥ तेन प्रावृडिवा-
ब्देन, चन्द्रेणेव शरन्निशा । चूतेनेव वसन्तश्रीर्नगरी सा व्यभूष्यत ॥ ६ ॥ तस्य हारप्रभा नाम्ना, प्रिया हारप्रभाऽस्ति च ।
दधानाऽन्तर्गुणं दोषवर्जिता विशदाशया ॥७॥ तस्य चाऽभग्नधर्मार्थप्रसरं सममेतया । इन्द्रियार्थभवं सौख्यं, भजतो यान्ति
वासराः ॥८॥ अथ हारप्रभाकुक्षौ, जयजीवो दिवश्च्युतः । अवतीर्णो महालक्ष्मीस्वप्नसूचितवैभवः ॥९॥ दयिताय तयाऽऽ-
चख्ये, स्वप्नस्तेन व्यचार्यत । असमश्रीनिवासस्ते प्रिये ! पुत्रो भविष्यति ॥१०॥ कियत्यपि गते काले, समये प्रसवस्य सा ।
सुषुवे दारकं पुण्यधारकं सुखकारकम् ॥ ११ ॥ वर्धापिकां च संतोष्य, कृत्वा वर्धापनादिकम् । चक्रे धरण इत्यस्य, नाम

१ आम्रवान् । २ समयवर्षकमेघः । ३ नृपपक्षे गुणः । ४ राजपक्षे-जल-जाड्य पङ्क-पापं तयोराश्रयो नेत्यर्थः ।

पैतामहं पिता ॥ १२ ॥ समये च कलाचार्यस्याऽर्पितः सकलाः कलाः । पदानुसारिप्रज्ञोऽसौ, जग्राह लसदाग्रहः ॥ १३ ॥ इतश्च नरकोद्वृत्तः, सोऽयं विजयनारकः । भवं भ्रान्त्वा चिरं चक्रे, किञ्चिन्मर्त्यभवोचितम् ॥ १४ ॥ ततस्तत्रैव माकन्द्यां, कार्त्तिकश्रेष्ठिमन्दिरे । जयाभिधानजायायां सुतात्वेनोदपद्यत ॥ १५ ॥ लक्ष्मीरिति कृताभिख्या, यौवनं प्राप सा क्रमात् । भवितव्यवशात्तेन व्यूढा च धरणेन सा ॥ १६ ॥ अमुष्यां धरणस्यास्ति, प्रीतिरप्रीतिरत्र तु । तस्या ध्यायति सा चैवं, वैरी मे सङ्गतः कुतः? ॥१७॥ लक्ष्मीलक्ष्मीयते तस्य, धरणस्य मनस्यलम्। उद्वेगकारी तस्याऽस्तु, धरणो धरणायते ॥१८॥ ततो विडम्बनाप्रायं तयोर्वैषयिकं सुखम् । भुञ्जानयोर्व्यतीयाय, समयस्तु कियानपि ॥ १९ ॥ यथाकालमथामुष्यां, पुरि शृङ्गारजीवितम् । प्रावर्तत वसन्तर्तुर्नर्तयन्कामिनां मनः ॥ २० ॥ यत्राऽऽम्राः पल्लवाताम्रा, मञ्जरीजालमालिताः । त्राणपूर्णा बभुः पुष्पबाणबाणधयोऽरुणाः[1] ॥ २१ ॥ एवंविधे वसन्तर्तौ, धरणो रथमास्थितः । गन्तुं प्रावर्ततोद्यानं, नाम्ना मलयसुन्दरम् ॥ २२ ॥ पुरगोपुरमायाते, तत्र रन्त्वा समागतः । पञ्चनन्दिसुतो देवनन्दिनामा रथस्थितः ॥ २३ ॥ तयोर्निरवकाशत्वाद्, द्वयोरपि बलिष्ठयोः[2] । शक्यते न पुरस्कर्तुं, पश्चात्कर्तुं न कश्चन ॥ २४ ॥ रथस्थेन ततः प्रोक्तो, धरणो देवनन्दिना । पश्चात्कुरु रथं तावद्यावद्विशति मे रथः ॥ २५ ॥ हसित्वा धरणेनापि, देवनन्दीति भाषितः । पश्चात्कुरु रथं तावद्यावन्निर्याति मे रथः ॥ २६ ॥ रुद्धप्रवेशनिर्याणौ, ज्ञातावेतौ महत्तमैः । तत्प्रेषितैश्चतुर्भिश्च, प्रधानैरिति बोधितौ ॥२७॥ को गर्वो भवतोरेष, पितृवित्तेन वित्तयोः? । केन किं दानधर्माढ्यं, विदधे निजवित्ततः ? ॥ २८ ॥ इत्युक्ते मुदितो देवनन्दी

---

१ पुष्पबाणो मदनस्तस्य बाणा धीयन्ते यत्र ते पुष्पबाणबाणधयस्तूणीरा इत्यर्थः । २ प्रसिद्धयोः ।

भव्यमिति ब्रुवन् । लज्जितो धरणस्त्वेतन्न सुन्दरमिति ब्रुवन् ॥ २९ ॥ ऊचे च भवतां वाक्यादात्मानं गर्भरूपवत् । सन्येऽहमर्जयिष्यामि, ततो द्रव्यं निजैर्भुजैः ॥ ३० ॥ यः कश्चिदधिको नौ, स्यान्निर्यातु प्रविशत्वथ । रथस्तस्य त्रयोदश्यामस्यामेष्यति वत्सरे ॥ ३१ ॥ अलं तेऽभिनिवेशेन, प्रधानैरिति भाषिते । धरणः प्राह नैव स्यादन्यथा मम निर्वृतिः ॥ ३२ ॥ पौराणां सम्मतेऽत्रार्थे, शब्दितौ जनकौ तयोः । उक्तौ सशपथं चैतौ, कार्या संवाहना न यत् ॥ ३३ ॥ धरणो देवनन्दी चाऽऽहूतावथ महत्तमैः । दीनाराः पञ्च लक्षाणि, नीवी प्रत्येकमर्पिता ॥ ३४ ॥ इदं च लिखितं पत्रे, योऽब्दान्तेऽधिकपौरुषः । प्रविशत्वथ निर्यातु, तस्याऽमुष्यां तिथौ रथः ॥ ३५ ॥ कोशे न्यस्तं च तत्पत्रमेतावथ विनिर्गतौ । उदीच्यां धरणः प्राच्यां, देवनन्दी च सार्थिनौ ॥ ३६ ॥ लक्ष्म्याऽथ चिन्तितं पत्या, धरणस्य रिपुर्मम । अहतोऽयं गतो देशान्तरे क्व नु मिलिष्यति ? ॥ ३७ ॥ ध्यात्वेति त्यक्तभोज्या सा, स्थिताऽनुप्रेषिता ततः । बन्धुदत्तेन मिलिता, समेत्य धरणस्य च ॥३८॥ नित्यप्रयाणैश्चाऽहःसु, व्यतीतेषु कियत्स्वपि । धरणेन पुमान्दृष्ट, उत्पतन्निपतन्नपि ॥ ३९ ॥ पृष्टश्च चेन्ममाऽऽख्येयं, तदाख्याहि कथं भवान् । उत्पातं च निपातं च, कुरुते पक्षिपोतवत् ॥ ४० ॥ स प्रोचेऽहं हि वैताढ्यस्थितामरपुरेऽस्मि भो ! । खेटो विद्यास्वनभ्यासी, नामतो हेमकुण्डलः ॥४१॥ तातस्य त्वन्यदा मित्रं, विद्युन्माली नभश्चरः । आगतोऽप्रच्छि तातेन, कुतस्त्वं ? विमनाः कथम् ? ॥४२॥ स प्राह विन्ध्यतोऽस्म्येतो, दौर्मनस्ये तु कारणम् । निर्वेदकारणं दृष्टमवन्त्यां वैशसं मया ॥४३॥ तत्कीदृगिति तातेन, प्रोक्तः प्रोवाच तत्सखा । अवन्त्यां श्रीप्रभो राजा, जयश्रीर्नाम तत्सुता ॥ ४४ ॥ तेन सा याचतोऽ-

---

१ सूक्ष्म् ।

प्युच्चैः कुङ्कुणाधीशजन्मनः । न दत्ता शिशुपालस्य, बालस्यैकावली यथा ॥ ४५ ॥ सदा परोपकारैकरसिकाय महात्मने । वत्सेश्वरस्य पुत्राय, दत्ता श्रीविजयाय तु ॥ ४६ ॥ ततो विवाहे प्रारब्धेऽन्येद्यु श्रीविजये तथा । कन्या कामार्चने यान्ती, शिशुपालेन सा हृता ॥ ४७ ॥ गत्वा श्रीविजयः पृष्ठे, शिशुपालं विजित्य च । गाढप्रहारविधुरो, द्वेधानैषीज्जयश्रियम् ॥ ४८ ॥ स तु श्रीविजयः प्राणसंशये वर्ततेऽधुना । जयश्रीरपि चैतस्मिन्नभुङ्क्ते नात्ति किञ्चन ॥ ४९ ॥ तदिदं वैशसं मेऽत्र, वैमनस्यस्य कारणम् । तातः प्राह सदाप्येष, भव ईदृश एव हि ॥ ५० ॥ मयाऽथ चिन्तितं कल्पे, गन्धर्वरतिना मम । गन्धर्वककुमारेण, कथिताऽस्त्यौषधी वरा ॥ ५१ ॥ हिमाद्रिगह्वरस्था सा, दर्शिता च यदेतया । खड्गघातात्पृथग्भूतं, भग्नं संधीयतेऽस्थ्यपि ॥ ५२ ॥ प्रक्षालनजलेनाऽस्यास्तत्क्षणाद्गतवेदनः । रुह्यते च प्रहारोऽतस्तामानेतुं गतोऽस्म्यहम् ॥ ५३ ॥ [ विशेषकम् ] अत्रायातश्च विश्रान्तः, क्षणं कुरुवके तरौ । चलितस्य नभोगामिविद्याया विस्मृतं पदम् ॥ ५४ ॥ पक्षिपोत इवोत्पातनिपातौ तत्करोम्यहम् । धरणः प्राह कोप्यस्त्युपायो? नास्तीति सोऽवदत् ॥ ५५ ॥ अतोऽहं राजपुत्राऽसुशङ्कया व्यपदं छद्म । धरणः प्राह विद्या किं, पुरतोऽन्यस्य पठ्यते? ॥ ५६ ॥ स प्राह पठ्यते तर्हि, पठेति धरणोदिते । सोऽपाठीद्धरणस्यास्य, पदं चाऽऽख्यत विस्मृतम् ॥ ५७ ॥ पदानुसारिप्रज्ञोऽयं, धरणः खेचरस्य यत् । तदमाख्यत विद्यायाश्छिन्नान्न त[illegible] ॥ ५८ ॥ नमस्याचार्य महाविद्या, युगावजिनभुत्ययोः । पुरा नमिविनम्योरप्यमुनैव प्रकाशिताः ॥ ५९ ॥ स [illegible] दत्त्वौषधीवलयमञ्जसा । जगामोऽजनिर्नी सार्धं, धरणस्तु समाययौ ॥ ६० ॥ अन्यदाऽद्रिनदीतीरस्थिते सार्थे [illegible]

१ [illegible]ग्रथितहारावली । २ [illegible] । ३ [illegible] ।

रुदतो वीक्ष्य पप्रच्छ, धरणस्तन्निवन्धनम् ॥ ६१ ॥ ते प्रोचुः कालसेनाख्यः, पल्लीनाथोऽस्ति नः प्रभुः । नृसिंहः सिंहमभ्येतं, ससत्त्वः स त्वधावत ॥ ६२ ॥ तं वटान्तरितः सिंहोऽग्रहीत्पृष्ठेऽमुना पुनः । स शस्त्या निहतोऽमुष्याऽत्रोटयच्छीर्षखण्डकम् ॥ ६३ ॥ नास्ति मे जीवितं मत्वा, स वह्निं प्रविविक्षति । गुर्वी तद्गृहिणी तं चाऽनुयान्ती न निवर्तते ॥ ६४ ॥ तद्बोधनाय तद्बन्धुः, समीपे प्रहिता वयम् । असमर्थाः प्रतीकारे, वालका इव रोदिमः ॥ ६५ ॥ तं दर्शयत जीवन्तं, धरणेनेति भाषितम् । तेऽप्यूचुस्तर्हि वेगेन, प्रसादं कुरु नायक! ॥ ६६ ॥ अथ वेगसरारूढः[1], सौषधीवलयश्च सः । गतस्तत्र चितान्ते तं, सकलत्रं व्यलोकत ॥ ६७ ॥ पद्मिनीपुटकानीतनीरेऽक्षिप्सौषधीमिमाम् । शिरःखण्डं शिरोदेशे, न्यस्य सिक्तं तदम्भसा ॥ ६८ ॥ अचिन्त्यौषधिमाहात्म्यात्सज्जशीर्षः स उत्थितः । तुष्टा च गृहिणी तस्य, सर्वः परिजनोऽपि च ॥ ६९ ॥ पल्लीपतिरथोत्थाय, पतितस्तस्य पादयोः । उवाचेति मम प्राणास्तवायत्ताः परं किमु? ॥७०॥ सर्वसाधारणाः प्राणाः, सत्पुंसां किं ममाऽधिकम्? । इत्युक्तो धरणेनैष, कालसेनो जगाद तम् ॥ ७१ ॥ तथाप्यादिश मां प्राह, धरणो रक्ष देहिनः । स प्राह प्रोज्झिताऽऽजन्म, त्वद्गिरा मृगया मया ॥७२॥ धरणस्तं प्रशस्याऽथ, कृतार्थः सार्थमागमत् । व्यतीतैश्च दिनैः कैश्चित्पक्षसन्ध्युपवासवान्[2] ॥ ७३ ॥ अपश्यद्दण्डमारक्षैरचौरं चौरशङ्कया । अन्त्यजं मौरिकं नाम्ना, नीयमानं वधावनौ ॥ ७४ ॥ सार्थं निरीक्ष्य स प्राह, निर्दोषो वध्यभूमिकाम् । नीयेऽहं सार्थिकास्तन्मां, हन्त! रक्षत रक्षत ॥ ७५ ॥ वाग्भङ्ग्या धरणः शुद्धं, तं मत्वाऽऽरक्षकाङ्गगौ । तावत्प्रतीक्ष्यतां यावन्नृपं विज्ञपयाम्यहम् ॥ ७६ ॥ तैरुक्तमेहि वेगेन, धरणोऽथ नृपं ययौ । दीना-

१ वेगसर० खच्चर इति भाषायाम् । २ पक्षसन्धि० पूर्णिमा ।

रा[1]युतमूल्यं द्राग्, हारमादाय ढौकते ॥७७॥ नृपस्तुष्टः सदूतं तं, प्रेष्य स्तेनममोचयत् । धरणस्तु तलारक्षं, सम्मान्य
व्यसृजत्ततः ॥७८॥ चण्डालः शम्बलं दत्त्वा प्रहितो धरणं जगौ । मा ते भवतु साऽवस्था, यस्यां कार्यं मया भवेत् ॥७९॥
उक्त्वेति नत्वा साष्टाङ्गं, तत्समीपाद्गतोऽन्त्यजः । धरणस्तु ससार्थोऽपि प्रापाऽचलपुरं पुरम् ॥८०॥ तत्र स्वभाण्डे विक्री-
तेऽस्य लाभोऽष्टगुणोऽभवत् । अथ मासचतुष्केण, द्रव्यकोटिरजायत ॥८१॥ तत्रत्यं भाण्डमादाय, चलितः स्वपुरीं
प्रति । ससार्थो धरणः प्रापाऽटवीं कादम्बरीमथ ॥८२॥ अपसत्सौ[2]प्तिकं सुप्ते, सार्थे शब[3]रसंहतेः । सहस्रैः शबरैः सार्थभ-
टास्त्वल्पे विजिग्यिरे ॥८३॥ गृहीत्वा सार्थसारं च, धृत्वा वन्दे च मानुषान् । कालसेनं ययुः सर्वे, वृत्तान्तं च न्यवेद-
यन् ॥८४॥ कालसेनोऽथ धरणानुचरं सङ्गमाभिधम् । वन्दस्थमुपलक्ष्याऽऽह, तस्य त्वं भद्र! नानुगः ॥८५॥ येनोत्तरापथं
याता, घातरोधेन जीवितम् । दत्तं मे सार्थवाहेन, परोपकृतिशालिना ॥८६॥ [ युग्मम् ] स प्राह तस्य सार्थोऽयं, श्रुत्वा
पल्लिपतिस्तु तत् । निजान्धरणमन्वेष्टुं, प्रैषीत्प्राप्तस्तु नैव सः ॥८७॥ मूर्च्छितः कालसेनोऽथ, नीतः सौम्यं किरातकैः ।
विललापेति तेनाऽहं, सकुटुम्बोऽपि जीवितः ॥८८॥ मया तु तस्य सर्वस्वं, गृहीत्वा स प्रणाशितः । धिग्मामहिमिव क्षीर-
पायिणोऽपि हि घातकम् ॥८९॥ विलप्येति प्रतिज्ञां स, व्यधात्तं योजये न चेत् । द्रव्येण पञ्चरात्रान्तस्तद्विशामि हुता-
शने ॥९०॥ स्वगोत्रदेवतायाश्च, स जजल्पोपयाचितम् । तत्प्राप्त्यै तव दास्ये, यद्दशभिः पुरुषैर्बलिम् ॥९१॥ कृत्वेति नरा-
न्प्रैषीद्धरणस्य गवेषणे । दिश्येकस्यां स्वयं चैष, प्रवृत्तस्तं गवेषितुम् ॥९२॥ धरणस्त्वौषधीमात्रद्रव्यः पद्मया सह व्रजन् ।

---

१ अयुत० दशसहस्र । २ रात्रियुद्धम् । ३ भिल्लसमूहस्य ।

पिलिन्धिनिलयं नाम, गिरिं प्रापाऽतिभीषणम् ॥९३॥ फलादि तत्र न प्रासं, द्वितीयदिवसे तु सा । क्षुधिता तृषिता लक्ष्मी,
पपात भुवि मूर्च्छिता ॥ ९४ ॥ वस्त्रान्तवीजिताऽऽश्वस्ता, सा प्राह तृषिताऽस्म्यहम् । धरणोऽथ द्रुमारूढोऽदृष्टवारिर्व्यचिन्त-
यत् ॥ ९५ ॥ ऊरोर्मांसं सिरातोऽस्रमाकृष्य प्रीणयाम्यमूम् । अन्यथा न भवत्येषा, विनैतां जीवितेन किम् ? ॥ ९६ ॥ ध्या-
त्वेति स तथा कृत्वा, पलाशपुटकद्वये । व्रणं संरोह्य चौषध्या, विदधे सुस्थितामिमाम् ॥ ९७ ॥ ततो महासरोनाम्नि, पुरे
सन्ध्याक्षणे गतौ । न प्रविष्टौ पुरस्याऽन्तर्वहिर्यक्षालये स्थितौ ॥ ९८ ॥ व्यतीते यामिनीयामे, तृषिताऽस्मीति साऽवदत् । स
लात्वा करकं नद्यां, भृत्वाऽपीप्यच्च तां जलम् ॥ ९९ ॥ प्रसुप्ते धरणे लक्ष्मीर्विबुद्धेति व्यचिन्तयत् । अनुकूलो विधिर्मे
यदसौ प्रापेदृशीं दशाम् ॥ १०० ॥ इतोऽप्यभ्यधिकां केनाऽप्युपायेन दशामसौ । लभते यदि तच्चारु, यावद् ध्यायत्यसा-
विति ॥ १०१ ॥ तावदारक्षकव्रातत्रस्तस्तेनः सलोप्त्रकः । चण्डरुद्राभिधस्तत्र, प्राविशद्यक्षवेश्मनि ॥ १०२ ॥ क यास्यत्येष ?
जल्पन्तस्तद्द्वारं रुरुधुर्भटाः । श्रुत्वेति लक्ष्मीरध्यायद्धेतुं पृच्छाम्यमुं नरम् ॥ १०३ ॥ वैरिणोऽस्य वधाच्चेत्तु, पूर्यन्ते मे मनो-
रथाः । ध्यात्वेति तं ससूत्कारं, गत्वा पप्रच्छ को भवान् ? ॥१०४॥ क एते च वदन्तीदृक् ?, स प्राहाऽलं मया शुभे ! । जल-
मत्रास्ति ? सा प्राह, किं तेनाऽऽख्याहि कारणम् ? ॥१०५॥ स दध्यौ साहसं धैर्यं, गीश्च कीदृगहो ! स्त्रियः । पात्रभूता तदेषा
मे, ध्यात्वेति स जजल्प ताम् ॥ १०६ ॥ महती मे कथा भद्रे !, संक्षेपात्कथ्यते पुनः । मया चौरेण सौधान्ताद्दलसर्वस्व-
मादद ॥ १०७॥ निस्सरन्नगराल्लब्धस्तलारक्षैरनुद्रुतः । श्रान्तोऽत्र प्राविशं ते च, द्वारं रुद्ध्वा व्यवस्थिताः ॥ १०८ ॥ सा तु

१ नाचीत ।

भर्तृवधं सिद्धं, मत्वा तं प्राह तस्करम् । त्वां जीवयामि वाक्यं चेन्मदीयं कुरुषे श्रुतौ ॥ १०९ ॥ स प्राहाऽऽदिश सा प्राह, प्राग्भवारिर्धवो मम । सुप्तोऽस्त्यत्र तदुच्छीर्षे, मुञ्च मोषं गृहाण माम् ॥ ११० ॥ म्रियतामेष कल्ये तु, त्वां वक्ष्यामि निजं प्रियम् । नैनं तु नृपतेरग्रे, तद्भाव्येष यमातिथिः ॥ १११ ॥ स प्रोचेऽहमिहत्योऽस्मि, महिला विदिता च मे । सर्वलोकस्य सा प्रोचे, कश्चोपायस्ततो भवेत् ॥ ११२ ॥ स प्रोवाचाऽस्त्युपायोऽत्र, यदि स्तोकं जलं भवेत् । तयोचे किं भवेत्तेन ?, स प्राह शृणु मे वचः ॥ ११३ ॥ प्रदत्ता स्कन्दरुद्रेण, गुरुणा गुटिकाऽस्ति मे । तयाऽञ्जितदृशं मर्त्यं, देवोऽपि हि न पश्यति ॥ ११४ ॥ सा प्राह गुटिका क्वास्ति ?, सोऽवोचत ममाऽञ्चले । तत्किं नाऽनक्षि ? लक्ष्म्योक्ते, स प्राह जलमस्ति न ॥ ११५ ॥ तयाऽर्पिते जले जल्पञ्जीवितोऽस्मि त्वया शुभे ! । स निजे च तदीये चाऽनक्ति स्म नयने क्षणात् ॥ ११६ ॥ विमुच्य धरणोच्छीर्षे, लोप्त्रमेतौ स्थितौ तटे । प्रातरारक्षकैर्दृष्टः, सलोप्त्रो धरणो धृतः ॥ ११७ ॥ बद्धश्च दध्यौ दैवे हि, विलोमे स्यात्सुधा विषम् । रज्जुः सर्पः सुतो वैरी, जलं वह्निः प्रियोरगी ॥ ११८ ॥ चिन्तयन्नित्ययं नीतस्तलारक्षैर्नृपाजिरे । नृपाप्रस्तावतस्तस्य, धृतस्य दिवसोऽगमत् ॥ ११९ ॥ प्रस्तावे कथितो राज्ञो, वध्यस्तेन निदेशितः । अन्त्यजानां वधादेशकारिणामर्पितो भटैः ॥ १२० ॥ ययुस्तेऽन्त्यजमुख्योऽथ, प्राह रे ! कस्य वारकः । वधेऽद्य ? श्वपचाः प्रोचुर्मौरिकस्येति तं ततः ॥ १२१ ॥ आहूय सोऽवदच्चौरो, देवेन प्रेषितो ह्ययम् । नीत्वा श्मशाने जह्येनं, मा प्रमादो भविष्यति ॥ १२२ ॥ तथेत्युदित्वा तेनैष, गृहीतश्चोपलक्षितः । मम जीवितदाताऽसावस्याऽपि हि दशेदृशी ? ॥ १२३ ॥ अथवा विपदर्केन्द्वोरपि, स्याद्राहुतः क्षणम् । ध्यात्वेति नीत्वैकान्ते तं, बन्धांश्छित्त्वाऽपतत्पदोः ॥ १२४ ॥ ऊचे चाऽऽर्य ! स्मरसि मामचौरं चौरवद्धृतम् । वधाय नीयमानं द्राग्नृपाद्

द्रव्येण मोचितम् ॥ १२५ ॥ तेन स्तोकमिदं प्रोक्ते, पुनः प्रोवाच मौरिकः । आर्यस्य किं दशेदृक्षा ?, दैवं पृच्छेति सोऽवदत्
॥ १२६ ॥ अथोचे मौरिकः शीघ्रं, गच्छाऽऽर्य ! धरणो जगौ । परप्राणैर्निजप्राणान्नाहं रक्षामि हिन्धि माम् ॥ १२७ ॥ स प्राह
सागसोऽप्यस्मान्विनाशयति नो नृपः । त्वय्यगच्छत्यहं तु त्वं, हनिष्यामि ततो व्रज ॥ १२८ ॥ धरणः प्राह तद्यामि, स
प्रोचेऽनुग्रहो महान् । ततो मुक्त्वा पथे नत्वा, तं न्यवर्तत मौरिकः ॥ १२९ ॥ धरणोऽथ प्रियां दध्यौ, क्व सा सारङ्गलो-
चना ? । तां विना विफलं मन्ये, जीवितं सा हि जीवितम् ॥ १३० ॥ ध्यायन्निति प्रवृत्तस्तां, गवेषयितुमादरात् । प्रातः स
तटिनीं गत्वाऽमज्जच्च ऋजुपालिकाम् ॥ १३१ ॥ अथ चौरोऽपि स प्रातर्गतो यक्षालयान्नदीम् । दध्यौ हित्वा पतिं ही ! मां,
भेजेऽसौ कुलपांसना ॥ १३२ ॥ विषव्याघ्राहिसिंहेभशरभार्कजरक्षसाम् । हेलयाऽपि महेलाभिश्चरितं त्वरितं जितम् ॥ १३३ ॥
अलं तदेतया मामप्यनर्थे पातयिष्यति । ध्यात्वेति स्वर्णमादाय, तां तत्याजोरगीमिव ॥ १३४ ॥ गते चौरेऽथ सा दध्यौ,
सुन्दरं समभूदिदम् । यदयं निहतो वैरी, गच्छामि त्वधुनाऽन्यतः ॥ १३५ ॥ व्रजन्ती धरणेनेयं, दृष्टा मुदितचेतसा । पृष्टा
प्रिये ! कुतोऽसि त्वं, कैतवेन रुरोद सा ॥ १३६ ॥ तां सम्बोध्य जगादैष, त्वं सुन्दरि ! विषीद मा । धन्योऽस्मि येन
जीवन्ती, भवती ददृशे पुनः ॥ १३७ ॥ सोचेऽथ लघुनीत्यर्थमुत्थितां मां मलिम्लुचः । जग्राह व्याहृतं किञ्चिन्न मया
स्त्रीस्वभावतः ॥ १३८ ॥ स्नेहात्तथाऽऽर्यपुत्रस्य, स मुषित्वा मुमोच माम् । अनिच्छन्ती बलान्नैव, गृह्यते स्त्रीति कारणात्
॥ १३९ ॥ किञ्च मेऽर्तिंकरी तादृग्न तस्करकदर्थना । यादृशीयं तवाऽवस्था, विकल्प्यं नाऽन्यथा ततः ॥ १४० ॥ [ विशेष-

१ अर्कज० यम ।

कम् ] धरणः प्राह वीक्ष्य त्वां, नावस्थेयं दुनोति माम् । सा तु दध्यौ कृतान्तस्य, मुखादप्येष जीवितः ॥ १४१ ॥ अथ गन्तुं प्रवृत्तौ तौ, विज्ञातपुरमागतौ । विनिद्रो धरणश्चिन्तामिति चेतसि निर्ममे ॥ १४२ ॥ अमूं दन्तपुरे स्कन्ददेवमातुलमन्दिरे । विमुच्याऽथ यथायुक्तं, करोमीति विमृश्य सः ॥ १४३ ॥ आख्याय तस्यै प्राचालीत्तत्पुरं स तया सह । मार्गे च गच्छतस्तस्य, यज्जातं तन्निबोधत ॥ १४४ ॥ पल्लीशः कालसेनः स्वप्रतिज्ञापूरणोन्मुखः । वालेयमर्त्यानानेतुमप्रैषीत्परितो भटान् ॥ १४५ ॥ स्नात्वा च कारयित्वा च दारुभिर्निचितां चिताम् । कात्यायन्या गतो वेश्म, प्रणम्याऽपूजयच्च ताम् ॥ १४६ ॥ [ युग्मम् ] ततश्च कालसेनस्य, भटैर्दन्तपुरं व्रजन् । सस्त्रीको धरणः प्राप्तो, बद्धो वल्लीगुणेन च ॥ १४७ ॥ आनीतश्चण्डिकापार्श्वप्रदेशमतिभीषणम् । नीतश्च चण्डिकावेश्ममध्यमध्याममानसः ॥ १४८ ॥ उत्तोरणं नृमुण्डैर्यत्सोल्लोचं चित्रकत्वचा । दन्तिदन्तसमुद्भूतभित्त्युत्कीर्णत्रिशूलकम् ॥ १४९ ॥ कात्यायन्या महारौद्रदृशाऽध्यासितमन्तरे । धृतकोदण्डघण्टासिमहिषासुरपुच्छया ॥ १५० ॥ [ विशेषकम् ] दध्यौ च पन्नगान्मत्ताद्, द्विपात्पञ्चाननादपि । शक्यते नष्टुमुद्दामाद्दुष्कृतात्सुकृतान्न तु ॥ १५१ ॥ कालसेनः प्रणम्याऽथ, चर्चिकामिदमूचिवान् । देवि ! त्वया प्रसादो मेऽधुना यद्यपि नादधे ॥ १५२ ॥ तथापि हि यथेदृक्षदुःखभाग्न भवाम्यहम् । भवान्तरेऽपि तद्देवि !, त्वया कार्यं प्रसन्नया ॥ १५३ ॥ उक्त्वेत्युक्तः कुरङ्गाख्यो, नरं वालेयमानय । तेनाथ केशेष्वाकृष्य, क्षिप्तोऽग्रे वस्तवन्नरः ॥ १५४ ॥ दुर्गिलो लेखवाह्येष, कुङ्कुमेनाऽथ चर्चितः । कोशादसिं समाकृष्य, कालसेनेन भाषितः ॥ १५५ ॥ सुदृष्टं कुरु लोकं त्वं, गन्तव्यं हि त्वया दिवि । विमुच्य

१ वलये हित. वालेयः । २ चण्डिकायाः । ३ अध्याममानसः—स्वस्थचित्तः ।

जीवितं किं ते, वद सम्पाद्यते परम्? ॥ १५६ ॥ भीतो न किञ्चित्स प्रोचे, पुनरुक्तोऽपि नाऽवदत्। अपूर्णकामो नो वध्यस्तत्पल्लीशो विषण्णवान् ॥१५७॥ धरणोऽथ सुरङ्गः सन्कुरङ्गमिदमूचिवान्। आख्याहि निजनाथस्य, यथा प्राक् स निहन्ति माम् ॥ १५८ ॥ तदाख्यातेऽथ पल्लीशः, प्रोचे सार्थेशजन्मनः। निजप्राणैः परप्राणत्राणकृत्तस्य सन्निभः ॥१५९॥ इत्युक्त्वा मूर्च्छितः पल्लीपतिर्वल्केन वीजितः। किशोरकाख्यभिल्लेनाऽऽश्वस्तस्तं प्रोचिवानिति ॥ १६० ॥ क एष सदृशस्तस्य, परोपकरणोद्यतः। स प्रोवाच स्वयं स्वामी, निरूपयतु तं नरम् ॥ १६१ ॥ सहर्षखेदस्तं वीक्ष्योपलक्ष्य च किरातराट्। पतित्वा पादयोः प्राह, ममाऽऽगः क्षम्यतां त्वया ॥ १६२ ॥ धरणोऽवददिष्टार्थदानाश्चाऽऽगो गुणस्त्वयम्। पल्लीशेन किमिष्टं ते, प्रोक्ते स प्राह मारणम् ॥ १६३ ॥ पल्लीशः प्राह ते मृत्यौ, किं निर्वेदस्य कारणम्?। स प्राहैषा कथा गुर्वी, त्वं विधेहि निजेहितम् ॥ १६४ ॥ न मां वेत्त्येष पल्लीशो, ध्यात्वेति तमभाषत। सार्थवाहसुत! त्वं मां न वेत्सि स्वेन जीवितम्? ॥ १६५ ॥ यस्त्वया जीवितः सिंहात्कृतघ्नः सोऽस्म्यहं खलु। प्रागप्राप्तां मया येन, लम्भितोऽसीदृशीं दशाम् ॥ १६६ ॥ धरणोऽथ त्रपानम्रवदनस्तमभाषत। कोऽहं जीवयितव्ये ते?, स्वपुण्येनाऽसि जीवितः ॥ १६७ ॥ कृतघ्नश्च कथं? यस्त्वं, क्षणमात्रेक्षिते जने। अज्ञानादीदृशं कृत्वा, खिद्यसे हृदयेऽधिकम् ॥ १६८ ॥ किं वादः प्रस्तुतं लज्जमानो नोवाच पल्लिपः। सङ्गमाख्यादि मृत्यन्तमाख्यताऽस्य किशोरकः ॥ १६९ ॥ ध्यायंस्तस्याऽथ माहात्म्यसस्नेहत्वकृतज्ञताः। स प्राह क्रियते पूजा, पुष्पाद्यैर्न तु हिंसया ॥ १७० ॥ भवेद्गोः शृङ्गतः क्षीरं, जलाच्च ज्वलनो भवेत्। विषादपि सुधा नैव, हिंसातः सुकृतं पुनः ॥ १७१ ॥ तदेनं व्यवसायं त्वं, मुञ्च दुर्गतिकारणम्। प्रतिपेदे गिरं सोऽथ, धरणस्य गुरोरिव ॥ १७२ ॥ अन्नाभावेऽथ भक्ष्यार्थं, विना

हिंसां मुमोच सः । कादम्वरीप्रविष्टस्य, सार्थस्य च विसूत्रणाम् ॥ १७३ ॥ चर्चित्वा चर्चिकां सोऽथ, सुमकुङ्कुमचन्दनैः । सर्ववन्दयुतं गेहे, निनाय धरणं निजे ॥ १७४ ॥ भुक्तोर्ध्वमुपनीयाऽस्मै, तद् द्रव्यं प्राभृते न्यधात्। मुक्ताफलानि दन्तांश्च, चामराणि च लक्षशः ॥ १७५ ॥ परेऽपि किञ्चन द्रव्यं, दत्त्वा तेन विसर्जिताः । ययुर्यथासुखं बन्दा, बन्धमुक्ताः खगा इव ॥ १७६ ॥ कालं कियन्तमप्येष, कालसेनगिरा स्थितः । तद्विसृष्टः ससार्थोऽपि, माकन्दीं धरणो ययौ ॥ १७७ ॥ तुष्टो गुरुजनः सर्वोऽभ्येयुः पौरमहत्तमाः। सपादा कोटिरस्याऽभूद्, द्रव्यसंख्या कृता च तैः ॥ १७८ ॥ पश्चात्तस्याऽर्धमासेन, देवनन्दी समागतः । तद्द्रव्यमपि संख्यातमर्धकोटिर्महत्तमैः ॥ १७९ ॥ दत्त्वा च द्विगुणां नीवीमर्थिसार्थमनोरथान् । तस्य पूरयतोऽनङ्गत्रयोदश्यागमच्च सा ॥ १८० ॥ उक्तो महत्तमैः सोऽथ, निस्सारय रयाद्रथम् । स प्राह वालकेल्याऽलं, श्लाघितोऽथ महत्तमैः ॥ १८१ ॥ अन्यदा धरणो दध्यौ, नियोज्य द्रव्यमर्थिषु। त्रिवर्गो गृहिणाऽऽराध्योऽर्थादेव स्याद् द्वयं परम् ॥ १८२ ॥ अर्थो हि जनयत्येष, सौभाग्यं गौरवं कुलम् । रूपं मतिं महार्घत्वं, श्लाघां च प्रार्थनीयताम् ॥ १८३ ॥ स यद्यपि प्रभूतोऽस्ति, मम पूर्वनरार्जितः । तथापि स्वभुजोपात्तवित्ताच्चित्ते धृतिर्मम ॥ १८४ ॥ ध्यात्वेति स वणिज्यार्थं, द्राक् समुद्रतटे गतः। वैजयन्त्यां पुरि प्राप, लाभं तु न तथाविधम् ॥ १८५ ॥ भूरि भाण्डमथाऽऽरोह्याऽऽरोहत्पोतेऽर्थलिप्सया। भग्नेऽत्र फलकं प्राप्य, स्वर्णद्वीपमवाप सः ॥ १८६ ॥ विधाय कदलैः प्राणवृत्तिं भीतः स शीततः। पातयित्वाऽरणैः काष्ठैर्वह्निं चिरमसेवत ॥ १८७ ॥ प्रातस्तद्भूमिखण्डं तु, स्वर्णीभूतं विलोक्य सः । स्वर्णद्वीपममुं मत्वा, विदधे वहुघेष्टिकाः ॥ १८८ ॥ कृत्वा घर-

१ लुण्टनां ।

सम्पुटानां चकार सः ॥१८९॥ भिन्नपोतध्वजं कृत्वा, स्थिते-
णनामाङ्कास्ताश्चार्द्रोः सम्पुटे व्यधात् । एवं दशसहस्राणि, सम्पुटानां चकार सः ॥१९०॥ चीनवासी व्रजन्देवपुरं सुवदनाभिधः । यानपात्र-
ऽत्राऽऽययुरन्यदा । निर्यामाः प्रोचुरेनं ते, भग्नपोतवणिग्वरम् ॥१९०॥ पोतः पूर्णोऽस्ति कीदृशा? ते प्रोचुरल्पवित्तत्वादसारे-
स्थितः प्रैषीदस्मानागच्छ तल्लघु ॥१९१॥ धरणः प्राह वित्तेन, पोतः पूर्णोऽस्ति कीदृशा? ते प्रोचुरल्पवित्तत्वादसारे-
णास्ति पूरितः ॥१९२॥ धरणः प्राह तर्ह्यत्र, सार्थवाहः समेतु सः । कथिते तैः समेतोऽयं, धरणेनेति भाषितः ॥१९३॥
तव प्रवहणे भाण्डं, द्रव्यस्य कियतः सखे! । सुवर्णैकसहस्रस्येत्येवं सुवदनोऽवदत् ॥१९४॥ प्रोवाच धरणस्तर्हि, तदसारं
परित्यज । मदीयेन सुवर्णेन, यानपात्रं च पूरय ॥१९५॥ दास्यामि स्वर्णलक्षं ते, वहने तीरमागते । स प्राह स्वर्णलक्षेण,
किमस्माकं? भवान्बहुः ॥१९६॥ पूर्वभाण्डं ततस्त्यक्त्वा, स्वर्णस्य वहनं भृतम् । सख्या च स्थापिताऽऽरूढो, धरणस्तरणी-
मथ ॥१९७॥ इतश्च धरणे मिल्लैर्धृते लक्ष्मीः पलायिता । क्वापि द्वीपे समारूढा, तत्रैवाऽस्ति वहित्रके ॥१९८॥ एतां
निरीक्ष्य तत्रैष, मुदितो व्यथिता तु सा । आख्यत्सुवदनायैष, बाढमानन्दितः स च ॥१९९॥ पञ्चयोजनमात्रं तु, भूभागं
वहने गते । तद्द्वीपस्वामिनी पृष्ठे, सुवर्णाख्याऽऽगताऽवदत् ॥२००॥ अरे! रे! दुष्टसार्थेशसुताऽनुज्ञां विना मम । गृहीत्वा
द्रव्यमकृतोपचारः क्व नु यास्यसि? ॥२०१॥ कम्पयन्त्यम्बुधिं वेगगत्या गगनगामिनी । नृबलिं दत्त सारं मे, गृहीतं मुञ्च-
ताऽथवा ॥२०२॥ [ विशेषकम् ] शौल्किक्येव तयेत्युक्त्वा, तत्रैव वहने धृते । धरणो ध्यातवानेष, मोचितो द्रविणं
निजम् ॥२०३॥ उपकारी च मे लक्ष्मीपत्नीसम्पादनादयम् । तदिदं प्राप्तकालं मे, नृबलीभवनं स्वयम् ॥२०४॥ ध्यात्वेति
व्यन्तरीमाह, नैतज्ज्ञातं मया पुरा । तन्मामेव प्रतीच्छ त्वमहमेव बलिः पुमान् ॥२०५॥ देव्यूचे पत तद्वार्धौ, यथा त्वां

घातयाम्यहम् । लक्ष्मीर्दध्यौ भगवत्या, महान्मेऽनुग्रहः कृतः ॥ २०६ ॥ पोतेशं धरणः प्राह, लक्ष्मीः प्राप्या गुरुस्त्वया । उक्त्वेत्यक्षिपदब्धौ स्वं, मिश्रः शूलेन चैतया ॥ २०७ ॥ स्वर्णद्वीपे च तं नीत्वा, शान्ता सा वहनं ययौ । तं कण्ठस्थासुमद्राक्षीत्खेचरो हेमकुण्डलः ॥ २०८ ॥ सुवेलाद् व्रजता रत्नद्वीपं तेनोपलक्षितः । पुरा परिचयाद्देवीमुपरुध्य स मोचितः ॥ २०९ ॥ दिव्यौषध्या कृतः सज्जः, प्रत्यभिज्ञाय तं जगौ । सखे! श्रीविजयोऽजीवत्?, खेचरः प्राह जीवितः ॥ २१० ॥ श्रुत्वैतद्धरणस्तुष्टस्तं लात्वा हेमकुण्डलः । गन्तुं प्रावर्तत प्रीतो, रत्नद्वीपं विहायसा ॥ २११ ॥ गन्धर्वस्त्रीजनारब्धगीतस्थिरमृगव्रजम् । नागवल्लीसमाश्लिष्टपूगपूगमनोरमम् ॥ २१२ ॥ तीरस्थिततमालद्रुन्यक्कृताम्बुधिसंवरम् । सिद्धविद्याधराकीर्णं, रत्नद्वीपमवाप सः ॥ २१३ ॥ [ युग्मम् ] यः कल्लोलभुजैः श्लिष्टो, विष्वक्कल्लोलमालिना[1] । प्रियसारङ्गशावाक्षीमनोहरशरीरवत् ॥ २१४ ॥ स तत्र फलशाखाभिर्नम्यमान इव द्रुमैः । पूज्यमान इव मरुत्पातितैः कुसुमोत्करैः ॥ २१५ ॥ विहितस्वागतप्रश्न, इव भ्रमरनिःस्वनैः । विश्रम्य दीर्घिकातीरे, सहकारफलान्यलात् ॥ २१६ ॥ [ युग्मम् ] खेचरो धरणं कृतस्नानभोजनमूचिवान् । क्व प्राप्तोऽस्यनया? सोऽथ, सर्वं वृत्तान्तमाख्यत ॥ २१७ ॥ खेचरः प्राह किं कुर्वे, तवाऽथ धरणोऽब्रवीत् । कृतं कृत्यं त्वया किं तु, मां संयोजय जायया ॥ २१८ ॥ स प्राहाऽत्र रत्नगिरौ, किन्नरोऽस्ति सुहृन्मम । सुलोचनाख्यस्तं प्रेक्ष्य, त्वां हि देवपुरे नये ॥ २१९ ॥ गतस्य तत्र तेऽवश्यं, तया योगो भविष्यति । आमेति धरणेनोक्ते, जग्मतू रत्नपर्वतम् ॥ २२० ॥ तत्राऽऽरुह्य महारम्ये, सुलोचनगृहे गतौ । गन्धर्वदत्तया सार्धं, स दृष्टश्चोपवीणयन् ॥ २२१ ॥

1 कल्लोलमालिन्० समुद्र ।

हेमकुण्डलमाश्लिष्यदभ्युत्थाय सुलोचनः। अप्राक्षीच्च कुतोऽसि त्वं?, कुतश्चैष महापुमान्? ॥२२२॥ किं चाऽऽगमनकार्यं
तेऽथ प्रोचे हेमकुण्डलः। अह सुवेलान्मन्मित्रं, स्वर्णद्वीपादसौ पुनः ॥२२३॥ अस्मै दापयितुं रत्नान्यागतोऽस्मि तवा-
न्तिके। ततः प्रत्यशृणोत्फुल्ललोचनस्तत्सुलोचनः ॥२२४॥ [ विशेषकम् ] दिनैः कतिपयैर्जात्यरत्नदानपुरस्सरम्। धरणः
खेचरेणाऽथ, मुक्तो देवपुराद्बहिः ॥२२५॥ जायामिह प्रतीक्षस्वेत्युक्त्वाऽयासीच्च खेचरः। क्षणं स्थित्वा पुरस्याऽन्तर्धरणः
प्रविवेश च ॥२२६॥ टोपाख्यश्रेष्ठिना दृष्टः, सम्भाष्याऽऽनायि मन्दिरे। पृष्टो भुक्तोत्तरं वत्स! कुतस्त्वमिति सादरम्?
॥२२७॥ पितृतुल्यस्य तस्याऽग्रे, माकन्दीनिर्गमादिकम्। तत्पुरागमवृत्तान्तावसानं च स आख्यत ॥२२८॥ अर्पयित्वाऽथ
रत्नानि, धरणः श्रेष्ठिनं जगौ। तात! सङ्गोपयैतानि, ततो गोपयति स्म सः ॥२२९॥ इतः सुवदनो लक्ष्मीं तामाश्वास-
यति स्म सः। भव ईदृश एवाऽयं, गतोऽयं मम तेन तु ॥२३०॥ भवत्या नैव सन्तप्यमथ सा कैतवाज्जगौ। त्वयि जीवति
सन्तापो, न कोऽपि मम मानसे ॥२३१॥ पोतेशो जातरूपं तज्जातरूपनिभां च ताम्। विधातुमात्मसात्तस्याश्चित्तमावर्जयद्
दृढम् ॥२३२॥ तेन सा गृहिणी चक्रे, जातरूपमधिष्ठितम्। दिनैः कतिपयैः कूलं, यानपात्रमथाऽगमत् ॥२३३॥ यानं
चीनागतं श्रुत्वा, धरणोऽथ समाययौ। दृष्ट्वा सुवदनं लक्ष्मीसहितं तुष्यति स्म सः ॥२३४॥ लक्ष्मीः सुवदनश्चैतौ, जातौ
कुवदनौ पुनः। दत्तासनोपविष्टोऽयं, पृष्टः सुवदनेन तु ॥२३५॥ आख्याति स्म यथावृत्तं, ततः सुवदनोऽवदत्। त्वं
जीवितोऽसि तज्जातं, भव्यं स्वं स्वं गृहाण तत् ॥२३६॥ धरणः प्राह पोतेश!, मत्प्राणा अपि ते वशे। लक्ष्मीसङ्गम-

१ स्वर्णम्।

कर्तुः का, वार्ता स्वर्णादिवस्तुनः ? ॥ २३७॥ जगाद धरणश्चैतौ, पुरमध्ये प्रविश्यते । आर्यपुत्र ! त्वमप्यत्र, वसेत्यस्य प्रियाऽवदत् ॥ २३८ ॥ अभ्यक्तोऽयमथाऽऽलोचि, ताभ्यामद्यैव निश्यसौ । कथञ्चिदपि हन्तव्यः, कृतपानाशनो रिपुः ॥ २३९ ॥ ध्यात्वेति मज्जयित्वाऽसौ, पायितः कापिशायनम् । भुक्तः सुप्तश्च शय्यायां, रजन्यामथ योषिता ॥ २४० ॥ कण्ठे पाशः प्रदत्तोऽस्य, पोतेशेन दृढीकृतः । ततो मृत इति त्यक्तस्ताभ्यां जलनिधेस्तटे ॥ २४१ ॥ [ युग्मम् ] तयोश्च गतयोर्याने, समुद्रतटवायुना । शीतलेन समाश्वस्तो, धरणो ह्यचिन्तयत् ॥ २४२ ॥ किमिन्द्रजालं ? किं स्वप्नः ?, किं वा मे मतिविभ्रमः ? । सत्येनैवाऽथ पाथोधितटमभ्यागतोऽस्म्यहम् ॥ २४३ ॥ जातेऽथ निश्चये दध्यावहो ! दुश्चरितं स्त्रियाः । अहो ! सुवदनस्याऽपि, कीदृशं पुरुषव्रतम् ॥ २४४ ॥ जलज्वलनवायूनामस्ति वायुभुजामपि । प्रतीकारो न कोप्यस्ति, महिलामनसः पुनः ॥२४५॥ इदं सुवदनेनाऽपि, विषयामिषगृध्नुना । अहितं विहितं मन्ये, लोकयोरुभयोरपि ॥ २४६ ॥ इति ध्यायन्नयं श्रेष्ठिपुरुषैः साश्रुलोचनैः । प्रातर्दृष्टश्च पृष्टश्च, किं त्वं निश्यपि नागतः ? ॥ २४७॥ विधृताधृतिना तेन, प्रेषितास्त्वां गवेषितुम् । तदेहि दर्शनं देहि, तापनिर्वापणौषधम् ॥ २४८ ॥ स ध्यायन्नन्तरं नृणां, श्रेष्ठिनो गृहमागतः । पृष्टो वत्स ! कुतोऽसि त्वं ?, हेतुना केन दुर्मनाः ? ॥ २४९ ॥ न किञ्चिदिति तेनोक्ते, श्रेष्ठी प्राह श्रुतं मया । यानं चीनात्समायातमुपलेभे त्वया न वा ? ॥२५०॥ सबाष्पं तं च पप्रच्छ, भार्या जीवति ते न वा ? । धरणः प्राह शीलेन, मृता देहेन जीवति ॥ २५१ ॥ कथं वेत्सीति तेनोक्ते, स प्रोचे तात ! कार्यतः । पृष्टोऽथ श्रेष्ठिना सत्यं, सर्वं वृत्तान्तमाख्यत ॥ २५२ ॥ तादृशं वैशसं श्रुत्वा, ततः

१ मद्यम् । २ सर्वाणाम् । ३ औदर्यम् ।

सुवदनं प्रति । कोपाटोपयुतष्टोपश्रेष्ठी व्यजिज्ञपन्नृपम् ॥२५३॥ ततः पोतेशमाकार्य, कार्यवेदी नृपेश्वरः । उवाच श्रूयते
स्वर्णं, घनं तत्कथमर्जितम्? ॥२५४॥ स प्रोवाच क्रमायातमियं भार्या कुतस्तव? । स प्राह गुरुभिर्दत्ता, राज्ञा श्रेष्ठयथ
वीक्षितः ॥२५५॥ प्राह देवाऽनृतं सर्वं, ततः सुवदनोऽवदत् । किं पुनः सत्यमत्रेति, श्रेष्ठी प्रोचेऽथ धीरधीः ॥२५६॥
वर्णिनी च सुवर्णं च, धरणस्येति सूनृतम् । ऊचे सुवदनोऽपूर्वदैवज्ञ! प्रत्ययोऽत्र कः? ॥२५७॥ इदं राजकुलं श्रेष्ठी,
प्राह साधारणं हि तत् । धरणे विद्यमाने च, प्रत्ययस्तु निरत्ययः ॥२५८॥ ऊचे सुवदनो देव!, धरणस्याऽभिधापि न ।
श्रुता मयाऽग्रे तद्देवः, स्वयमेव परीक्षताम् ॥२५९॥ नृपः श्रेष्ठिनमादिक्षद्धरणं त्वं समानय । त्वं च तां महिलां ताभ्यां,
प्रेषिताः स्वे नरास्ततः ॥२६०॥ अनिच्छन्नपि तैर्निन्ये, धरणो धरणीधवम् । भयत्रस्ता च सा लक्ष्मीरलक्ष्मीरिव जङ्गमा
॥२६१॥ नृपस्तौ द्वावपि प्रेक्ष्य, प्राह सुन्दर्ययं त्वया । सार्थवाहसुतो दृष्टो, न दृष्ट इति साऽभ्यधात् ॥२६२॥ पृष्टोऽथ
धरणो भार्या, तवेयं धरणोऽवदत् । देव! पृष्टेन किं? देवः, शुश्रावाऽस्या वचः स्वयम् ॥२६३॥ राज्ञोचे तेन पृच्छामि,
धरणः प्राह देव! तत् । पुरा भवति भार्याऽसौ, न सम्प्रति पुनः प्रभो! ॥२६४॥ धरणं प्राह राजाऽथ, दृष्टः सुवदन-
स्त्वया । धरणः प्राह जानाति, देव! तच्चैष एव हि ॥२६५॥ प्रोचे सुवदनो नाऽयं, दृष्टः क्वापि मया पुरा । नृपो द्वाव-
प्यथाऽपृच्छदिहाऽस्ति द्रविणं कियत् ॥२६६॥ ऊचे सुवदनः स्वर्णेष्टिकानां सम्पुटायुतम् । धरणेन तथेत्युक्ते, प्राह सर्वंस-
हापतिः ॥२६७॥ सम्पुटानि कियत्तौल्यान्यथाऽऽह धरणः प्रभो! । तथा तानि व्यधां नैव, तौल्यं विज्ञायते यथा ॥२६८॥
पृष्टः सुवदनः प्राह, वेद्मि नाऽहमपि प्रभो! । नृपः प्रोवाच सत्येवं, किं कर्तव्यं मया ननु? ॥२६९॥ धरणः प्राह नैवाहं,

घातकोऽस्याऽऽददात्वयम्। ऊचेऽन्यो यत्त्वया दत्तं, नालं मे तव तद्वहु ॥ २७० ॥ अरणद्धरणः ख्यातो, ह्यहमालप्रदायकः। ऊचे सुवदनश्रेष्ठ, प्रस्तुतं किमिदं ततः ॥ २७१ ॥ ततस्तमाह साटोपष्टोपश्रेष्ठी विलज्ज रे!। कृत्वैवमपि ही! जल्पमनल्पं जल्पसीदृशम् ॥ २७२ ॥ महाराज! बहूक्त्या किं?, काञ्चनं नाऽस्य चेदिदम्। तद्दिव्यंमस्तु मे प्राणाः, सर्वस्वसहिताः पणः ॥ २७३ ॥ धरणो ध्यातवाञ्श्रेष्ठी, स्नेहेनापहृतो मम। औदासीन्यमतः कर्तुं, साम्प्रतं नैव साम्प्रतम् ॥ २७४ ॥ ध्यात्वेत्युवाच तातस्य, देव! यद्ययमाग्रहः। तत्किं दिव्यैरुपायोऽन्योऽप्यस्ति राजाऽऽह तं वद ॥ २७५ ॥ स प्राह सम्पुटेष्वस्ति, नाम मे नृपतिर्जगौ। नाम किं तव? स प्राह, धरणोऽप्रच्छ्यथेतरः ॥ २७६ ॥ किं ते? सुवदनो नाम, तेनोक्ते प्राह भूपतिः। छिन्नो हि व्यवहारोऽयं, सम्पुटैरेव तैस्ततः ॥ २७७ ॥ आनाय्य वीक्षितेष्वेषु, नाऽलक्षि धरणाभिधा। राज्ञा प्रोक्तेऽथ नामास्ति, न ते सुवदनोऽवदत् ॥ २७८ ॥ प्रमाणं देव एवाऽत्र देवस्याऽपि पुरोऽनृतम्। जल्पित्वाऽद्यापि हि प्राणान्धत्तेऽथावादि भूभुजा ॥ २७९ ॥ किमिदं धरण!? प्राह, धरणो नैतदन्यथा। सम्पुटं स्फोटयित्वाऽन्तर्नरनाथ! निरूपय ॥ २८० ॥ हृष्टष्टोपः परः क्षुब्ध, आहूताः स्वर्णकारकाः। सम्पुटस्फोटने दृष्टा, स्फुटा च धरणाभिधा ॥ २८१ ॥ क्रुद्धः सुवदनायाऽथ, लक्ष्म्यै च नृपतिर्जगौ। हतैनं वणिजं स्तेनं, निर्वासयत चाऽसतीम् ॥ २८२ ॥ इमामलक्ष्मीं मे राज्याद्धरणस्य च काञ्चनम्। सर्वमर्पयताऽन्यच्च, किं कुर्वे तव सार्थप! ॥ २८३ ॥ [ युग्मम् ] स प्राह वसुनाऽलं मे, प्रसादं कुरुतां पुनः। देवः सुवदनस्याऽस्य, जीवितव्यप्रदानतः ॥ २८४ ॥ अहो! महानुभावत्वमस्य ध्यात्वाऽऽह भूपतिः। न युक्तं सार्थवाहेदं, परं वेद पुन-

१ शपथम्। २ स्वर्णेन।

प्रसादोऽयं महान्मयि । राज्ञोक्तस्त्वं गृहाण स्वमादेश इति सोऽवदत् ॥२८६॥
र्भेनान् ॥२८५॥ धरणोऽथाऽवददेव!, प्रसादोऽयं महान्मयि । राज्ञोक्तस्त्वं गृहाण स्वमादेश इति सोऽवदत् ॥२८६॥ परित्यज विषादं त्वमालम्बस्व
राजपञ्चकुलेनैग, समं सुवदनेन च । गतः स्वर्णेऽर्पिते प्राह, धरणः पोतनायकम् ॥२८७॥ परित्यज विषादं त्वमालम्बस्व
स्वपौरुषम् । कस्य वा स्खलितं नैति, पुरुषस्येह दैवतः ॥२८८॥ अन्यच्च भवतः स्वर्णलक्षो मे (?) भणितस्तदा । त्वया बहु-
कृतोऽहं तु, तत्तेऽनर्घ्यमिदं वचः ॥२८९॥ तद्गृहाणेप्सितं स्वर्णमित्युक्त्वाऽस्मै त्रपावते । अष्टौ सुवर्णलक्षाणे, धरणो दत्त-
वान्मुदा ॥२९०॥ नृपतिं पूजयित्वाऽथ, भाण्डं सुस्थं विधाय च । गतो गृहमथ स्नात्वा, बुभुजे श्रेष्ठिना सह ॥२९१॥
भुक्तोत्तरं पतित्वाऽङ्घ्र्योर्धरणः श्रेष्ठिनं जगौ । याचे किमपि ताताऽहं, तातो मां यदि मन्यते ॥२९२॥ श्रेष्ठी प्रोवाच
वत्स! त्वं, यदि दासीकरोषि माम् । सकुटुम्बं तथाप्युच्चैर्याच्ञां ते न भनज्म्यहम् ॥२९३॥ धरणः प्राह यद्येवं, देहि
वाचां त्रयं निजम् । स प्रोवाचैकगीर्लोपी, त्रिगीर्लोपे न किं क्षमः? ॥२९४॥ उक्त्वेति श्रेष्ठिना वाचां, त्रितये विहिते
सति । सोऽथ प्रागर्पितं रत्नसहस्रं तदयाचत ॥२९५॥ कृत्वा पूजां तदर्धेन, धरणः श्रेष्ठिनः पदोः । उवाच प्रार्थना सेयं,
मदीया तात मन्यताम् ॥२९६॥ अनेन च्छलितोऽस्मीति, श्रेष्ठी ध्यायन्नमन्यत । सम्मान्य च सुसार्थेन, प्रैषयन्नगरीं
निजाम् ॥२९७॥ बहिरावासितो राज्ञा, विज्ञातोऽभ्युद्गतश्च सः । प्रवेशितो महर्द्ध्या च, नीतो निजनिकेतने ॥२९८॥
स्नपितो भोजितः स्वाङ्गभूषणैश्च विभूषितः । प्रेषितः पितरौ नन्तुं, ताभ्यामाशीर्भिरेधितः ॥२९९॥ वितीर्णं च महादानं,
सर्वचैत्यार्चनं कृतम् । निमन्त्र्याऽथ महाराजो, धरणेन प्रपूजितः ॥३००॥ सर्वे सम्मानिताः पौरा, मन्त्रिणश्च यथोचितम् ।
सर्वैरामन्त्र्य गेहेषु, तैरपि प्रतिपूजितः ॥३०१॥ पितृभ्यामन्यदा पृष्टः, क्व वत्स! गृहिणी तव? । अलं तत्कथयेत्युक्त्वा,

धरणस्तावववारयत् ॥ २०२ ॥ राजाऽथ कतिचिद्द्रङ्गशासनार्पणहेतवे । धरणस्य गृहेऽभ्येतः, स्वयं तेन च पूजितः ॥२०३॥ पृष्टश्चागमने कार्यं, नृपतिः सत्यमाख्यत । उवाच धरणो द्रङ्गशासनैः पूर्यते मम ॥ २०४ ॥ माननीयस्तु देवो मे, प्रार्थयामि किमप्यतः । बन्दिमोक्षाभयदानान्निजराज्ये प्रसीद मे ॥२०५॥ अहो! महानुभावत्वमहो! अस्य महात्मता । ध्यायन्निति नृपो द्वाःस्थमादिदेश स देशगम् ॥ २०६ ॥ अभयं सर्वसत्त्वानां, बन्दिमोक्षं च सर्वतः । कारयोद्घोषणापूर्वमखिले मम मण्डले ॥ २०७॥ प्रतीष्य शिरसा तत्स, विदधे नृपशासनम् । पितरौ नितरां तुष्टौ, चेष्टितेनाऽस्य तेन च ॥ २०८ ॥ युज्यतेऽभयदः श्राद्धोऽभयदानमदापयत् । चित्रं तु धरणान्येष, धरणो यदमोचयत् ॥ २०९ ॥ मन्ये स्वं धरणं ध्यायन्मोहभूपतिचारके । अन्यान्यमोचयत्तानि, स्वं मोचयितुमुत्सुकः ॥ २१० ॥ ताभ्यां मुदितचित्ताभ्यां, नृपतेरुचितं कृतम् । धरणेन समं स्थित्वा, मुहूर्तं नृपतिर्ययौ ॥ २११ ॥ धरणोऽपि चिरायातमित्रवर्गसमन्वितः । मुदा जगन्वानुद्यानं, नाम्ना मलयसुन्दरम् ॥ २१२ ॥ दृष्टः कोपि युवा तेन, नागवल्लीगृहस्थितः । प्रसादयन्प्रियां रुष्टां, तत्र क्रीडितुमागतः ॥ २१३ ॥ स्मृत्वा लक्ष्मीमयं दध्यावित्थं कामिमनांस्यलम् । भवन्त्यपरमार्थज्ञानीति संवेगमागतः ॥ २१४ ॥ गतश्चाशोकवीथ्यां स, प्रदेशे प्रासुके स्थितम् । अपश्यच्छिष्यसंयुक्तमर्हद्दत्ताभिधं गुरुम् ॥ २१५ ॥ ज्ञान्यपि च्छिन्नकामोऽपि, यो विशुद्धमना अपि । तपःशोषितगात्रोऽपि, सिद्धिसङ्गमसस्पृहः ॥ २१६ ॥ तं प्रेक्ष्य धरणो दध्यौ, धन्यो जीवत्ययं खलु । गृहवासं परित्यज्य, यः संयममुपात्तवान् ॥ २१७ ॥ पिता माता गृहिण्यर्थस्तनुजाः स्वजना जनाः । इन्द्रजालनिभं सर्वं, जनस्तु न

१ बन्दीन् ।

विरज्यते ॥३१८॥ ध्यायन्निति समित्रोऽपि, सशिष्यं गुरुमानमत् । धर्मलाभाशिषं प्राप्योपाविशच्च महीतले ॥३१९॥
कुतो यूयमिति प्रोक्ते, गुरुणा धरणोऽवदत् । इत एव वयं किं तु, गृहत्यागेऽस्ति मे मतिः ॥३२०॥ तदादिशत किं कार्यं,
मया? गुरुरथो जगौ । तदाशयपरीक्षार्थं, भद्र! त्यक्तगृहेण हि ॥३२१॥ विषयांश्च कषायांश्च, जित्वा कार्यः सुसंयमः ।
त्यक्तमप्यन्यथा गेहमत्यक्तमविवेकिनः ॥३२२॥ [युग्मम्] प्रपद्य दुष्करं केऽपि, संयमं पालयन्ति न । मुह्यन्ति कार्ये कुर्वन्ति,
वाऽसदालम्बनान्यलम् ॥३२३॥ विमुक्तसंयमास्ते न, गृहिणो व्रतिनो न च । नाशयन्ति मनुष्यत्वं, लोकद्वयबहिष्कृताः
॥३२४॥ तस्मादज्ञातहेयोपादेयस्याऽतुलितात्मनः । गृहवासपरित्यागः, कर्तुं समुचितो न ते ॥३२५॥ धरणः प्राह भग-
वन्नादेशः सत्य एव च । किंतु स्वमतिमानेन, किञ्चिद्विज्ञपयाम्यहम् ॥३२६॥ हेयो गृहनिवासः स्यादुपादेया च साधुता ।
विवेकस्तुलना ज्ञेया, जन्तूनां क्लेशशालिनाम् ॥३२७॥ भगवानाऽऽह धन्योऽसि, ज्ञेयं ज्ञातं त्वया ननु । बोधो यथा-
स्थितो लब्धस्तदेनं सफलीकुरु ॥३२८॥ भवन्त्यपरमार्थज्ञा, जना विषयलोलुपाः । अत्र व्यतिकरे त्वं मे, चरितं शृणु
सादरः ॥३२९॥ क्षेत्रेऽत्रैवाऽचलपुरे, जितशत्रुर्नरेश्वरः । पुत्रोऽपराजितस्तस्य, युवराजपदस्थितः ॥३३०॥ द्वितीयः
समरकेतुः, कुमारोऽवन्तिनायकः । प्रत्यन्तनृप उद्धृत्तोऽन्यदा समरकेशरी ॥३३१॥ तं संसाध्य समागच्छन्, युवराजो-
ऽपराजितः । धर्मारामनिवेशस्थमाचार्यं राहुमैक्षत ॥३३२॥ तं वीक्ष्य जातसंवेगः, साग्रहो व्रतमग्रहीत् । अन्यदा विह-
रन्नेष, नगरान्नगरीमगात् ॥३३३॥ तत्राऽवन्त्याः समायाताः, पृष्टाश्च मुनयोऽमुना । उपसर्गं विना साधुविहारस्तत्र वर्तते
॥३३४॥ प्रोचुस्ते भद्रकौ तत्र, पुत्रौ राजपुरोधसोः । उपसर्गयतः साधूञ्छ्रुत्वेत्याख्यद्गुरोरयम् ॥३३५॥ गतो गुरुगिरा-

ऽवन्तीमार्यराहुगणे स्थितः । भिक्षाकाले व्रजन्नेष, स्थापितस्तैरुवाच च ॥ ३३६ ॥ अहं स्वलब्धिकस्तन्मे, दर्श्यतां स्थापना-
कुलम् । प्रेषितः क्षुल्ल एकस्तैः, कुलदर्शनहेतवे ॥ ३३७॥ प्रत्यनीकगृहं गच्छन्निषिद्धः क्षुल्लकेन सः । निवृत्ते क्षुल्लकेऽविक्ष-
त्कुमारस्यैव मन्दिरे ॥३३८॥ शब्देन महता धर्मलाभितोऽन्तःपुरीजनः । गच्छेति संज्ञया प्राह, तमवाजगणत्तु सः॥३३९॥
धर्मलाभवचः श्रुत्वा, कुमारौ तु तमागतौ । द्वारं पिधाय वन्दित्वा, प्रोचतुर्नृत्य भिक्षुक! ॥ ३४० ॥ स प्राह गीतवादित्रे,
विना नृत्यं कुतो भवेत्? । तावूचतुर्गीतवाद्ये, करिष्यावः प्रनृत्य तत् ॥ ३४१ ॥ भवत्वेवं मुनिप्रोक्ते, गीतवाद्ये वितेनतुः ।
तावेव विषमे क्रुद्ध, इव साधुरभाषत ॥ ३४२ ॥ विज्ञानेनाऽमुना गोपपुत्रौ मां नर्तयिष्यतः । श्रुत्वेति कुपितौ साधुवधा-
यैतावधावताम् ॥ ३४३ ॥ नियुद्धकुशलः सोऽथ, साधुस्तौ सर्वसन्धिषु । वियोज्य द्वारमुद्घाट्य, गत्वा च ध्यानमास्थितः
॥ ३४४ ॥ तौ निश्चेष्टौ च दृष्टौ स्वैः, सिक्तौ वारा न तूचतुः । तत्पित्रोः साधुवृत्तान्ते, कथिते तावुपागतौ ॥ ३४५ ॥ वीक्ष्य
राजा ययौ सूरिमार्यराहुं ननाम च । ऊचे च भगवन्बालापराधः क्षम्यतामयम् ॥ ३४६॥ सूरिणोचे न जानामि, तदेवाऽस्य
च साधुभिः । मुनिनाऽऽगन्तुना स्याच्चेत्कृतमित्यथ ते जगुः ॥ ३४७ ॥ तं दर्शयत राज्ञोक्ते, दर्शितो ध्यानवानसौ । राज्ञा-
ऽथ प्रत्यभिज्ञातः, सत्रपेण नतश्च सः ॥ ३४८ ॥ वितीर्य धर्मलाभं स, प्राह श्रावक! युज्यते । त्वद्राज्ये वेदनर्पणामुल्ल-
ण्ठत्वं कुमारयोः? ॥३४९॥ नृपः प्राह प्रभोऽनेन, प्रमादेनाऽस्मि सत्रपः । विधायाऽनुग्रहं तौ तु, संयोजयत सन्धिषु ॥३५०॥
मुनिरूचे व्रतं चेत्तौ, गृह्णीतो योजयामि तत् । राज्ञोक्तं सम्मतं मेऽदः, प्रष्टव्यौ तु कुमारकौ ॥ ३५१ ॥ वक्तुं न शक्तौ तौ
साधुरूचेऽहं जल्पयामि तौ । गत्वा गीर्मात्रतः सज्जीकृत्योक्तौ मुनिना स्वयम् ॥ ३५२ ॥ साधुबाधालतापुष्पमेतद्वां दुर्गतिः

फलम्। समस्ति पश्चात्तापश्चेत्तद्गृहीतं व्रतं युवाम् ॥ ३५३ ॥ तावूचतुश्च नौ पश्चात्तापश्चाऽपत्रपाऽस्ति च । प्रतिपत्स्यावहेऽवश्यं, प्रव्रज्यां गुर्वनुज्ञया ॥ ३५४ ॥ गुरुभ्यां तावनुज्ञातौ, योजितौ साधुना ततः । अङ्गैरपि व्रताङ्गैश्च, प्रपन्नौ विधिना व्रतम् ॥ ३५५ ॥ द्विजस्तु ज्ञाततत्त्वोऽपि, बलात्प्रव्राजितोऽस्म्यहम् । इति द्वेषं गुरौ बिभ्रदनालोच्य दिवं ययौ ॥ ३५६ ॥ ईशाने भुञ्जतस्तस्य, भोगांश्चिह्नानि जज्ञिरे । च्यवनस्य विषण्णोऽसौ, देवीपरिजनान्वितः ॥ ३५७ ॥ त्यक्तमोहोऽथ गत्वा द्राग्विदेहे स जिनेश्वरम् । नत्वाऽपृच्छत्पद्मनाभं, क्वोत्पत्स्येऽहं दिवश्च्युतः ? ॥ ३५८ ॥ सुप्रापबोधिर्वा नो वा ?, तीर्थनाथस्ततोऽवदत् । जम्बूभरतकौशाम्ब्यामुत्पत्तिस्ते भविष्यति ॥ ३५९ ॥ भावी दुर्लभबोधिश्च, गुरुप्रद्वेषतो भवान् । तस्य प्राग्भववृत्तान्तं, कथयामास तीर्थकृत् ॥ ३६० ॥ स दध्यावल्पके द्वेषे, विपाको दारुणः पुनः । स्वाम्याह बहुमान्यः स्यादिहलोकोपकार्यपि ॥ ३६१ ॥ गुरुस्तु मिथ्याज्ञानानि, निघ्नञ्शुद्धक्रियां दिशन् । भवात्कर्षञ्शिवं यच्छन्परलोकोपकारकः ॥ ३६२ ॥ तद्द्वेषजनितं कर्माऽनल्पमल्पमपीरितम् । स दध्यौ कर्मणः प्रान्तः, कदा मेऽस्य भविष्यति ॥ ३६३ ॥ भगवानाह ते भाविभवे मूकापराभिधात् । बन्धोरशोकदत्ताख्याद्, बोधिलाभो भविष्यति ॥ ३६४ ॥ सुरः प्राह कुतो हेतोरस्य नामद्वयं प्रभो ! ? । भगवानाह कौशाम्ब्यां, श्रेष्ठ्यासीत्तापसाभिधः ॥ ३६५ ॥ स सवित्तोऽपि सारम्भ, उदारोऽपि प्रमादवान् । नागदत्तः सुतस्तस्य, स्नुषा वसुमतीति च ॥ ३६६ ॥ स चाऽऽर्तध्यानदोषेण, मृत्वा सूकरतां गतः । पूर्वभुक्तप्रदेशावलोकनाज्जातिमस्मरत् ॥ ३६७ ॥ अन्यदा नागदत्तेन, प्रारब्धे दिवसे पितुः । परिवेषणवेलायामोतुनाऽपहृते पले ॥ ३६८ ॥ सूपकार्या गृहपतेर्वेलातिक्रमभीतया । छन्नं विशसितो मृत्वा, क्रुधाऽजनि भुजङ्गमः ॥ ३६९ ॥ तत्राऽपि हि भवे तस्य, जातिस्मृतिर-

जायत । अकषाय्यनुकम्पावान्कर्मवैचित्र्यतस्तु सः ॥ ३७० ॥ तं निरीक्ष्याऽन्यदा सुद्या, सर्पः सर्प इतीरिते । एत्य कर्मकरैरात्तमुद्गरैर्विनिपातितः ॥ ३७१ ॥ अकामनिर्जरायोगात्स्नुषागर्भे सुतोऽभवत् । जातस्य तस्य चाशोकदत्त इत्याह्वयोऽजनि ॥ ३७२ ॥ तस्य चैकाब्ददेश्यस्य, पश्यतो जनकादिकम् । अचिन्त्यकर्मसामर्थ्याज्जाता जातिस्मृतिः पुनः ॥ ३७३ ॥ दध्यौ च तनयं तातं, स्नुषामपि च मातरम् । कथं वक्ष्यामि मूकत्वमेव श्रेयस्ततो मम ॥ ३७४ ॥ ततः स लोकवाक्येन मूकनाम्नैव पप्रथे । द्वादशाब्दे तु तत्राऽऽगाच्चतुर्ज्ञानी महामुनिः ॥ ३७५ ॥ मेघनादाभिधः सैष, नागदत्तगृहे मुनिम् । प्रवाचं प्रेषयाञ्चक्रे, शिक्षां दत्त्वा गतश्च सः ॥ ३७६ ॥ तमूचे कुहनामूकं, कुमारक! गुरुर्मम । प्रैषीत्तव समीपे मां, मन्मुखेनेति वक्ति च ॥ ३७७ ॥ अलं तापस! मौनेन, ज्ञात्वा धर्मं समाचर । मृत्वा कोलश्च सर्पश्च, जातः पुत्रस्य पुत्रकः ॥ ३७८ ॥ नत्वा हित्वा च मूकत्वं, स प्राह क्व नु ते गुरुः? । शक्रावतारचैत्येऽस्ति, ऋषिणोक्ते सहैदसौ ॥ ३७९ ॥ गुरुं नत्वाऽवदद्वृत्तं, वेत्सि मे भगवन्कथम्? । ज्ञानेनेति गुरुप्रोक्तेऽशोकदत्तो विसिष्मिये ॥ ३८० ॥ धर्मेऽथ कथिते बुद्धः, पूर्ववासनया तु सः । मूक इत्युच्यते लोकैर्द्वितीयं नाम तत्ततः ॥ ३८१ ॥ देवो व्यजिज्ञपन्नाथमहं भोत्स्ये कथं प्रभो! । भगवानाह वैताढ्ये, स्वकुण्डलयुगेक्षणात् ॥ ३८२ ॥ देवोऽथ गत्वा कौशाम्बीं, स्वबोधं मूकमार्थयत् । यतिष्येऽहं यथाशक्ति, तेनेति गदिते सति ॥ ३८३ ॥ वैताढ्यं तं सुरो नीत्वाऽवदद् द्वे एव वल्लभे । सिद्धायतनकूटं च, कुण्डलद्वितयं च मे ॥ ३८४ ॥ इदं रत्नावतंसाख्यं, कुण्डलद्वितयं मम । दर्शनीयं तदा नाहं, यदा बुध्ये कथञ्चन ॥ ३८५ ॥ उक्त्वेति तत्र तं न्यस्य, चिन्ता-

---

१ वाचालम् । २ कुहनाया दम्भतः मूकम् । ३ सूकरः ।

रत्नं समर्प्य च । आख्यद्यदिहलोकस्थकार्यस्यैकस्य कार्यदः ॥ ३८६ ॥ तदेतेन त्वया कार्यं, वैताढ्यगमनं सखे ! । प्रतिप-
न्नमनेनेदं, कौशाम्बीं च समागतौ ॥ ३८७ ॥ दिवं देवो गतश्च्युत्वा, वसुमत्युदरेऽभवत् । बभूव च शरद्यस्याः, सहकारेषु
दोहदः ॥ ३८८ ॥ अप्राप्तौ सा सगर्भापि, व्यथिताऽथ जनोऽवदत् । न जीवति ततो मूको, मातृस्नेहविमोहितः ॥ ३८९ ॥
दध्यौ जिनोक्ते सत्यत्वादन्यथापि भविष्यति । वैताढ्यगमनं मातुर्दोहदं पूरयामि तु ॥ ३९० ॥ ध्यात्वेत्यचिन्तयच्चिन्तार-
त्नादाम्रफलानि सः । श्रद्धामपूरयच्चास्याः, क्रमेण तनयोऽजनि ॥ ३९१ ॥ नागदत्तः पिता तस्याऽदत्त नाम कृतोत्सवम् ।
अर्हद्दत्तः स चाशोकदत्तस्याऽतीव वल्लभः ॥ ३९२ ॥ वर्षैकदेश्यं तं बन्धुर्निन्येऽर्हद्गुरुवेश्मसु । तान्ननाम न नामैष, रुरोद
तु हतोदरः ॥ ३९३ ॥ अस्य द्विः कथितो धर्मो, बन्धुनाऽबुद्ध न त्वयम् । गुरुद्वेषस्फुरत्कर्मपरिपाकविपाकतः ॥ ३९४ ॥
अग्रजेन ततः प्राच्यभवेऽस्य कथिते सति । स प्राह प्रलपस्युच्चैः, किमसम्बद्धमीदृशम् ॥ ३९५ ॥ ज्येष्ठस्तत्कर्मसामर्थ्यं,
चिन्तयन्नजनि व्रती । अनुजेनेभ्यपुत्र्यस्तु, चतस्रः परिणिन्यिरे ॥ ३९६ ॥ अथो विपयिणस्तस्य, गते काले कियत्यपि ।
विपन्नेऽशोकदत्तर्षौ, श्रुते शोकः प्रचुर्यभूत् ॥ ३९७ ॥ तस्यौर्ध्वदेहिकं चक्रेऽनुजो ज्येष्ठस्तु पञ्चमे । स्वर्गे स्वर्ग्यवधिज्ञाना-
द्बोधोपायमचिन्तयत् ॥ ३९८ ॥ चक्रे जलोदरव्याधिं, ततः सोऽजनि तत्क्षणात् । परिशुष्कभुजः स्थूनपदः प्रम्लानलोचनः
॥ ३९९ ॥ गतजिह्वो विनिद्रश्चाऽरतिमान् गाढवेदनः । प्रत्याख्यातोऽगदङ्कारैर्विविक्षुर्ज्वलनेऽभवत् ॥ ४०० ॥ [युग्मम्]
श्रुत्वेति स्वजना म्लाना, मूर्च्छिताः प्राणवल्लभाः । खिन्नः परिजनः सर्वो, विलापं विदधेऽधिकम् ॥ ४०१ ॥ तदा शबर-

१ द्रोहल्य। २ अतिकृशपादः।

वैद्यत्वं, दधद्देवस्तदोकसः । उदघोषयदासन्नः, सर्वव्याधीन् हराम्यहम् ॥४०२॥ स्वजनैर्भणितो भद्राऽपनयाऽस्य महोदरम् । दक्ष यथेष्टं स प्राह, धर्मवैद्योऽस्म्यहं ननु ॥ ४०३ ॥ व्याधिस्तु कृच्छ्रसाध्योऽस्य, नाऽपयाति यथा तथा । निदानं परिहर्तव्यं, सेव्यस्तत्परिपन्थिकः ॥४०४॥ निदानं द्विविधं तच्चैहिकामुष्मिकभेदतः । ऐहिके त्यज्यतेऽपथ्यं, धातुक्षोभस्य कारणम् ॥ ४०५ ॥ आमुष्मिके तु मिथ्यात्वं, हेयं सेव्ये च सर्वदा । विशुद्धे दर्शनज्ञाने, सूत्रार्थौ पौरुषीद्वये ॥ ४०६ ॥ त्रिधापि षड्व्रती पाल्या, वर्जनीयाः क्रुधादयः । भ्रम्यमप्रतिवद्धेन, स्थातव्यं काननादिषु ॥ ४०७ ॥ कुर्वाणस्येति किंत्वेतद्याता भवजलोदरम् । ततः परिजनेनोचे, मरणाद्दुश्चिरं ह्यदः ॥ ४०८ ॥ स मृत्योरधिकं ह्येतद्ध्यात्वेत्यूचे भवत्विदम् । वैद्यः प्रोचेऽथ शक्तिं मे, पश्य क्लेशापहां क्षणात् ॥ ४०९ ॥ निश्चितेन त्वया भाव्यं, मोहो हेयश्च सर्वथा । न कर्तव्यः कुसंसर्गो, नाज्ञा खण्ड्या च मे क्वचित् ॥ ४१० ॥ ततो मण्डलमालिख्याऽर्हद्दत्तं न्यस्य तत्र च । अभिमन्त्र्यौषधं दत्तं, छन्नश्च श्वेतवाससा ॥ ४११ ॥ दिव्यशक्त्याऽथ तस्याऽङ्गाद्विमुक्ताक्रन्दभैरवः । अङ्गोपाङ्गमहाभङ्गपूर्वं रूपेण भीषणः ॥ ४१२ ॥ दुर्गन्धोऽश्रव्यगीरात्मतुल्यसाष्टशतान्वितः । मूर्तो व्याधिः समाकृष्टस्तेन पापविपाकवत् ॥ ४१३ ॥ [ युग्मम् ] विस्मितोऽथ जनः सर्वस्तस्य निद्रा समागमत् । प्रबोध्य भिषजा प्रोक्तो, व्याधिस्तेऽपगतो ननु ॥ ४१४ ॥ तत्तथा भवता कार्यं, यथा नाऽयं पुनर्भवेत् । क्रमेणाऽप्राप्तपूर्वं चाऽऽरोग्यसौख्यमवाप्स्यसि ॥ ४१५ ॥ अनेन व्याधिना ग्रस्तोऽहमप्यस्मि भवानिव । काचिन्मात्राऽपनीता च, रोगस्याऽस्य मयाऽपि हि ॥ ४१६ ॥ शेषापनयनोपाये, तूत्तमे नाधुनोचितः । ततस्त्वमुत्तमोपायं, भजाऽथ मम चेष्टितम् ॥ ४१७ ॥ उत्तमः क उपायोऽत्र ?, लोकपृष्टो भिषग्जगौ । जिनदीक्षाग्रहस्तस्माद्, व्याधिः सर्वोऽ-

दीक्षां गृहाण वा सार्धं, मया वा विहराऽन्वहम्
प्यपैत्ययम् ॥४१८॥ मज्जातौ तु न दीक्षा स्यात्त्वं तु जात्युत्तमत्वतः । तदिदं सुन्दर कर्तुमुचितं च कुरुष्व तत् ॥४२०॥ अनि-
॥४१९॥ लोकः प्रोवाच ते भ्राताऽपि हि प्रव्रजितोऽभवत् । कस्मिन्नप्यागते सार्धा, जग्राह द्रव्यतो व्रतम् ॥४२१॥ गते शबरवैद्येऽसौ, ममु-
च्छन्नपि चित्तेन, प्रतिपेदे स तद्गिरा । गतैश्च दिवसैः कैश्चिदवधेरुपयोगतः । ज्ञात्वा देवेन
त्पन्नाऽरतिः पुनः । द्रव्यलिङ्गं परित्यज्य, निजं गृहमुपागतः ॥४२२॥ तद्बन्धुभिस्तु सोऽन्विष्टो, वैद्यः प्राप्तः कथञ्चन । उक्तः प्रशमने व्याधेर्व्रत-
सव्याधिः, कृतो लोकेन निन्दितः ॥४२३॥ पुनस्त्यक्तव्रते तस्मिन्महाव्याधिं सुरो व्यधात् । उक्तोऽथ बन्धुभिर्वेत्सि नाऽत्मानमपि मूढधीः
मग्राहयत्पुनः ॥४२४॥ म्रियस्व तस्य वा वाक्यं, कुरु स प्राह साम्प्रतम् । तं प्रेक्षे यदि तत्तस्य, वचनं विदधाम्यहम् ॥४२६॥ गवेषि-
॥४२५॥ तोऽथ तैर्दृष्टो, वैद्यः प्रोक्तश्च सत्रपैः । तदेव तव पुत्रेण, कृतं व्याधिर्महानभूत् ॥४२७॥ ततः कोप्यस्त्युपायोऽत्र ?, वैद्यः
तोऽथ तैर्दृष्टो, वैद्यः प्रोक्तश्च सत्रपैः । निष्पौरुषश्च दौर्गत्ये, बह्वीः प्राप्स्यति वेदनाः ॥४२८॥ आयुष्मतां तु युष्माकमुपरोधात्तमेकदा । तच्चि-
प्राहैष लम्पटः । निष्पौरुषश्च दौर्गत्ये, बह्वीः प्राप्स्यति वेदनाः ॥४२८॥ आयुष्मतां तु युष्माकमुपरोधात्तमेकदा । तच्चि-
कित्सामि चेत्सार्धं, मयैव हि स हिण्डति ॥४२९॥ प्रतिपद्य तदेतैश्चाऽर्हद्दत्ताय निवेदितम् । नाऽन्या गतिरिति ध्यात्वा,
प्रत्यपद्यत सोऽप्यदः ॥४३०॥ तैरानीतो भिषक् प्राह, क्रीडेयं पश्चिमा ननु । त्वया भव्येन तद्भाव्यं, तत्कार्यं यत्करो-
म्यहम् ॥४३१॥ अहं न क्वापि मोक्तव्योऽर्हद्दत्तस्तत्प्रपन्नवान् । चिकित्सित्वा च स प्रोक्तो, मा भूः कापुरुषोऽधुना ॥४३२॥
देवेन तस्य चागौणं, गोणत्रितयमर्पितम् । नगरीतो विनिर्गत्य, गतौ ग्रामान्तरे ततः ॥४३३॥ देवः स्वमायया ग्रामं, तं
ज्वलन्तमदर्शयत् । विध्यापनाय तृण्यां च, गृहीत्वा स्वं प्रधावितम् ॥४३४॥ अर्हद्दत्तोऽवददीसं, किं विध्याप्येत तृण्यया ? ।

किं वेत्सीदं? सुरप्रोक्ते, किं ज्ञेयमिह? सोऽवदत् ॥४३५॥ देवः प्रोवाच चेद्वेत्सि, तत्क्रोधानलदीपिते । गृहे गृहीतदेहैधः, कथं विशसि वालक! ॥४३६॥ स्थितस्तूष्णीं न वुद्धस्तु, ततः कण्टकसङ्कुले । देवः पथि व्रजन्नुक्तस्तेन त्यजसि किं समम्? ॥४३७॥ देवः प्रोवाच वेत्सीदं, यदि तत्किं शिवाध्वनः । रागादिकण्टकाकीर्णे, भवमार्गे व्रजस्यहो! ॥४३८॥ स्थितस्तूष्णीं न सम्बुद्धो, देवेनाऽथाऽस्य दर्शितः । जनैः प्रपूजितो यक्षः, पुनः पुनरधः पतन् ॥४३९॥ निर्भाग्यो यक्ष इत्युक्ते, तेन देवो जगाद तम् । यदीदं वेत्सि तत्किं त्वं, प्रयासि नरकं प्रति? ॥४४०॥ स्थिते तूष्णीमसवुद्धे, तत्र कोलोऽथ दर्शितः । हित्वा धान्यतुषान्स्वादमानोऽमेध्यममेध्यधीः[1] ॥ ४४१ ॥ तेनोक्ते निर्विवेकोऽयं, सुरः प्राहेति वेत्सि चेत् । तत्किं श्रमणतां हित्वा, विषयान्वहुमन्यसे? ॥४४२॥ स्थिते तूष्णीमसंवुद्धे, तत्र देवो वृषं व्यधात् । क्षेत्रमध्याविदूरस्थत्यक्तजञ्जुमचारिकम्[2] ॥ ४४३ ॥ शुष्ककूपैकदेशस्थदूर्वालेशाभिलाषुकम् । पतितं कूपके चूर्णीभूताङ्गोपाङ्गदुःस्थितम् ॥ ४४४ ॥ [ युग्मम् ] अर्हद्दत्तस्तु तं वीक्ष्य, प्राहाऽहो! अस्य मूढता । देवः प्रोवाच जानाति, यदीदं तत्कथं भवान् ॥४४५॥ हित्वा जञ्जुमचार्याभं क्षेत्रस्थं स्वर्गिणां सुखम् । दूर्वाभमर्त्यभोगेषु, लुब्धः पतति दुर्गतौ? ॥ ४४६ ॥ [ युग्मम् ] श्रुत्वेति विगलत्कर्मा, स दध्यौ-कोप्ययं खलु । अमानुषो वदत्येवं, भ्रातेव मयि वत्सलः ॥ ४४७॥ ऊचे चाशोकदत्तस्य, तुल्यः कोऽपि भवान्मयि । स प्राहाऽहं स एवास्मि, पर्यायान्तरितः पुनः ॥ ४४८ ॥ कः प्रत्ययोऽत्र? तेनोक्ते, देवः प्रोवाच यत्त्वया । भणितोऽहं हि वैताढ्ये, स्थगितं कुण्डलद्वयम् ॥ ४४९ ॥ दर्शयित्वा प्रवोध्योऽहं, तस्मात्तद्दर्शयामि ते । प्रत्ययेन किमन्येन?, तच्च प्रत्य-

---

१ मलिनवुद्धिः । २ जञ्जुमचारिक० हरिततृण ।

शृणोदसौ ॥४५०॥ [ युग्मम् ] दिव्यरूपेण भूत्वाऽथ, नीतो वैताढ्यपर्वते । सिद्धायतनकूटे तद्दर्शितं कुण्डलद्वयम् ॥४५१॥ स तद्रत्नावतंसाख्यमीक्षित्वा जातिमस्मरत् । प्रतिबुद्धः प्रपन्नश्च, तत्क्षणं भावतो व्रतम् ॥४५२॥ क्षमयित्वा गतो देवः, सोऽहं सौवस्तिकाङ्गजः । विराधकानां तद्बुद्धिर्धर्मशीले न जायते ॥४५३॥ जितमोहरिपूणां च, निर्वहत्येव संयमः । नान्यच्च रम्यं तत्तेन, नृजन्म सफलं कुरु ॥४५४॥ धरणः प्राह भगवंस्तवाऽऽदेशोऽस्तु मेऽनघः । पित्रोराख्यामि किं त्वेतद्भवेद् बोधस्तयोरपि ॥४५५॥ गुरुणा युक्तमित्युक्ते, विबुद्धसुहृदन्वितः । गृहं गत्वा व्यतिकरं, पित्रोराख्यातवांश्च तम् ॥४५६॥ ततस्ताभ्यां प्रबुद्धाभ्यां, वयस्यैश्च समन्वितः । अर्हद्दत्तगुरोः पार्श्वे, कृतकृत्योऽग्रहीद् व्रतम् ॥४५७॥ श्रुतेऽधीती समाम्नाती, क्रियास्वेष क्रमादभूत् । एकत्वप्रतिमायोग्यो, जातोऽपृच्छद्गुरूनयम् ॥४५८॥ गुरुणाऽनुमतः सोऽथ, प्रपन्नः प्रतिमामिमाम् । अलिप्तस्तामलिप्त्याः स्वैस्तस्थौ प्रतिमया बहिः ॥४५९॥ इतो देवपुरान्निर्वासिता लक्ष्मीर्गवेषिता । दृष्टा सुवदनेनैषा, निवेशे नन्दिवर्धने ॥४६०॥ घटिता च समं तेन, तामादाय गतोऽथ सः । चीनद्वीपेऽथ कालेन, तामलिप्त्यां समाययौ ॥४६१॥ [ युग्मम् ] तस्थौ बहिर्निवासे च, तया लक्ष्म्या समन्वितः । अथोद्यानं गता लक्ष्मीर्धरणर्षिमवैक्षत ॥४६२॥ तमेषा प्रत्यभिज्ञाय, गुरुकर्मत्वजाड्यतः । क्रोधानलमसेविष्ट, तापायेव समुद्यता ॥४६३॥ अचिन्त्यश्च मत्पापपरिणामो महानहो! । यद् दृष्टः पुनरप्येष, कथं व्यापाद्यते पुनः? ॥४६४॥ प्राप्तकालमिदं छिन्नकङ्कणं कण्ठभूषणम् । स्थापयित्वा समीपेऽस्य, मुष्टा मुष्टेति पुष्टगीः ॥४६५॥ करोमि तुमुलं येनोद्यानस्यैकान्तभावतः । ग्रैवेयकस्य रम्यत्वाच्चौरसम्भावना भवेत् ॥४६६॥ तच्चण्डाज्ञेन राज्ञाऽसौ, सुखं व्यापादयिष्यते । कल्ये ह्याददिरे स्तेनाः, सलोप्त्रा

भिक्षुरूपिणः ॥४६७॥ लिङ्गिनोऽपि हि कुर्वन्ति, चौरिकामिति चाऽभवत् । प्रसिद्धिस्तदुपायोऽयं, भव्योऽस्तीति व्यधात्तथा ॥४६८॥ [ कलापकम् ] प्राप्तो मुनिरथाऽऽरक्षैर्जल्पितश्च न जल्पति । वीक्षमाणैस्तदासन्नं, दृष्टं ग्रैवेयकं पुनः ॥४६९॥ तच्छिन्नकङ्कणं वीक्ष्य, गतं जनपदैरिदम् । आख्यातं नृपतेर्देवाऽपूर्वः प्राप्तो मलिम्लुचः ॥४७०॥ विस्मितो नृपतिः प्राह, निरूप्य हत तं शठम् । तलारक्षेण पृष्टोऽथ, न किंचिदपि जल्पति ॥४७१॥ अहो! धूर्तत्वमस्येति, कुपितैरधिकं च तैः । नीतो वध्यावनीं तत्र, निखाता शूलिकोच्छ्रिता ॥४७२॥ उत्क्षिप्तश्च मुनिः क्षेप्तुं, चण्डालेनोदघोषि च । अहो! लोकाः! कृतं स्तैन्यं, साधुवेषभृताऽमुना ॥४७३॥ ततोऽसौ वध्यतेऽन्योऽपि, यः कोप्येवं विधास्यति । राजा सुतीक्ष्णदण्डस्तमित्थं व्यापादयिष्यति ॥४७४॥ इत्याघोष्य विमुक्तोऽयं, तपसस्तु प्रभावतः । शूलिका तूलिका[1] जज्ञे, न विद्धो मुनिपुङ्गवः ॥४७५॥ जज्ञे कुसुमवृष्टिश्च, देवसान्निध्यतो मुनौ । धर्मो जयति पूज्योऽयमिति कलकलोऽजनि ॥४७६॥ [ पञ्चभिः कुलकम् ] आख्यातं नृपतेर्जातप्रमोदः स समाययौ । नत्वा सविस्मयं पृष्टो, न किञ्चिदपि सोऽवदत् ॥४७७॥ मन्त्रिणाऽथ नृपः प्रोक्तो, देव! व्रतविशेषवान् । अधुनाऽपि कुतो हेतोस्तवाऽग्रे मन्त्रयिष्यति? ॥४७८॥ तामेव सार्थवाहस्य, तदाऽऽह्वयत गेहिनीम् । प्रेषिताश्च तलारक्षाः, सा श्रुत्वेति पलायिता ॥४७९॥ अदृष्टायां तलारक्षैः, क्षितीशाय निवेदितम् । नष्टा सा देव! नष्टा न, सदनादिषु दृश्यते ॥४८०॥ नृपः प्रोवाच यत्नेनाऽन्वेष्याऽऽनयत तामिह । बाढं गवेषितोद्यानादिषु दृष्टा तु तैर्न सा ॥४८१॥ तन्निशम्य जनान्नश्यन्दृष्टः सुवदनस्तु तैः । धृत्वाऽऽनीय तलारक्षैर्नृपायेति निवेदितम् ॥४८२॥ देव!

[1] रुतपुम्भिका ।

पुर्यां न साऽस्त्यस्यां, तस्याः पतिरयं पुनः । प्रणश्यज्ञगृहे देवः, प्रमाणमिह साम्प्रतम् ॥४८३॥ नृपो निरूप्य तं प्राह, क्व ते भद्र! नितम्बिनी? । न जानामीति तेनोक्ते, राज्ञोचे तत्कुतोऽनशः? ॥४८४॥ स प्राह भीत्या राज्ञोचे, का भीतिः स्यान्निरागसः? । तेनोचे देव! मेऽस्त्यागो. नृपतिः प्राह कीदृशम्? ॥४८५॥ स प्रोवाच तथारूपपरिग्रहपरिग्रहः । राज्ञोचे तेऽभयं तस्या, यतेश्चाख्याहि मे कथाम् ॥४८६॥ निरीक्ष्य चरणं साधुमुपलक्ष्य च बाष्पभृत् । विस्मितस्तच्चरित्रेण, नृपं सुवदनोऽवदत् ॥४८७॥ न वृत्तान्तं यतेरस्य, वक्तुं देव! क्षमोऽस्म्यहम् । नृपः प्राह वदाऽवाच्यं, किमप्यस्तीह किं भद्र? ॥४८८॥ ततः सुवदनः प्राह, देवैकान्तं समादिश । राज्ञा निरीक्षितः सर्वोऽपसृतश्च परिच्छदः ॥४८९॥ धरणर्षिमयं वीक्ष्य, सञ्जातानुशयोऽवदत् । देवाऽहं पापकर्माऽस्मि, नरश्वा न पुनः पुमान् ॥४९०॥ नरो हि विरतोऽकृत्यात्कृतज्ञः सत्यसङ्गरः । उपकारी भवाद्भीरुर्यथैष भगवानिह ॥४९१॥ नृपः प्राह नरश्वा स्यात्कथमेवंविधो भवान्? । प्रस्तुतं वद तद्भद्र! ततः सुवदनोऽवदत् ॥४९२॥ आरभ्य स्वर्णद्वीपस्य, दर्शनान्नृपतेः पुरः । अष्टलक्षस्वर्णदानावसानामस्य तां कथाम् ॥४९३॥ [ युग्मम् ] तुष्टेन भूभुजा मुक्तो, नत्वा सुवदनो मुनिम् । आर्यमङ्गन्तिके धर्मं, श्रुत्वा श्रामण्यमाददे ॥४९४॥ धरित्रीशश्चरित्रेण, धरणर्षेश्चमत्कृतः । तं नत्वा सपरीवारः, ससार नगरीं निजाम् ॥४९५॥ लक्ष्मीरपि भयत्रस्ता, तामलिप्त्याः पलायिता । यथाजातीकृता चौरैः, प्राप्ता रात्रौ कुशस्थले ॥४९६॥ चरुकर्माऽस्ति चाऽऽरब्धं, तस्यां निशि पुरोधसा । नृपाग्रमहिषीसूतिविघ्ननिर्घातनाविधौ ॥४९७॥ ज्वालितो ज्वलनः कामं, पुरबाह्यचतुष्पथे । दिशामारक्षकाः

---

१ स्त्री । २ लक्ष्म्यनुरूपस्त्रीपरिग्रह । ३ सत्यप्रतिज्ञ. । ४ ओदनकर्म ।

कृष्टासयो न्यस्ताश्च सर्वतः ॥ ४९८ ॥ आरोपितश्चरुः स्नेहभिन्नतण्डुलसंयुतः । प्रस्तुतो मन्त्रजापश्चाऽसाध्वसेन पुरोधसा ॥ ४९९ ॥ तदा सा ज्वलनं वीक्ष्य, सार्थभ्रान्त्या समागता । दृष्टा शिवारवस्याऽनन्तरमुत्तरसाधकैः ॥ ५०० ॥ राक्षसीति भयत्यक्तासयः संस्तम्भितोरवः । कम्पमानभुजास्त्यक्तजीविता इव तेऽपतन् ॥ ५०१ ॥ अहं स्त्रीति वदन्ती सा, समेता तु पुरोधसम् । संवीक्ष्याऽवसनामेनां, मेने मनसि राक्षसीम् ॥ ५०२ ॥ आगते हि भये कार्यं, पुरुषेणेह पौरुषम् । ध्यात्वेति गाढं हस्तेन, केशहस्तेऽग्रहीत्स ताम् ॥ ५०३ ॥ मा भैष्टेति वदन्नेष, दिशापालानबोधयत् । तैरुत्थाय निबद्धाऽथ, पुरे[१]ऽपि पुरोधसा ॥ ५०४ ॥ निवेदितं नृपस्याऽग्रे, स च क्रोधप्रबोधितः । तदूरुबाहुमांसानि, खादयित्वा तथैव हि ॥ ५०५ ॥ विष्टया लेपयित्वा च, नानारूपं विडम्ब्य च । निर्भर्त्स्य च सरोषं तां, स्वदेशान्निरवासयत् ॥ ५०६ ॥ [युग्मम्]ग्रामेऽप्राप्तप्रवेशाऽथ, भ्रमन्त्यटविमध्यतः । प्राच्यकर्मपरीणामेनेव भीषणमूर्तिना ॥ ५०७ ॥ निहता मृगराजेन, जज्ञे धूमप्रभाभुवि । सा सप्तदशवार्ध्यायुर्नारकः स्फारकल्मषः ॥ ५०८ ॥ [ युग्मम् ] निर्ग्रन्थो धरणोऽपि चारुचरणः संसूत्र्य संलेखनां, पर्यन्ते कृतपादपोपगमनो गत्वा यशःशेषताम् । स्वर्गेऽथाऽऽरणनाम्नि तारणमतिः श्रीचन्द्रकान्ताभिधो, देवो विंशतिसागरायुरसमद्योतिर्विमानेऽजनि ॥ ५०९ ॥ इति श्रीहरिभद्रोक्त्या, प्रद्युम्नाचार्यगुम्फिते । समरादित्यसंक्षेपे, षष्ठ एष भवोऽभवत् ॥ ५१० ॥

## [ अथ सप्तमो भवः ]

इतश्च जम्बूद्वीपस्य, भरतेऽस्त्युच्चवप्रतः । कृतशत्रुजनाकम्पा, चम्पा नाम पुरी परा ॥ १ ॥ यस्यां विनयलावण्यरूपम-

---

१ वेण्यां ।

न्मथचेष्टितैः। संसारस्याऽपि सारत्वं, स्त्रीजनो जनयत्यलम् ॥२॥ महासेन इव ध्वस्तरिपुसेनः स्वतेजसा । विष्वक्सेनः श्रिया तत्राऽमरसेनः क्षमापतिः ॥३॥ गाढोपगूढं यं लक्ष्मीर्न कदाचिद्विमुञ्चति । भङ्गैर्वशीकृतदिशं, तत्प्रवेशभयादिव ॥४॥ सर्वान्तःपुरसाराऽस्य, देव्यस्ति जयसुन्दरी । जिगाय या स्वरूपेण, देवानामपि सुन्दरीः ॥५॥ नृपस्य हरिषेणाख्यो, युवराजोऽस्ति चाऽनुजः । तस्य तारप्रभा हारप्रभा नाम कुटुम्बिनी ॥६॥ इतश्च धरणश्च्युत्वाऽऽरणस्वर्गादवातरत् । उदरे जयसुन्दर्या, दृष्टः स्वप्नस्तया निशि ॥७॥ स्वर्णदण्डो देवदूष्यपताकाञ्चलचञ्चलः । मुखाध्वना ध्वजः प्रांशुः, प्रविशन्नुदरान्तरे ॥८॥ तया विबुद्धयाऽऽख्यातो दयितायाऽथ सोऽवदत् । नरेन्द्रकेतुभूतस्ते देवि! सूनुर्भविष्यति ॥९॥ तत्प्रतिश्रुत्य तुष्टायास्त्रिवर्गफलमीयुषः । कालेऽस्याः प्रसवस्याऽभूद्दारकः पुण्यधारकः ॥१०॥ हर्षमत्याख्यया चेट्या, नरेन्द्राय निवेदिते । स पारितोषिकं तस्यै, दत्त्वा वर्धापनं व्यधात् ॥११॥ अतुच्छ उत्सवे जाते, षष्ठीजागरणादिके । मास्यतीतेऽस्य भूनेता, सेन इत्यभिधां व्यधात् ॥१२॥ अथैकहायने तस्मिन्, स लक्ष्मीजीवनारकः । उद्धृत्य भवमाहिण्ड्य, तादृक्कर्मानुभावतः ॥१३॥ युवराजप्रियाकुक्षौ, विषेणाख्यः सुतोऽजनि । वृद्धः कलाकलापेन, सेनः स्वाङ्गेन च क्रमात् ॥१४॥ [युग्मम्] तस्य प्रीतिर्विषेणेऽस्ति सेने न त्वस्य पूर्ववत् । इक्षुर्विषं च तादृक्षे, एवान्यत्रोद्गते अपि ॥१५॥ अन्यदा पुर्यपर्यन्तो, जज्ञे जयजयारवः । सुरविद्याधरैश्चक्रे, पुष्पवृष्टिर्नभस्तलात् ॥१६॥ भूनेत्रा प्रेषितो वेत्री, मत्वा भूपं व्यजिज्ञपत् । देवाऽभूत्केवलज्ञानं, साध्व्यास्तन्मुदिता पुरी ॥१७॥ निरवद्यामिमां विद्याधरा धरणिगोचराः । सुराश्च स्तुवते

---

१ कार्तिकेयः। २ कृष्णः। ३ स्त्री। ४ अपर्यन्तः—अमर्यादितः।

देव! सेवका देवतामिव ॥१८॥ श्रुत्वेति मुदितो नन्तुं, प्राचालीदचलापतिः । धर्मन्यस्तमनास्तस्याः, समेतश्च प्रतिश्रयम्[1] ॥१९॥ यः स्वच्छस्फटिकच्छायः, स्वर्णवर्णवितर्दिकः[2] । स्फुटसौदामिनीदामशरदम्बुधरप्रभः ॥२०॥ तत्र सोमाकृतिः सोमा, नाम दृष्टा प्रवर्तिनी । यतिनीभिर्युता तारानुकाराभिस्तपोरुचा ॥२१॥ प्रावृताङ्गी पटेनोच्चैः, शुभ्रेण शरदभ्रवत् । मनसः सर्वतः शुक्लध्यानेनेव प्रसर्पता ॥२२॥ [युग्मम्] नत्वा भगवतीमेतां, पुष्पवृष्टिं विधाय च । धूपमुत्क्षिप्य चिद्रूपस्ततो भूपः पदोर्नतः ॥२३॥ निविष्टो भूतले धर्मकथा च प्रस्तुता तया । दानशीलतपोभावभेदरूपप्रकाशिका ॥२४॥ अत्रान्तरेऽत्र सस्त्रीकौ, समायातौ ससंमदौ । सार्थवाहसुतौ बन्धुदेवसागरनामकौ ॥२५॥ नत्वा भगवतीं प्राह, सागरो नृपतिं प्रति । कार्यः खेदः कथाच्छेदप्रभवो देव! न त्वया ॥२६॥ अत्यद्भुतमसंभाव्यं, दृष्टं वस्तु मया विभो! । विस्मितोऽज्ञाततत्त्वः, स्थातुं तत्पारयामि न ॥२७॥ राज्ञा किं तदिति प्रोक्ते, स प्राहाऽऽकर्णय प्रभो! । मदीयपत्नीहारस्य, प्रनष्टस्य व्यतीयिवान् ॥२८॥ वहुः कालस्ततः सैष, मनसोऽपि हि विस्मृतः । अद्य भुक्तोत्तरं यावच्चित्रशालां गतोऽस्म्यहम् ॥२९॥ तावच्चित्रगतः केक्युच्छ्वस्योन्नम्य च कन्धराम् । विधूय पक्षौ विस्तार्य, बर्हानवततार सः ॥३०॥ कौसुम्भवसनच्छन्नपटल्यां[3] च विमुच्य तम् । हारं ययौ निजस्थानं, तथारूपः पुनः स्थितः ॥३१॥ [कलापकम्] विस्मितोऽहमिह श्रुत्वा, जातं जयजयारवम् । मत्वा केवलमुत्पन्नं, भगवत्याः समागतः ॥३२॥ अत्यद्भुतमसम्भाव्यं, सत्येन भगवत्यदः । किमिति क्ष्मापतिप्रोक्ते बभाषे भगवत्यथ ॥३३॥ सौम्य! नात्यद्भुतं नैवाऽसम्भाव्यं चास्ति कर्मणः । अशुभेऽत्र जलं वह्नि-

---

१ उपाश्रयम्। २ वितर्दिक० चतुरस्रवेदिका। ३ पटली० करण्डिका।

श्चन्द्रो ध्वान्तं नयोऽनयः ॥ ३४॥ अर्थोऽनर्थः सुहृद्वैरी, पविः पतति च क्षणात् । शुभे त्वत्र पुनः सर्वं, विपरीतमिदं भवेत् ॥ ३५॥ [युग्मम्] राज्ञोचे कस्य जीवस्य, कर्मेदृक्परिणामकृत्? । तया प्रोचे ममैवेदं, कर्म खेदं ददौ बहुम् ॥ ३६॥ प्रोवाचाऽमरसेनोऽथ, रसेनोज्झितकण्टकः । कथं वा? किंनिमित्तं वा?, तत्कर्मेत्यथ सा जगौ ॥ ३७॥ इहैव भारते शङ्खवर्धनं नामतः पुरम् । शङ्खोज्ज्वलयशास्तत्र, शङ्खपालः क्षमापतिः ॥ ३८॥ तत्रेभ्योऽस्ति धनो धन्याजानिर्धनपतिः सुतः । आढ्यो धनावहश्चान्यो, गुणश्रीश्चाहमात्मजा ॥ ३९॥ विवोढा न्यूढमात्रायां, मयि यातो यमालयम् । निर्वेदेन रता धर्मे, विशेषेण तपोमये ॥ ४०॥ अन्यदा चन्द्रकान्ताख्या, गणिनी गुणिनीतमा । समागता ममाऽऽख्याता, सखीभिः ख्यातसंयमा ॥ ४१॥ तां नन्तुं गतया चैत्ये, ससख्या सा मयेक्षिता । श्राविकाणां पुरो धर्मं, कथयन्ती यथातथम् ॥ ४२॥ विस्मिताऽहं च तां दृष्ट्वा, प्रविष्टा जिनमन्दिरे । चालयित्वा ततो घण्टां, चक्रे दीपकमालिकाम् ॥ ४३॥ मुक्त्वा कुसुमवृष्टिं चाऽर्चिताः सर्वज्ञमूर्तयः । ततश्च धूपमुत्क्षिप्य, वन्दिताः परमेष्ठिनः ॥ ४४॥ गणिन्यथ नताऽऽगत्य, तयाऽहं धर्मलाभिता । उपविष्टाऽथ पृष्टा च, कुतो यूयमिहाऽऽगताः? ॥ ४५॥ इत एव मया प्रोक्ते, सखी मद्वृत्तमाख्यत । गणिन्योचे कृतं साधु, यद्वत्सेऽत्र समागता ॥ ४६॥ भव ईदृश एवात्र, देहिनो दुःखभाजनम् । इत्युक्त्वा कथितो धर्मः, श्रावकाणां मयाऽऽदृतः ॥ ४७॥ कियत्यपि गते काले, पित्रोः पञ्चत्वमीयुषोः । व्रताय भ्रातरौ पृष्टावूचतुर्भक्तिनिर्भरम् ॥ ४८॥ स्थिता गृहस्थधर्मेऽपि, त्वं स्वसः! स्वसमीहितम् । विधेहि धर्ममित्युक्ते, कारितं जिनमन्दिरम् ॥ ४९॥ प्रतिमाः कारिता बह्वयः, पूजायां च महाव्ययम् । कुर्वन्त्यां मयि खिद्येते, भ्रातृजाये निरन्तरम् ॥ ५०॥ मयाऽचिन्ति किमेताभ्यां?, प्रेक्षे सोदरयोर्मनः ।

यदि तावपि न स्थाने, स्थाने तन्मे प्रतक्रिया ॥५१॥ अन्यदा याममात्रायां, यामिन्यामागतेऽग्रजे । स शृणोति यथा प्रोचे, भ्रातृजाया तथा मया॥ ५२॥ धर्मोपदेशव्याजेन, मायाबहुलया हृदि । किं सुन्दरि! बहूक्तेन?, रक्षितव्यैव साटिका ॥५३॥ [ युग्मम् ] एवमेतदिति प्रोच्य, साऽविशद्वासवेश्मनि । तद्भर्त्रा चिन्तितं नूनमसत्यैषा किमन्यथा ॥५४॥ एवं जल्पति मे जामिर्मम तत्कृतमेतया । ध्यात्वेति कैतवात्सुप्त, उपविष्टा च साऽन्तिके ॥५५॥ तदीयपादौ संवाह्य, दीपमुत्क्षिप्य पाणिना । ताम्बूलं पटलाल्लात्वा, शयाना तेन वारिता ॥५६॥ सा दध्यौ हन्त! नर्म स्यादिति सुप्ता स उत्थितः । ततस्तं कुपितं मत्वा, संक्षुब्धा प्राह किं न्वदः? ॥५७॥ स प्राह नाऽपरं किंचित्किं तु निस्सर मे गृहात्। ध्यायन्ती दुष्कृतं शय्यामुत्सृज्याऽजनि दूरतः ॥५८॥ ततः स शयितश्चिन्ताप्रान्ते निद्रामुपागतः । इतराऽप्युपविष्टा स्वं, दोषं कमपि नास्मरत् ॥५९॥ दध्यौ च को गुणोऽनेन, भर्तुरप्यार्तिकारिणा । जीवितेन? त्यजाम्येतदथवा दुर्जनो जनः ॥६०॥ इत्थमप्यार्यपुत्रस्य, लाघवं सम्प्रदास्यति । इदं च दुःसहं दुःखं, न जाने किं ममोचितम्?॥ ६१॥ यद्वा सद्भाविनी बुद्धियुक्ता च मम नन्दिनी । तत्तां पृष्ट्वा यथायुक्तं, कुर्वे निरचिनोदिति ॥६२॥ रुदती सुदती सर्वां, रजनीमजनीदृशी । परिम्लानमुखाम्भोजा, यथा सेति न लक्ष्यते ॥६३॥ नारीणां दिनकृद्धेतुः, स्नेह एव हि नेतरः । तेन तेन विना जज्ञे, मन्ये म्लानमुखाम्बुजा ॥६४॥ सा प्रातर्निर्गता वासगृहाद् दृष्ट्वा मयोदिता। अल्पाम्बुविसिनीवत्त्वं, किं शुष्का दृश्यसे ननु? ॥६५॥ सा प्राह रुदती नाहमागो वेद्मि बभाण तु । भर्ता निस्सर मद्गेहाद्गलिष्येऽहं मयोदिता ॥६६॥ प्रतिश्रुते तया भ्राता, मयोचेऽदः किमीदृशम्? । स प्राह स्त्री हि दुःशीला, विनाशयति सन्ततिम् ॥६७॥ कुलं मलिनयत्युच्चैर्विधत्ते वचनीय-

ताम् । दयितं हन्त्यलं तस्मादनयाऽपनयाऽऽत्मना ॥ ६८ ॥ [युग्मम्] मयोचे त्वं कथं वेत्सि?, स प्राह ज्ञेयमत्र किम्?। श्रुता हि देशनाद्वारा, वारयन्ती भवत्यमूम् ॥ ६९ ॥ मयोचे तव पाण्डित्यमहो! ते सुविचारता। अहो! अहो! महार्थत्वमहो! स्नेहानुवन्धिता ॥ ७० ॥ वहुदोपं जिनप्रोक्तमिदमस्या निवेदितम्। न तु दोष मया वीक्ष्य, वारिता तत्कुतोऽसती? ॥ ७१ ॥ [युग्मम्] सत्रपः सोऽपि जातानुतापस्तां वह्नमानयत्। ध्यातं मयाऽथ भ्राताऽयं, श्वेतं कृष्णं प्रपद्यते ॥ ७२ ॥ वीक्षितश्च द्वितीयोऽपि, तज्जार्याहस्तरक्षणे। प्रोक्तं सर्वं च पाश्चात्यं, तथैव हि यथाऽग्रजे ॥ ७३ ॥ तदा मयाऽऽलदानेन, तीव्रं कर्म न्यवध्यत। कालेनाऽहं मृतं त्वादौ, भ्रातृभ्रातृजनीयुता ॥ ७४ ॥ दिवं गतानि सर्वाणि, मम प्राग्भ्रातरौ च्युतौ। अत्रैव पुण्यदत्तेभ्यसम्भ्रातनयतां गतौ ॥ ७५ ॥ वन्धुदेवः सागरश्च, तयोर्नाम प्रतिष्ठितम्। वृद्धौ चैकालवालस्थवालशालसमाविमौ ॥ ७६ ॥ च्युता गजपुरेऽहं तु, शङ्खेभ्यस्य सुताऽभवम्। शुभङ्करायां भार्यायां, नाम्ना सर्वाङ्गसुन्दरी ॥ ७७ ॥ प्रजावत्यावपि च्युत्वा, नगरे कोशलापुरे। जज्ञाते देविलापत्न्यां, नन्दिलेभ्यस्य नन्दने ॥ ७८ ॥ एका कान्तिमती नाम्ना, द्वितीया श्रीमतीति च। मिथः प्रीतियुते ते च, विवर्धेते लते इव ॥ ७९ ॥ मया श्राद्धकुलोत्पत्त्या, लेभे धर्मो जिनोदितः। पुष्पचापनृपक्रीडावनं प्रापे च यौवनम् ॥ ८० ॥ इतो गजपुरायातो, वन्धुदेवो वणिज्यया। लीलोद्यानाद्गृहं यान्तीं, मामैक्षत सखीवृताम् ॥ ८१ ॥ पृष्टे च कस्य कन्येयं, शङ्खस्याऽऽख्यत कश्चन। याचितायां च मे तातोऽवोचत्साधर्मिकोऽसि न ॥ ८२ ॥ वन्धुदेवोऽवदत्साधर्मिकं कुरुत मां ततः। तातः प्राहाऽऽर्हतं धर्मं, प्रतिपद्यस्व भावतः ॥ ८३ ॥ सोऽथ सलोभतः

१ भ्रातृजाये।

साधुसमीपे सम्रणोऽशृणोत् । जिनधर्मं निकृत्या तं, प्रशशंस न भावतः ॥८४॥ प्रारब्धं चैत्यनत्यादि, दानाद्यं च प्रवर्तितम् । कियत्यपि गते काले, गतस्तातान्तिके पुनः ॥८५॥ अभाषत च धन्योऽस्मि, येन त्वदुपदेशतः । लब्धो मयाऽऽर्हतो धर्मस्तत्त्वं मे देवता गुरुः ॥८६॥ अल्पं प्रयोजनं कन्या, ज्ञाततत्त्वस्य मेऽधुना । यास्याम्यहं निजं देशमादेशोऽस्तु ततो मम ॥८७॥ स्थिरीकार्यः सदा धर्मे, समादेश्यं यथोचितम् । द्रष्टव्यो निजवुद्ध्या चेत्युदित्वा न्यपतत्पदोः ॥८८॥ [ विशेषकम् ] तातस्तं वहुमानेन, प्राह धन्योऽसि सुन्दर! । अप्रमादवता भाव्यं, धर्मरत्नेऽत्र दुर्लभे ॥८९॥ इत्यङ्गीकृत्य चैतस्मिन्. गते तातो निजैः सह । अमन्त्रयदयं पुत्र्या वरः समुचितो वरः ॥९०॥ तैरप्येवमिति प्रोक्ते, दत्ताऽस्याऽनिच्छतोऽपि हि । वृत्तो विवाहः कर्तव्यं, समस्तमुचितं कृतम् ॥९१॥ दिनैः कतिपयैस्तातमनुज्ञाप्य ममागतः । निजं देशमसौ कालः, कियानपि गतस्ततः ॥९२॥ आगतोऽथाऽऽनिर्नोपुमां, प्राविशत्तातमन्दिरे । स्ववैभवानुमानेन, तातश्च तमुपाचरत् ॥९३॥ अतीतेऽथ दिने सज्जं, विदधे वासमन्दिरम् । शय्या च प्रस्तुता रम्या, कृता मङ्गलदीपकाः ॥९४॥ पुष्पमालाः समुत्क्षिप्ताः, प्रदत्ता धूपवर्तयः । सर्वोपकरणाकीर्णपटलं च पुरस्कृतम् ॥९५॥ तदा प्रथमवर्द्धं मे, कर्माभ्युदयमागतम् । कर्मणोऽचिन्त्यमाहात्म्यात्, क्षेत्रपालोऽत्र चाऽऽययौ ॥९६॥ वधूवरमयं वीक्ष्य, दध्यौ यद्वञ्चयाम्यमुम् । बन्धुदेव यथा न स्यादनयोः सङ्गमः पुनः ॥९७॥ ध्यात्वेत्यत्र गवाक्षस्थनररूपेण सोऽवदत् । सर्वाङ्गसुन्दरी काऽद्य ?, तं पृष्ट्वेति तिरोदधे ॥९८॥ विकल्पोऽस्य ततो जज्ञे, गता दूरे विचारणा । कषायैर्बाधितो वाढं, बभूव हृदयेऽरतिः ॥९९॥

१ वराक. । २ मायया । ३ सर्वाङ्गसुन्दरीजनकसमीपे ।

दध्यौ च मे महेलाऽसौ, दुःशीला कथमन्यथा । आलोक्येति च जल्पित्वा, गतः कश्चन मानवः ॥१००॥ स्नेहो विगलितश्चित्तादथाहं वासमन्दिरे । आगता विहितं तेन, निद्राविद्राणकैतवम् ॥१०१॥ स्वपिहि स्वामिनीत्युक्त्वा, सख्यो मम विनिर्गताः । दत्त्वा द्वारमुपाविक्षं शय्याप्रान्ते कथञ्चन ॥१०२॥ उत्थितो बन्धुदेवोऽथ, मया दध्ये ससाध्वसम् । किमेतदिति नो पृष्टो, मया शय्यान्तरे गतः ॥१०३॥ कथञ्चिदपि तस्याऽथ, निद्रागच्छद्विकल्पिनः । प्राप्ताऽहं तु महाशोकमुपविष्टा महीतले ॥१०४॥ गता मे रजनी दुःखान्नारकस्येव जीवितम् । सख्यः समाययुर्मेऽथ, बन्धुदेवो विनिर्ययौ ॥१०५॥ अस्थानस्थां च मां प्रोचुः, सख्यः स्वामिनि ! किं न्वदः ? । मया शोकादकथ्यत्वात्कार्यस्य च न जल्पितम् ॥१०६॥ सनिर्बन्धं पुनः पृष्टे, ताभिरूचे मया हलाः ! । मम पृच्छत भाग्यानि, वृत्तमाख्यं ततो निशः ॥१०७॥ दध्युस्ता नैहिको दोषः, स्वामिन्याः कोप्यसौ न च । सार्थवाहसुतोऽविज्ञस्तत्कर्मैव पुरातनम् ॥ १०८ ॥ तदाऽनापृच्छ्य तातादीन्, बन्धुदेवो विनिर्गतः । आख्याय सूरिलाख्यस्य, नरस्य स्वां पुरीं ययौ ॥ १०९ ॥ पितरौ बन्धुदेवाय, कुपितौ स्नेहलौ मयि । व्यवहारोऽखिलो भग्नः, कालः कोपि व्यतीयिवान् ॥११०॥ दध्ये मयाऽन्यदा हन्त !, सैष दुःखमयो भवः । तन्मेऽलं गृहवासेन, गृह्णामि व्रतमञ्जसा ॥१११॥ तदा यशोमतिर्नाम, समायाता प्रवर्तिनी । पित्रोर्निवेद्य स्वाकूतं, विधिना व्रतमाददे ॥११२॥ इतश्च बन्धुदेवेन, कोशलापुरमीयुषा । उदूढा श्रीमती कान्तिमती चाऽस्य कनीयसा ॥११३॥ तज्जातप्रीति चम्पायां, दम्पतिद्वयमागतम् । गृहवासः प्ररूढश्च, विश्रम्भजनको मिथः ॥११४॥ अथाऽहमपि चम्पायां, प्रवर्तिन्या सहाऽऽगमम् । प्रविष्टा गोचरे याता, बन्धुदेवस्य मन्दिरे ॥११५॥ दृष्टा च श्रीमतीकान्तिमतीभ्यां ते ममोपरि ।

प्राग्भवाभ्यासतः प्रीते, प्रत्यलाभयतां च माम् ॥ ११६॥ तयोरागतयोर्धर्मः, ख्यातः परिणतश्च सः। श्राविकात्वे च सञ्जाते, ताभ्यामुक्ताऽस्मि सादरम् ॥ ११७॥ कार्यः प्रसादो गेहस्याऽऽगमनेन यथाऽऽवयोः। बोधः परिजनोऽप्येति, गुर्वनुज्ञावशात्ततः ॥ ११८॥ नित्यं गन्तुं समारब्धा, तदा मायानिबन्धनम्। प्राच्यं ममोदितं कर्म, हस्तरक्षं यदीरितम् ॥ ११९॥ तयोर्भक्तिमसामान्यां, भवनव्यन्तरो मयि। वीक्ष्य दध्यौ परीक्षेऽहमिमे हारापहारतः ॥ १२०॥ कान्तिमत्यन्यदा हारं, प्रोयमाणा मयैक्ष्यत। गतया वेश्म कौसुम्भसिक्छन्नपटलीस्थितम् ॥ १२१॥ अथाऽभ्युत्थाय मां नत्वाऽऽसनान्युपनिनाय सा। ससाध्वीका निविष्टाऽहं, विदधे धर्मदेशनाम् ॥ १२२॥ चलितायां मयि प्राह, साऽऽर्येऽद्य तव पारणम्। इदं लाभनकं प्रासु, तद् ग्राहय समागतम् ॥ १२३॥ गृह्णीतेति मया प्रोक्ताः, साध्व्यः कान्तिमतीयुताः। निर्ययुर्व्यन्तरस्याऽथ, प्रयोगाच्चित्रगः शिखी ॥ १२४॥ हारं गृहीत्वा प्रक्षिप्य, कुक्षौ स्थाने निजे स्थितः। दध्यावहं महच्चित्रं, प्रक्ष्याम्यथ महत्तराम् ॥ १२५॥ [युग्मम्] संक्षुब्धा हृदये वासगृहाच्चाऽहं विनिर्गता। कान्तिमत्यागता साध्वीसहिताऽथ वयं गताः ॥ १२६॥ प्रविष्टा कान्तिमत्यन्तरदृष्ट्वा हारमाह च। निजं परिजनं तेन, प्रोचे साध्वीं निरूपय ॥ १२७॥ नाऽन्यः कोऽपि प्रविष्टो यत्तमथ प्राह सा क्रुधा। किं वक्तेदमसंबद्धं ?, समस्वर्णोपला हि सा ॥ १२८॥ तल्लोके ख्यातमाख्यातं प्रवर्तिन्यै मयाऽपि च। सा प्राह वत्सेऽसंभाव्यं, किञ्चिन्नास्त्यस्य कर्मणः ॥ १२९॥ तपः कुरु ततस्तीव्रं, न गम्यं तत्र मन्दिरे। अन्यच्चैतत्प्रयत्नेन, रक्ष्यं शासनलाघवम् ॥ १३०॥ जाते शासनमालिन्ये, धर्मबुद्धिः प्रहीयते। जनो विपरिणामं च, भजते नव्यधर्मधीः ॥ १३१॥ ततः परमगुर्वाज्ञाभङ्गाद् बोधिं निहन्त्ययम्। ततो भ्रमति संसारं, दीर्घं शासनलाघवात् ॥ १३२॥ तपो मयाऽथ प्रारब्धं,

त्यक्ता तत्र गृहे गतिः । दध्रे परिजनः शङ्कां, श्राविके तु न शङ्किते ॥ १३३ ॥ ताभ्यामचिन्ति चाऽऽर्योऽत्र नैति सङ्कटश-
ङ्कया । इहलोकवितृष्णानां, किं कार्यं परवेश्मना ? ॥ १३४ ॥ असद्धर्मानुरागानुबन्धेनैवाऽऽगमत्पुरा । तदावां तत्र यास्या-
वस्तत्राऽऽयातस्ततश्च ते ॥ १३५ ॥ आरूढक्षपकश्रेणेर्मम जज्ञे च केवलम् । शिखिना व्यन्तरो हारं, कर्माभावादमोचयत्
॥ १३६ ॥ तदेवं मे महाराज ! परिणामोऽस्य कर्मणः । गुरौ विपाकेऽल्पस्याऽपि, कर्मणो विस्मिता सभा ॥ १३७ ॥ नरेन्द्र-
बन्धुदेवाभ्यामुक्तं भगवति ! त्वया । सोढं दुःखं महत्साऽऽह, किं दुःखं सौम्य ! नन्विदम् ? ॥ १३८ ॥ चतुर्गतिमये ह्यत्र,
भ्रमतां भविनां भवे । दुःखानां कः कठोराणां, कर्तुं संख्यामपि क्षमः ? ॥ १३९ ॥ तिर्यग्नरकदुःखं तु, दूरे नरभवेऽपि
हि । यद्दुःखं गर्भवासे स्यात्ततस्यैव हि सन्निभम् ॥ १४० ॥ ततो जन्मजरामृत्युरोगशोकवियोगजैः । चिन्तासन्तापसञ्जातै-
र्दुःखैः कैः कैर्न विद्रुताः ? ॥ १४१ ॥ यद्ग्राम्यधर्मजं सौख्यं, पामाकण्डूयनोपमम् । विरामविरसेनाऽहो !, जनस्तेन विमो-
ह्यते ॥ १४२ ॥ तस्माद्भोगान्परित्यज्य, निरवद्यसुखावहम् । धर्मं भजत भो भव्या !, भावतो जिनभाषितम् ॥ १४३ ॥
सविघ्ना च सभा राजबन्धुदेवौ व्रतोद्यतौ । ऊचतुर्भगवत्यस्ति, जिघृक्षा नौ जिनव्रते ॥ १४४ ॥ प्रतिबन्धं कृथाथां मा,
तयेत्युक्ताविमौ मुदा । दापयित्वा महादानान्यर्चयित्वा जिनावलीः ॥ १४५ ॥ संमान्य प्रणयिव्रातमभिनन्द्य पुरीजनम् ।
दत्त्वा च हरिषेणस्य, राज्यं निजयवीयसः ॥ १४६ ॥ नृपतिर्बन्धुदेवेन, प्रधानैश्च निजैः सह । पुरुषेन्द्रगणेः पार्श्वे, प्रव्रज्यां
प्रतिपन्नवान् ॥ १४७ ॥ [ विशेषकम् ] न्ययोजयद्धिषेणोऽथ, सेनघाताय घातकान् । अयं न च्छलितोऽमीभिः, सावधानः
स्वभावतः ॥ १४८ ॥ अन्यदाऽस्तमितप्राये, रवावुद्यानपादपान् । अकालपुष्पितानीक्षाम्बभूव वनपालकः ॥ १४९ ॥ आ-

ख्यश्च मन्त्रिणस्तेन, प्रेषितास्तन्निरूपकाः । तेषां च वीक्षमाणानां, क्षणात्प्रकृतिमागताः ॥ १५० ॥ एवं निवेदितेऽभ्येत्य, तैरमात्यो व्यचिन्तयत् । कस्याऽपि गणकस्येदं, कथ्यते तथ्यवेदिनः ॥ १५१ ॥ तदा तत्राऽऽम्रहुण्डाख्यः, सिद्धपुत्रः समागतः । आकर्णितः समाहूय, विजनेऽप्रच्छि मन्त्रिणा ॥ १५२ ॥ किंविपाकोऽयमुत्पातः?, सिद्धपुत्रस्ततोऽवदत् । शास्त्रे राज्यपरावर्तविपाकोऽयं निवेदितः ॥ १५३ ॥ फलदश्चिरकालेन, क्षीणवेलतया च सः । स्तोककालं च दृष्टत्वाच्चिरकालस्थितिर्न सः ॥ १५४ ॥ अमात्यः प्राह कोप्यत्र, किमुपायोऽस्ति? सोऽवदत् । पूजनं गुरुदेवानां, दीनानाथानुकम्पनम् ॥ १५५ ॥ तदा द्वाःस्थः समेत्योचे, राजा त्वामादिशत्यदः । शीघ्रमेव समागम्यं, तथेत्युक्तं च मन्त्रिणा ॥ १५६ ॥ मन्त्री नैमित्तिकं प्राह, किमाकारणकारणम्?। ततो नैमित्तिकः प्राह, संक्षेपात्तावदीदृशम् ॥ १५७ ॥ एतो राजपुमान् राजपुरस्वामिसकाशतः । स चाऽऽनन्दकरो राज्ञस्तन्निमित्तो हवस्तव ॥ १५८ ॥ मन्त्री प्राह कथं हर्षहेतुः? स प्राह तत्पठ । किञ्चित्ततोऽपठन्मन्त्री, वरो जीयाज्जयश्रियः ॥ १५९ ॥ ततो नैमित्तिकः प्राह, स हि सोमः समागतः । दातुं कुमारयोः कन्यां, हर्षः सम्बन्धभूस्ततः ॥ १६० ॥ अन्यच्च लग्नमीदृक्षं, यः कन्यां परिणेष्यति । विपन्नमप्यदो राज्यं, स हि निर्वाहयिष्यति ॥ १६१ ॥ तुष्टो मन्त्र्यथ दैवज्ञमर्चित्वा शान्तिकर्मणि । समादिश्य नियुक्तांश्च, ययौ राजकुले स्वयम् ॥ १६२ ॥ अभ्युत्थायाऽथ राज्ञाऽस्मै, योग्यं दापितमासनम् । निविष्टं तत्र चाऽऽमात्यं, हरिषेणनृपोऽवदत् ॥ १६३ ॥ आर्य! राजपुरेशेन, प्रेषितः शङ्खभूभुजा । अयमाह नृपस्योक्तं, नाम्ना शान्तिमती सुता ॥ १६४ ॥ जीविताभ्यधिका सा मे, मध्ये सेनविषेणयोः । यस्ते बहुमतस्तस्मै, मयेयं प्रतिपादिता ॥ १६५ ॥ [ युग्मम् ] अमात्यः प्राह योग्योऽयं, संबन्धः क्रियतामिदम् । राज्ञोक्तं त्वं प्रमाणं

मे, कार्येष्वार्येतरेष्वपि ॥ १६६ ॥ मन्त्र्युवाचाऽऽदिशत्वार्यः, कमप्येकं कुमारयोः । राजा प्रोवाच सेनस्य, प्रथमाऽस्तु गृहिण्यसौ ॥ १६७ ॥ मन्त्र्याह चार्विदं देव!, तत्सर्वत्र प्रकाशये । नृपः प्रोचे यदुचितं, स्वयमार्यः करोतु तत् ॥ १६८ ॥ ततः प्रकाश्य सर्वत्र, वर्धापनमकार्यत । नदन्मङ्गलवादित्रं, नृत्तमन्तःपुरीजनैः ॥ १६९ ॥ अनेन च प्रमोदेन, विषेणो व्यथितोऽधिकम् । दध्यौ चाऽस्मि क्षमः श्रोतुं, नेदृक्किं पुनरीक्षितुम्? ॥ १७० ॥ दिनैः कतिपयैः सेनकुमारेऽमात्यसंयुतः । ययौ राजपुरे राजा, शङ्खराजस्तुतोष च ॥ १७१ ॥ वर्धापकानां दत्त्वैष, पारितोषिकमादिशत् । वन्दमोक्षमहादानहट्टशोभादिषु स्वकान् ॥ १७२ ॥ ततः करेणुमारूढो, नृपस्तमभियातवान् । दृष्टः सेनश्च रत्युत्कविष्वक्सेनसुतोपमः ॥ १७३ ॥ ततो नृपः कुमारेण, स नृपेणाऽभिनन्दितः । प्रवेशितो विभूत्या च, जन्यावासो ददे वरः ॥ १७४ ॥ ततो लग्नदिने स्नातानुलिप्ताङ्गः श्रितो द्विपम् । समग्रतूर्यनिर्घोषैर्दिशो बधिरतां नयन् ॥ १७५ ॥ स्थानस्थानकसञ्जायमानप्रेक्षणकक्षणः । महता गजयूथेनाऽऽगमद्वीवाहमण्डपम् ॥ १७६ ॥ [ युग्मम् ] विहितोचितकर्तव्यः, प्रहितः कौतुकौकसि । दृष्टाऽनेन वधूः पुष्पवस्त्राभरणभूषिता ॥ १७७ ॥ तामिन्दुवदनां प्रेक्ष्य, वृद्धोऽस्य प्रेमसागरः । दृक् चकोरयुगं जातं, तत्कान्तिं पातुमुन्मुखम् ॥ १७८ ॥ कृतानि कौतुकान्युच्चैः, पूजिता गुरुदेवताः । जातो हस्तग्रहः सन्मानिताः सामन्तमन्त्रिणः ॥ १७९ ॥ पौराश्चानन्दिताः सन्तोषितं तर्कुकमण्डलम्[1] । भ्रान्तानि मङ्गलान्येवं, वृत्तः परिणयोत्सवः ॥ १८० ॥ ततः स्वर्गसुखप्रायं, तस्याऽनुभवतः सुखम् । दिनैः कतिपयैर्जज्ञे, प्रेम स्थेमसमन्वितम् ॥ १८१ ॥ अथ सन्मानितो राज्ञाऽमात्यसामन्तपूजितः । बाढमानन्दितः

---

१ याचकमण्डलम् ।

पौरैः, शान्तिमत्या समन्वितः ॥१८२॥ प्राप्तः स्वनगरीं राजा, हरिषेणश्च हर्षितः । मुदितोऽन्तःपुरीवर्गस्तुष्टश्च नगरीजनः ॥१८३॥ वधूविद्युत्वता विश्वं, प्रीणितं मुदिरात्मना । तेन स्वर्णः श्रिया म्लानो, विषेणस्तु यवासकः ॥१८४॥ प्राविशच्च महाभूत्या, प्राणमच्च नराधिपम् । तेनाऽभिनन्दितः प्रापन्निजं धवलमन्दिरम् ॥१८५॥ शान्तिसत्या समं कान्तिमत्या चन्द्रिकयेव सः । निन्ये सुखमयं कालं, नेत्रकैरवचन्द्रमाः ॥१८६॥ अन्यदा मानिनीमानम्लानिकृन्मलयानिलः । प्रावर्तत वसन्तर्तुः, कर्तुमुन्मादिनं जनम् ॥१८७॥ यः प्रसाधितवारस्त्रीजनवत्तिलकोज्ज्वलः । विधत्ते दृष्टमात्रोऽपि, सकामं कामिनां मनः ॥१८८॥ यत्र यान्ति दिना मन्दं, स्मेरपङ्कजलोचनाः । ऋतुश्रीरम्यतालोकविच्छेद इव भीरवः ॥१८९॥ माकन्दामोदतः क्षिप्तो, व्यावृत्तश्चाऽऽगसः स्मृतेः । मानिनीजनमानोऽपि, यत्र दोलाश्रयोऽजनि ॥१९०॥ उचितं बकुलामोदः, पथि पान्थानमूर्च्छयत् । यस्मादासवगण्डूषश्रद्धयाऽजनि तज्जनिः ॥१९१॥ निरीक्ष्य पुष्पितांश्चूतान्मालितानलिमालया । अङ्कोटाः स्फुटितास्तेषु, मत्सरच्छुरिता इव ॥१९२॥ कलकोकिलसङ्गीते, नदद्भ्रमरमस्करे । वनानि यत्र नृत्यन्ति, पवमानचलैर्दलैः ॥१९३॥ एवंविधे वसन्तर्तौ, स वसन्तसुहृन्निभः । सर्वदा कलितः शान्तिमत्या रत्याभया तया ॥१९४॥ प्रवृत्तो गन्तुमुद्यानं, नामतोऽमरनन्दनम् । क्रीडितुं रम्यनेपथ्यनिजवर्गसमन्वितः ॥१९५॥ वारणः शत्रुशालानां, श्रितानां दौःस्थ्यवारणः । श्वेतवारणमारूढो, विधृतातपवारणः ॥१९६॥ देवाङ्गवस्त्रसर्वाङ्गविभूषणविभूषितः । चन्दनेन विलिप्ताङ्गः, सकिरीटोत्तमाङ्गवान् ॥१९७॥ नृविमानगया युक्तः, प्रियया प्रतिरूपया । दृष्टश्चैष विषेणेन, निर्मिषेणेन शत्रुणा

---

१ विद्युत्पक्षे मेघ । २ वनस्पतिविशेष 'जवासा' इति भाषायाम् । ३ मस्कर० छिद्रयुक्तवंश । ४ पवमान० वायु । ५ देवाङ्ग० देवदुष्य ।

॥१९८॥ [ पञ्चभिः कुलकम् ] प्रध्वनच्चर्चरीतूर्यतौर्यत्रिकयुतं च तम् । गच्छन्तं वीक्ष्य तस्याऽभूदतुच्छो हृदि मत्सरः ॥१९९॥ दध्यौ च प्राच्यकर्मानुभावतो मारयाम्यमुम् । कथञ्चन विचिन्त्यैति, घातकान्स न्ययोजयत् ॥२००॥ प्राप सेनकुमारस्तु, तदुद्यानं मनोरमम् । रतिक्रीडागृहप्रायं, मानसानन्दकारणम् ॥२०१॥ स उत्तीर्य द्विपात्तत्र, प्रविष्टः क्रीडितश्चिरम् । क्रीडाभिर्वासरप्रान्ते, निजावासमथाऽऽसदत् ॥२०२॥ अन्येद्युर्यामयुग्मेऽह्नो, गुप्तासिनलिकाभृतः । एयुस्तापसवेषेण, विषेणादिष्टघातकाः ॥२०३॥ श्रद्धालुश्चतुरोऽप्येष, चतुरस्तानजूहवत् । अपृच्छच्च कुतो यूयं ?, किंनिमित्तमिहागताः ? ॥२०४॥ ते प्रोचुर्गुरुनिर्देशाद्रहो वक्तव्यमस्ति नः । ततो विशुद्धचित्तत्वाद्गृहैलावनमागमत् ॥२०५॥ हृत्वाऽस्य क्षुरिकामेकः, कृष्टरिष्टिरहन्नमुम् । वलितो वामपक्षेण, कुमारस्तानथ प्रति ॥२०६॥ स सात्त्विकावतंसस्तानपातयदिलातले । जग्राह मण्डलाग्रांश्च, किमसाध्यं हि दोष्मताम् ॥२०७॥ उद्यानपालिका तच्च, वीक्ष्य चुक्रोश पुष्कलम् । ततः कलकले जाते, समेता अङ्ग्यामिकाः ॥२०८॥ तान् हन्तुं तान्निकृष्टासीन्कुमार इदमभ्यधात् । द्विधा तपस्विनो ह्येते, विपन्नपुरुषव्रताः ॥२०९॥ सत्यशीलमृतास्तस्मात्कीदृशं मृतमारणम् ? । श्रुत्वेत्यागत्य भूपालो, बन्धयामास घातकान् ॥२१०॥ तानपृच्छच्च के यूयं ?, कस्य ? किं घातकारणम् ? । द्वित्रिः पृष्टा अपि प्रोचुर्न विद्म इति ते यदा ॥२११॥ तदा दूनाः कशाघातैः कातरत्वेन तेऽवदन् । विषेणस्य वयं तेन, कारिताश्चेति साहसम् ॥२१२॥ कुपितेऽत्र नृपे सेनः, प्राह जीवितलोभतः । इमेऽधमा वदन्तीदं, स किमेतद् व्यवस्यति ? ॥२१३॥ गवेषणाद्विषेणस्य, दुर्वृत्ते निश्चिते नृपः । राज्यान्निर्वा-

१ चर्चरी० क्रीडा । २ रिष्टि० खड्ग । ३ रक्षा ।

सनं तस्याऽऽदिशद् घातं च घातिनाम् ॥२१४॥ पतित्वाऽथ पदोः सेनोऽवदन्मा तात! साहसम् । क्रियमाणेऽत्र मेऽवस्था, भाविनी तात! शोककृत् ॥२१५॥ नराणामन्तरं कीदृगिति ध्यात्वा नृपोऽवदत् । यद्येवं वत्स! जानासि, तत्त्वं युक्तं तु न ह्यदः ॥२१६॥ स प्रोच्याऽनुगृहीतोऽस्मि, घातकांस्तानमोचयत् । व्रणं सुस्थं विधायाऽथ, नृपोऽपि सदनं ययौ ॥२१७॥ जनवादेन दुर्वृत्ते, विषेणस्य प्रसृत्वरे । असद्भक्ति जनोऽस्येति, दूनः सेनो मनोन्तरे ॥२१८॥ अथ रूढव्रणे सेने, स्नाते वर्धापनं नृपः । व्यधापयन्महाश्चर्यभूतं सन्तुष्टमानसः ॥२१९॥ इतस्ततः प्रभृत्येवाऽपरिपूर्णमनोरथः । शोकग्रस्त इवाऽनैषीद्विषेणो विमना दिनान् ॥२२०॥ वर्धापनेऽप्यनायाते, तस्मिन्सेनोऽवदन्नृपम् । लगित्वा पादयोस्तस्य, समाकारणहेतवे ॥२२१॥ विषेणेन विषेणेव, किं? तेनेति नृपोदिते । सेनः प्रोवाच तातेदं, मिथ्यावाक्यं परित्यज ॥२२२॥ राज्ञोचे यदि निर्बन्धस्तत्त्वमेव समाहूय । कुमारोऽथ स्वयं तस्याऽऽह्वानायाऽगात्तदालये ॥२२३॥ नव्यवैधव्यनारीवत्तमधोवदनं शुचा । वीक्ष्य सेनश्चिरं दध्यावहो! सत्यमिदं वचः ॥२२४॥ दुःखं सद्गुणनाशे यदसद्दोषोद्भवे तथा । तच्छोषयति पाथोधिं, किं पुनर्मानिनां मनः? ॥२२५॥ उपसृत्याऽथ तं प्राह, किमिदं बालचेष्टितम्? । स प्रोचे पृच्छ मत्पापमथ सेनो जगाद तम् ॥२२६॥ अलं पापेन धन्यो हि, तातपुत्रतया भवान् । तदुत्तिष्ठ यथा तातान्तिकं यावो युतौ मिथः ॥२२७॥ अनिच्छन्तं बलात्सेनस्तं बालवदसज्जयत् । नीत्वा च नृपतेः पार्श्वे, पादयोरप्यपातयत् ॥२२८॥ वर्धापने व्यतीते च, गतः कालः कियानपि । सेनस्य सुखिनोऽन्यस्य, क्लिष्टचित्तत्वदुःखिनः ॥२२९॥ भूपालेऽन्येद्युरुद्यानमागते कौमुदीक्षणे । चच्चरीकलिते पौरलोके तत्र च गच्छति ॥२३०॥ आलानस्तम्भमुन्मूल्य, त्रटिति त्रोटिता-

न्दुकः । मत्तेभः पादपान्भञ्जञ्जनतामभ्यधावत ॥ २३१ ॥ [ युग्मम् ] निरीक्ष्यैतच्च चर्चर्यः, कदर्यस्येव कीर्तयः । प्राणेशुस्तुमुलो जज्ञे, त्वयशःपटहोपमः ॥ २३२ ॥ नृपोऽभाषत भो! लोकमारणं लात वारणम् । आदेशानन्तरं सेनस्तमिभं प्रत्यधावत ॥ २३३ ॥ तद्वीक्ष्याऽगण्यतत्पुण्यमन्त्रसंस्तम्भितो द्विपः । जज्ञे गतमदस्तेन, पौरलोको विसिष्मिये ॥ २३४ ॥ नृपस्तुष्टः कुमारोऽथ, समारोहन्मतङ्गजम् । बद्धासनः सृणिं लात्वाऽऽस्फालयामास कुम्भयोः ॥ २३५ ॥ जज्ञे जयजयारावः, स्फूर्जत्तूर्यरवैर्युतः । तदाकर्ण्य विषण्णोऽथ, विषेणो ह्यचिन्तयत् ॥ २३६ ॥ श्रोतुमप्यस्य नेदृक्षं, क्षमः किं पुनरीक्षितुम्? । ततः स्वयं विहन्म्येनं, पश्चाद्राज्यं भवत्वलम् ॥ २३७ ॥ अन्येद्युः सप्रिये सेने, बहिरुद्यानमागते । दिने परिणतप्राये, हरिषेणनृपाङ्गजः ॥ २३८ ॥ स्वस्य सेनकुमारस्याऽपि च शक्तिमचिन्तयन् । बद्धबुद्धिर्वधे तस्य, तदुद्यानमुपागमत् ॥ २३९ ॥ [ युग्मम् ] सेनचित्तानुवृत्त्या च, द्वाःस्थेनाप्यनिवारितः । लतागृहे प्रविष्टोऽयं, सेनं सप्रियमैक्षत ॥ २४० ॥ आकृष्टासिममुं वीक्ष्य, दक्षिणाशापतिप्रभम् । रक्ष रक्षाऽऽर्यपुत्रेति जगौ शान्तिमती गिरम् ॥ २४१ ॥ किमेतदिति जल्पंश्चोत्थितः सेनो व्यलोकत । विषेणं तेन दत्तश्च, घातः सेनेन वञ्चितः ॥ २४२ ॥ सेनेनाऽथ भुजं रुद्ध्वा, निस्त्रिंशेऽपहृते सति । निस्त्रिंशः सोऽथ निस्त्रिंशपुत्रिकां स्वकरेऽकरोत् ॥ २४३ ॥ सेनोऽस्य वालयित्वा दोस्तामप्यपजहार च । विषेणः पतितः पृथ्व्यां, बाहावलनपीडया ॥ २४४ ॥ स तूत्थाप्य कुमारेण, शयनीये निवेश्य च । पृष्टोऽनुक्त्वा निर्जगाम, दीनवक्रो लतागृहात् ॥ २४५ ॥ शान्तिमत्याह किमिदं?, कुमारः प्राह सुन्दरि! । इदं जानामि राज्यार्थे, केनचिद्विप्रतारितः ॥ २४६ ॥ अलं तदत्र वासे-

१ भन्दुक० शृङ्खल । २ अङ्कुशम् । ३ दक्षिणाशापति० यम ।

नाऽनुजस्योद्वेगकारिणा । एनं निर्वासयत्येव, तातो वेत्ति यदीदृशम् ॥ २४७॥ ततोऽम्बा शोकमाप्नोति, लाघवं च कुले भवेत् । एष कापुरुषत्वाच्च, गतोऽन्यत्र न जीवति ॥ २४८॥ परार्थकरणं चाऽस्य, रक्षणं च सतां व्रतम् । स्थातव्ये द्वय-मप्येतदन्यथैव तु जायते ॥ २४९॥ तस्मादकथयित्वैव, गुरोः परिजनस्य च । इत एव हि निर्यावो, वनादनवनाङ्गतौ ॥ २५०॥ [ पञ्चभिः कुलकम् ] प्रमाणमार्यपुत्रोऽत्र, शान्तिमत्येति भाषिते । ऊचे परिजनं रात्रावत्राद्यैव स्थिता वयम् ॥ २५१॥ अथ सज्जीकृते वासवेश्मन्युद्यानमध्यगे । शिरो मे दुष्यतीत्युक्त्वा, विसृष्टे च परिच्छदे ॥ २५२॥ कियत्यामपि वेलायां, सुप्ते परिजनेऽखिले । तमिस्रायां समुत्थाप्य, सेनः शान्तिमतीं जगौ ॥ २५३॥ [ युग्मम् ] देशान्तराणि दीर्घाणि, विचित्रा कर्मणां गतिः । क्लेशस्याऽनुचिताऽसि त्वं, तन्न वेद्म्युचितं किमु ? ॥ २५४॥ सोचे कोपि मम क्लेशो, नाऽऽर्यपुत्र! त्वया सह । ततस्तयाऽन्वितः खड्गसख उद्यानतो ययौ ॥२५५॥ चम्पावासाभिधे संनिवेशेऽतीता निशाऽस्य च । उद्गतेऽर्के परिश्रान्तप्रियोऽस्थाच्च वनान्तरे ॥ २५६॥ तत्र राजपुरात्तामलिप्तीं प्रति यियासता । वीक्षितः सानुदेवाख्यसार्थेशेनोपलक्षितः ॥ २५७॥ स सेनमप्यसेनं तं, वीक्ष्य शान्तिमतीयुतम् । कृत्वा विकल्पानस्वल्पान्नत्वा प्रोचे कृताञ्जलिः ॥ २५८॥ तामलिप्तीमहं देव! गन्ता राजपुराश्रयः । सार्थवाहसुतः सानुदेवाख्यः सार्थसंयुतः ॥ २५९॥ अत्रोषितश्च मे सार्थोऽहं त्वाचमनहेतवे । सरः समागमं दृष्टः, कुञ्जश्चैष विदूरतः ॥ २६०॥ अमुं वीक्ष्य प्रमोदो मेऽभूत्कल्याणनिवेदकः । देवस्य स्वामिपुत्र्याश्च, दर्शनं तदभूदिदम् ॥ २६१॥ विपण्णस्तु निरीक्ष्य त्वामियन्मात्रपरिच्छदम् । तन्ममाऽऽख्यातु देवश्चेद-कथ्यं न भवत्यदः ॥२६२॥ तुष्टस्तद्वचसा सेनः, प्रोवाचाऽस्त्यत्र कारणम् । तामलिप्तीं तु यातास्मि, तवाऽऽख्यातास्मि तत्पुनः

॥२६३॥ स प्रसाद इतीरित्वा, प्राह सार्थमलङ्कुरु । अहं देवस्य देव्याश्च, पादानामस्मि किङ्करः ॥२६४॥ कुमारः प्राह तातस्याऽन्वेषकेषु नरेष्वहम् । इहागत्य निवृत्तेष्वग्रतो गन्तुं समुत्सहे ॥२६५॥ सनिर्बन्धमथ प्राह, सानुदेवः कुमार! तत् । स्थास्याम्यहमपि प्रोचे, सेनस्तर्हि भवत्वदः ॥२६६॥ तद्गच्छ त्वं निजं सार्थमिदं वाच्यं न कस्यचित् । नाऽऽगम्यमत्र चेत्युक्त्वा, प्रेषितः सार्थमैच्च सः ॥२६७॥ कियत्यामपि वेलायामश्ववाराः समाययुः । तैः पृष्टाः सार्थिका दृष्टौ, दम्पती क्वचनेदृशौ? ॥२६८॥ न दृष्टाविति तैः प्रोक्ते, मिथस्तुरगिणो जगुः । अदिगेषा ततो राजपुरवर्त्मनि गम्यते ॥२६९॥ निवृत्तेष्वश्ववारेषु, सप्रत्ययनरादसौ । भोज्यमानाय्य ताविभ्यः, प्राणवृत्तिं व्यधापयत् ॥२७०॥ वृत्तेऽह्नि सादिवृत्तान्तं, कथित्वा सार्थमानयत् । समर्प्य वाहनं रम्यं, तयोश्चक्रे प्रयाणकम् ॥२७१॥ उत्प्रयाणे[1] च सर्वत्र, सेनः शान्तिमती च तौ । तस्थतुः सुस्थितौ चेलगृहे[2] गर्भगृहेश्वरी ॥२७२॥ सार्थोऽन्यदा समागच्छदटवीं दन्तरक्तिकाम् । तत्राऽपतर्कितो भिल्लाभ्यवस्कन्दः[3] पपात च ॥२७३॥ ततः सार्थभटैः सार्धं, तस्य प्रववृते रणः । प्रियां संस्थाप्य सेनोऽप्याकृष्टखड्गोऽभ्यधावत ॥२७४॥ मृगा इव मृगारातेर्भिल्लास्त्रेसुः कुमारतः । दिश्यन्यस्यां तु सार्थस्य, सारं लुप्तं किरातकैः ॥२७५॥ भटाः पेतुः स्त्रियो नेशुस्तस्यां दिश्यथ धाविते । सेने श्येन इव क्रुद्धे, नेशुः शबरपक्षिणः ॥२७६॥ पल्लीशो युध्यमानोऽथ, सेनघातेन मूर्च्छितः । वीजितस्तेन सिक्तश्च, दध्यौ सञ्जातचेतनः ॥२७७॥ अयं सत्पुरुषः कोपि, विक्रमी केशरी यथा । मुनिस्तु कृपया शत्रुवर्गेऽप्यकृतशात्रवः ॥२७८॥ तद्देवोऽयमिति ध्यायन्नूचे स नृपसूनुना । विश्वस्तो भव स प्राह, कीदृग्विश्व-

---

१ अधिकप्रयाणे । २ पटगृहे । ३ अभ्यवस्कन्द० धाटी ।

स्तताऽऽर्य! नः? ॥२७९॥ श्रुत्वा च पातितं पल्लीपतिं भिल्ला दधाविरे। निषिद्धास्तेन ते संज्ञां, कृत्वा गोमायुवाशितम्[1]
॥२८०॥ ततः पल्लीपतिर्नत्वा, प्राह मन्तुं क्षमस्व मे। यत्सार्थो लूषितः सेनस्ततो दध्यौ च किं न्विदम्? ॥२८१॥ अथा-
ऽऽघोषणया युद्धं, निषिध्य शबरेश्वरः। ऊचे येन गृहीतं यत्तदानयतु वस्तु सः ॥२८२॥ आनीते वस्तुनि प्राह, सेनं
सर्वं तवाऽभवत्। स प्राह नाहमेतस्य, स्वामी तत्पृच्छ सार्थपम् ॥२८३॥ अन्विष्य स समानीतः, पल्लीशेनेति भाषितः।
अयं नः स्वगुणैः स्वामी, संबन्धी त्वं च सार्थप! ॥२८४॥ तदाख्याह्यत्र किं नास्ति, वस्तु तावकवस्तुनि?। स निरु-
प्याऽऽह सर्वं मे, पूर्यते वां प्रसादतः ॥२८५॥ सन्तं कुमारस्तं मत्वा, घातभञ्जनपूर्वकम्। कटिसूत्रं ददौ तस्मै, प्रसाद
इति सोऽग्रहीत् ॥२८६॥ ततः पतितयोधानां, स विधाय व्रणक्रियाम्। यावत्पल्लीशनिर्बन्धात्पल्लीं याति ससार्थपः॥२८७॥
तावदागत्य सार्थेशसूदः प्राह गतं हहा!!। सर्वसारं यतो नैव, दृश्यते नृपतेः सुता ॥२८८॥ विषण्णे सानुदेवेऽथ, पल्लीशः
प्राह का नु सा?। सार्थेशः प्राह पद्मस्य, पुत्री शङ्खनरेशितुः ॥२८९॥ सूदः पल्लीशपृष्टोऽथ, प्राह जातेऽसमञ्जसे।
आर्यपुत्राऽऽर्यपुत्रेति, जल्पन्त्यभिगताऽटवीम् ॥२९०॥ सार्थेशादेशतोऽहं तामनुयॉल्लकुटाहतः। मूर्च्छान्ते यावता वीक्षे,
तावताऽस्ति न सा क्वचित् ॥२९१॥ ततो हा! देवि! हा! देवि! जल्पन्सेनो विमूर्च्छितः। आश्वास्य भाषितः पल्लीशेन
देव! विषीद मा ॥२९२॥ संप्रत्येव निजैर्देवीमानाय्य तव मेलये। उक्त्वेति शबरान्प्रैषीद्वीक्षितुं परितो वनम् ॥२९३॥
पल्लीशोऽथावदत्सेनं, देवाऽऽलम्बस्व धीरताम्। यथा गवेष्यते देवी, प्रवृत्तौ तौ गवेषितुम् ॥२९४॥ इतश्च चक्रवाकीव,

[1] वाशित० शब्द।

प्रियमन्वेषयन्त्यसौ । राजपुत्री वनेऽपश्यन्न तु कान्तमलोकत ॥ २९५ ॥ निर्विण्णा वासरान्ते सा, पाशमासूत्र्य पादपे । न्यस्तग्रीवा मुमोच स्वं, त्रुटिते पाशकेऽपतत् ॥ २९६ ॥ तां मूर्च्छितामदर्शच्च, कश्चिन्मुनिकुमारकः । कृपया तदुपान्तं स, गतोऽपश्यच्च पाशकम् ॥ २९७ ॥ कमण्डलुजलेनाऽथ, सिक्ता जज्ञे सचेतना । उक्ता च वत्से! मा भैषीरहं मुनिकुमारकः ॥ २९८ ॥ नतस्तया शशासैष, तां पुत्र्यविधवा भव । ऊचे च त्वं किमस्येका?, कस्माच्चैतत्त्वया कृतम्? ॥ २९९ ॥ मुनेः पितुरिवाग्रे साऽऽचख्यौ वृत्तान्तमादितः । रुदती बोधिता तेन, नीता च निजमाश्रमम् ॥ ३०० ॥ नता कुलपतिं तेनाऽऽशीर्वादेनाऽभिनन्दिता । उक्ता पुत्रि! तवाऽत्रैव, भावी प्रियसमागमः ॥ ३०१ ॥ प्रतिश्रुतं तया तस्य, वाक्यं ज्ञानवतो मुनेः । तेनाऽर्पि तापसीनां सा, धात्रीणामिव बालिका ॥ ३०२ ॥ इतश्च तेषां सर्वेषां, पश्यतां दिवसो गतः । सर्वेऽपि मिलिता रात्रौ, विषण्णाः सार्थमाययुः ॥ ३०३ ॥ पल्लीशप्रतिबोधेन, सेनश्चक्रेऽथ भोजनम् । शयितः शयनीयेऽसौ, नातिदूरेऽस्य पल्लिपः ॥ ३०४ ॥ अथ स्थानान्तरायातशबरैः शबरेश्वरः । ऊचे विश्वपुराधीशधाट्यभ्येति तवोपरि ॥ ३०५ ॥ आत्तधन्वा व्रजन्सोऽथ, सानुदेवमवोचत । कुमाराङ्केऽप्रमत्तेन, त्वया भाव्यं पुनः पुनः ॥ ३०६ ॥ उक्त्वेति रिपुसेनायाः, पल्लीशः सन्मुखोऽगमत् । मत्वेति तत्प्रतिग्राहे[1], कुमारोऽप्यनुजग्मिवान् ॥ ३०७ ॥ मिलितश्च कुमारोऽस्य, तयोर्धाट्या समं रणे । भग्ना धाटी समुत्तस्थुरथ ठक्कुरदिक्कराः ॥ ३०८ ॥ तैश्च वाजिव्रजेनैते, शबराः शबराजिवत् । परितो वेष्टिता नष्टचेष्टिता एव तस्थिरे ॥ ३०९ ॥ एकोऽप्यनेकवत्तैस्तु, सेनः पल्लीशसंयुतः । ददृशे दृग्दुरालोको, जलबिम्बितसूर्यवत् ॥ ३१० ॥ तौ धृतौ

१ प्रतिग्राह० युद्ध ।

पातयित्वाऽथ, कुमारसमराद्भुतात् । विस्मितास्ते क एष स्यादिति दध्युश्च ठक्कुराः ॥ ३११ ॥ नीत्वा विश्वपुरे नेश्च नेत्रे समरकेतवे । कुमारवृत्तसंयुक्तं, विज्ञप्तं सर्वमेव तत् ॥ ३१२ ॥ ततो विक्रमबालभ्याद्भूपेन स निरीक्षितः । आकृत्या विस्मितेनैष, निश्चिक्ये च नृपाङ्गजः ॥ ३१३ ॥ पल्लीशस्य वधे राज्ञा, कुमारस्य च पालने । दिष्टे कुमारः प्रोवाच, पूर्वं मामेव घातय ॥ ३१४ ॥ विस्मितस्तद्गिरा प्राह, महीशः को भवानिति ? । कुमारोऽथात्मनः पार्श्वे, निरूपयति यावता ॥ ३१५ ॥ तावता ज्ञातवृत्तान्तो, जनैः कतिपयैर्युतः । सप्राभृतो नृपं द्रष्टुं, सानुदेवः समाययौ ॥ ३१६ ॥ द्वाःस्थेन कथितो राज्ञाऽनुमतः प्राविशच्च सः । अपश्यन्नृपतिं तस्मै, ढौकयामास ढौकनम् ॥ ३१७ ॥ आसने दापिते राज्ञोपविशेति स भाषितः । सेनं वीक्ष्य महारार्तं, मूर्च्छितो न्यपतद्भुवि ॥ ३१८ ॥ राज्ञाऽथ सेचितो वारा[1], वीजितश्चाञ्चलैश्चलैः । समेतचेतनः प्रोचे, किमेतदिति भूभुजा ॥ ३१९ ॥ सानुदेवस्ततः प्राह, सत्यं मुनिवचः खलु । असारोऽयं भवश्चापद्भाजनं चात्र देहिनः ॥ ३२० ॥ चम्पाधिपसुतस्याऽपि, कुमारस्य यदीदृशी । अवस्था सेननाम्नोऽस्य, गुणरत्नमहाम्बुधेः ॥ ३२१ ॥ नाऽन्यथा मद्विकल्पोऽभूद्, ध्यात्वेति नृपतिर्जगौ । अयं कथमरण्येऽत्र, गात्रमात्रकतन्त्रवान्[2] ॥ ३२२ ॥ सार्थेशः प्राह नैवाऽहमपि वेद्मि किमप्यदः । मयाऽपि दृष्टः स्वपुरात्तामलिप्तीं यियासता ॥ ३२३ ॥ चम्पावासनिवेशेऽसौ, जायामात्रपरिच्छदः । तदा राजपुरायातानुस्मृतेश्चोपलक्षितः ॥ ३२४ ॥ इत्यादि प्रार्थनाप्रान्तमाख्यायाऽथ न्यवेदयत् । तद्याऽऽकर्णितं देव !, शबरेभ्यो मयेदृशम् ॥ ३२५ ॥ नीतौ कुमारपल्लीशौ, धात्र्या देवनिदिष्टया । निवेदितुं व्यतिकरमिदं देवमुपागमम् ॥ ३२६ ॥ [ कलाप-

---

१ जलेन । २ वस्त्र० परिवार ।

राज्ञोचे रुचिरं चक्रे, त्वादृशां युज्यते ह्यदः । अथाऽऽदिशन्नृपो भृत्यान्, यत्नः कर्तव्य एतयोः ॥३२७॥ अथ कंक्षा-
कम् ] राज्ञोचे रुचिरं चक्रे, त्वादृशां युज्यते ह्यदः । अथाऽऽदिशन्नृपो भृत्यान्, यत्नः कर्तव्य एतयोः ॥३२७॥ अथ कंक्षा-
न्तरे शय्या, प्रवरा रचिता तयोः । ततो वैद्यान्समाहूय, प्रस्तुतं व्रणकर्म च ॥ ३२८॥ प्रेषिताश्च नरा दिक्षु, राजपुत्री
गवेषितुम् । दिनैः कतिपयैः सानुदेवश्चाहूय भाषितः ॥३२९॥ विषमाध्वनि सार्थस्ते, प्रत्यासन्नो घनागमः । स्थाने च
राजपुत्रोऽस्ति, तद्गच्छ त्वं नृपोदिते ॥३३०॥ स प्राह वहतो नैव, चेरणे चरणे मम । कुमारः प्राह देवस्याऽऽदेशं कुर्वथ
सोऽगमत् ॥३३१॥ सपत्नीशे कुमारेऽथ, स्नाते वर्धापनं व्यधात् । नृपोऽवोचच्च ते वत्स!, किं करोमि प्रियं पुनः?
॥३३२॥ पुरुषाः प्रेषिताः सन्ति, वधूं तव गवेषितुम् । तेषु केपि समायाता, नायान्त्यद्यापि केचन ॥३३३॥ तदा च
सोमसूराख्यः, प्रोचे देव! स्मृतं मया । कुमारस्य प्रियतमासमायोगस्य कारणम् ॥३३४॥ राज्ञा कीदृगिति प्रोक्ते, स
प्राह श्रूयतां प्रभो! । अस्ति कादम्बरीकक्षान्तस्तीर्थं प्रियमेलकम् ॥३३५॥ वदन्ति च तदैतिह्यमटव्यन्तः पुराऽभवत् ।
विशाखवर्धनाभिख्ये, पुरेऽजितबलो नृपः ॥३३६॥ श्रेष्ठी वसुंधरस्तत्र, प्रियमित्रोऽस्य नन्दनः । लब्धा तेनेश्वरस्कन्दन-
न्दना नीलुकाभिधा ॥३३७॥ तयोरन्यूढयोरेव, वसुंधरगृहाद्वसु । गतं कर्मानुभावेन, सोऽथ निर्वेदतो मृतः ॥३३८॥
प्रियमित्रोऽपि दारिद्र्यात्पराभूतः पुरीजनैः । विनिर्गत्योत्तरां गच्छंस्तातमित्रेण वीक्षितः ॥३३९॥ नागदेवाभिधो वीक्ष्य,
स तं पाण्डुरभिक्षुकः । समुपालक्षयद्दौःस्थ्यावेसथं च कथंचन ॥३४०॥ ऊचे वत्स! तवाऽवस्था, किमीदृक्? प्रस्थितः क्व
च? । स प्राह पृच्छ तं दैवं, येनैवं विहितोऽस्म्यहम् ॥३४१॥ तपस्व्यूचे पितुस्तेऽस्ति, क्षेमः स प्राह मत्पितुः । क्षेमः

१ गुप्तवेश्मनि । २ गमने । ३ ऐतिह्यम्–प्राचीनम् । ४ आवसथ० गृह ।

स्वःस्थस्य न तु मे. लोकद्वयवहिर्जुषः ॥ ३४२॥ मुनिः प्राह गतः सोऽस्तं, बन्धुकैरवचन्द्रमाः ? । ही ! कर्मेति भवं हित्वा, मुनयो हि ययुः शिवम् ॥ ३४३ ॥ अन्यच्च त्वं कथं वत्स !, लोकद्वितयवर्जितः । योग्योऽसि परलोकस्य, साधने तं च साधय ॥३४४॥ सोऽथाऽऽख्याय विधिं तेन, दीक्षितः कुरुते व्रतम् । नीलुकाऽपि हि तच्छ्रुत्वा, गृहेऽपि व्रतवत्यभूत् ॥३४५॥ गते काले स चाऽऽयातस्तत्पुरान्ततपोवने । श्रुतो नीलुकया याता, तं नन्तुं पित्रनुज्ञया ॥३४६॥ ध्यानस्थं वीक्ष्य तं साऽथ, संभ्रमान्मूर्च्छिताऽपतत् । जाते परिजनाक्रन्दे, किमिदं ? पृच्छति स्म सः ॥३४७॥ तत्सख्यः प्रोचिरे पुत्रीश्वरस्कन्दस्य नः सखी । नीलुका कन्यसौ दत्ता, तव त्वां वीक्ष्य मूर्च्छिता ॥ ३४८ ॥ सोऽथ स्नेहरसेनेव, कमण्डलुजलेन ताम् । असिक्त सा सचैतन्या, दृक्कोणेन तमैक्षत ॥ ३४९ ॥ तया हृतमनाः सोऽथ, मा खिद्यस्वेति तां जगौ । आवर्जितं हि मे चित्तं, तव स्नेहेन किं पुनः ? ॥ ३५० ॥ एकतो गुरुगीर्भङ्गः, स्नेहभङ्गस्तथैकतः । अखण्डा गुरुगीरिष्टं, दातुं प्रभवति ध्रुवम् ॥ ३५१ ॥ तत्त्वमाख्याहि किं कुर्वे ?, साऽवदद् द्वितयं कुरु । स तत्समागमध्यानी, जग्राहाऽनशनं मुनिः ॥३५२॥ आपृच्छ्य पितरौ सापि, क्षमयित्वा सखीजनम् । विदधेऽनशनं वद्धवुद्धिस्तत्रैव भर्तरि ॥ ३५३ ॥ वासन्तीव्रततिश्लिष्टाशोकद्रुमतलस्थयोः । तयोस्तत्राऽऽययौ नागदेवस्ताभ्यां नतश्च सः ॥३५४॥ ऊचे सम्पद्यतामिष्टं, स तत्र प्रेक्ष्य नीलुकाम् । लज्जितं प्रियमित्रं च, दध्यौ किमिदमित्यलम् ॥३५५॥ सख्याऽऽख्याते तयोर्वृत्ते, प्रियमित्रमयं जगौ । एवंविधेऽत्र सञ्जाते, मा मुचस्तत्त्ववासनाम् ॥ ३५६ ॥ एवमुक्त्वा गते तस्मिंस्तौ द्वावपि तथा स्थितौ । जनेशेन जनेनाऽपि, पूज्यमानौ निरन्तरम् ॥ ३५७ ॥ द्विमास्यन्ते यशःशेषावुत्पन्नौ किन्नरेषु तौ । अवधेर्ज्ञातवृत्तान्तावुद्यानमिदमागतौ ॥ ३५८ ॥ तत्राऽशोकद्रुमासन्नं, कृत्वा देवकुलं वरम् ।

स्थापितो देव आनन्दो, निर्वृतिश्चापि देवता ॥ ३५९ ॥ गतौ च नन्दने विद्याधरीमेकामपश्यताम् । भ्रमन्तीं दुःखमन्तसामेना हेतुमपृच्छताम् ॥ ३६० ॥ सोचेऽहं खेचरी भर्तुरनुरागादखण्डयम् । विद्यादेव्युपचार तत्तया शप्तास्मि च क्रुधा ॥ ३६१ ॥ भविष्यति वियोगस्ते षण्मासीं प्रेयसा सह । ततोऽहमरतिग्रस्ता, भगवत्याऽनुकम्पिता ॥ ३६२ ॥ ममास्ति माधवीश्लिष्टः, शुभ्रश्यामलपुष्पभृत् । प्रियमेलाभिधो वृक्षस्तत्रेति प्रियसङ्गमः ॥ ३६३ ॥ ततोऽहमागतोद्देशं. न पश्यामि द्रुमं तु तम् । भ्रमाम्यतस्ततः प्राह, किन्नरोऽहं विलोकये ॥ ३६४ ॥ तस्मिन्विलोकिते लब्धे, विद्याधर्या निवेदिते । सा तस्याऽधः स्थिना शीघ्रं, घटिता स्वप्रियेण च ॥ ३६५ ॥ तयाऽऽख्यातेऽभवद्विद्याधरकिन्नरयोर्मिथः । प्रीतिः स्थित्वा कियन्कालं, तत्खेटमिथुन गतम् ॥ ३६६ ॥ किन्नरस्तु प्रियतमागिरा द्रुं प्रियमेलकम् । निजदेवकुलासन्नं, न्यास्थत्तत्र तथास्ति च ॥ ३६७ ॥ तस्य द्रुमस्य नाम्नाऽभूत्तत्तीर्थं प्रियमेलकम् । तत्तत्रैव कुमारस्य, प्रिया मन्ये मिलिष्यति ॥ ३६८ ॥ हृष्टो राजा कुमारश्च. राज्ञा पृष्टश्च पल्लिपः । प्रोचे वेद्म्यहमुद्देशं, तं तपोवनसन्निधौ ॥ ३६९ ॥ ससैन्यः प्रेषितः सैन्यस्ततस्तत्र महीभुजा । दिनैः कतिपयैः प्रापत्तं तापसजनाश्रमम् ॥ ३७० ॥ प्रविष्टोऽल्पजनैर्युक्तस्तापसाः प्रणताश्च ते । अनुशिष्टोऽथ तैः पल्लीशेन नीतो वनान्तरे ॥ ३७१ ॥ दृष्टे देवकुले जीर्णे, प्रोक्तं देव! न वेद्म्यहम् । विशेषात्कल्पवृक्षं तं, सोऽस्मरच्च प्रिया तदा ॥ ३७२ ॥ शान्तिमत्यपि संयुक्ता, तापसीभिः समित्कुशम् । लात्वोपविष्टा छायायां, प्रियमेलकशाखिनः ॥ ३७३ ॥ दृष्टो नागलताश्लिष्टोऽशोकः प्रियतमः स्मृतः । चित्तमुत्कण्ठितं बाढं, स्फुरितं वामलोचनम् ॥ ३७४ ॥ ततो दृष्टस्तया सैन्यश्लिष्टादिव विनिर्गतः । परिभ्रमंस्तमुद्देशमागतः सानुरागत. ॥ ३७५ ॥ हृष्टाऽऽर्यपुत्र! इत्युक्त्वा दृष्ट एष चिरादिति । सदेहाच्च समुद्विग्ना, मही-

विरहजीवनात् ॥ ३७६ ॥ सवितर्का क्व सोऽत्रेति, स्वप्नः स्यादिति खेदिनी । सत्यं वीक्ष्य समाश्वस्ता, स्नेहभारेण मूर्च्छिता ॥ ३७७ ॥ [ विशेषकम् ] आश्वासिता ततस्तापसीभिर्यावन्न जल्पति । कमण्डलुजलेनाऽथ, सा संसिक्ता न चेतति ॥३७८॥ ततश्च क्रन्दिते ताभिः, कुमारः करुणापरः । मा भैष्टेति ब्रुवन्नागात्ताऽपश्यद्भयकारणम् ॥ ३७९ ॥ ताः पृष्टाश्च कुमारेण. भगवत्यः! कुतो भयम्? । ताः प्रोचिरे भवात्सोऽथ, प्राह तत्क्रन्दितं कुतः? ॥ ३८० ॥ ताः प्रोचुः शङ्खराजस्य, सुता राजपुरेशितुः । असौ शान्तिमती नाम्ना, दुर्दैवस्य नियोगतः ॥ ३८१ ॥ वियुक्तभर्तृका प्राणांस्त्यजन्ती मुनिना धृता । निवेदिता कुलपतेरनुशिष्टा च तेन सा ॥ ३८२ ॥ अत्रैव च समादिष्टः, पत्या सह समागमः । स्थिता प्रमुदिताऽस्मासु, मातृष्विव निजाङ्गजा ॥ ३८३ ॥ समित्कुशमुपादायाऽद्योपविष्टाऽत्र विष्टरे । अकस्मान्मूर्च्छिताऽस्माभिः, क्रन्दितं तेन सुन्दर! ॥ ३८४ ॥ [ कलापकम् ] कुमारेण ततो हर्षखेदावस्थावतेक्षिता । कमण्डलुजलैः सिक्ता, वीजिता तापसीजनैः ॥ ३८५ ॥ आश्वस्ताऽजनि संभ्रान्ता, कुमारेणाऽथ भाषिता । संभ्रमेण कृतं देवि!, नान्यथा हि मुनेर्गिरः ॥ ३८६ ॥ तव भाग्यवशाज्जातं, सत्यं कुलपतेर्वचः । इदं निवेद्यतां देवि!, यथा स्यात्तस्य निर्वृतिः ॥ ३८७ ॥ तापस्यो दध्युरेतस्या, वरोऽसौ वचसाऽमुना । लक्ष्यते सदृशं युग्ममिदं हि विधिना कृतम् ॥ ३८८ ॥ शान्तिमत्यप्यथाऽवस्थान्तरं वाचामगोचरम् । नयन्त्यनुभवं रोमविकारेण सहोत्थिता ॥ ३८९ ॥ दृष्ट्वा पल्लीपतिस्तुष्टो, विस्मितश्च व्यचिन्तयत् । अहो! देवप्रियारूपमिदं सुसदृशं विधेः ॥ ३९० ॥ ध्यात्वेति प्रणमत्येष, देवभृत्यलवो ब्रुवन् । पल्लीपतिरनंसीत्तां, भूतलन्यस्तमस्तकः ॥ ३९१ ॥ प्रसादं प्राभुहि स्वामितुल्यमित्यनयोदिते । कुमारः प्राह नैवाऽयं, प्रसादविषयोऽस्ति मे ॥ ३९२ ॥ ततः सलज्जे पल्लीशे, कुमार॰

स्तरुमैक्षत । पल्लीपतिमपृच्छच्च, किंनामाऽयं तरूत्तमः ? ॥ ३९३ ॥ स प्राहाऽदृष्टपूर्वोऽयं, देव ! नाम न वेद्म्यतः । पृष्टोऽथ
तापसीवर्गो, जन्माऽपूर्वममुं जगौ ॥ ३९४ ॥ दध्यौ सेनः स एवाऽयं, पादपः प्रियमेलकः । दृश्यन्ते युग्मरूपाणि, यत्पुष्पाणि
सितानि च ॥ ३९५ ॥ पल्लीशाय समाख्याय, पूजोपकरणं च सः । आनाय्याऽपूजयत्कल्पतरुमेकाग्रमानसः ॥ ३९६ ॥ तुष्टा-
ऽथ देवता तस्य, प्रत्यक्षीभूय तं जगौ । तुष्टाऽस्मि वत्स ! किं ब्रूहि, प्रियं ते क्रियतामतः ? ॥ ३९७ ॥ स प्राह किं प्रियं मे
स्याद्देवि ! त्वद्दर्शनाधिकम् ? । देवी प्रोचेऽनुरूपे ते, निरीहत्वविविक्तते[1] ॥ ३९८ ॥ तथाऽपि हि गृहाणैतं, मणिं नरशिरो-
मणे ! । परोपकृतयेऽशेषविषरोगनिषेधकम् ॥ ३९९ ॥ सेनस्ततस्तदारोग्यरत्नमादाय देवताम् । ववन्दे सा चिरं जीवेत्युदित्वा
च तिरोदधे ॥ ४०० ॥ तापस्यो जहृषुर्वीक्ष्य, तं देवीबहुमानितम् । ऊचुश्च मध्यसंध्यातिक्रमो यामस्ततो वयस्य ॥ ४०१ ॥
सेनः प्रोचे कुलपतिं, वन्दिष्येऽहं ततः समम् । यामः परिजनेनाऽथ, युतोऽनंसीन्मुनीश्वरम् ॥ ४०२ ॥ तापस्याख्यातवृ-
त्तान्तस्तुष्टस्तस्मै मुनीश्वरः । पत्नीं समर्प्य प्रोवाच, मम धर्मसुता ह्यसौ ॥ ४०३ ॥ मम च्छिन्नभवस्याऽपि, गुणानां पक्षपा-
ततः । प्रतिबन्धो महानस्यां, तद् द्रष्टव्या तथा त्वया ॥ ४०४ ॥ कुमारः प्राह भगवन् !, यदादिशति मे भवान् । तदा क्व
द्रश्यो भगवानित्यरोदीन्नृपात्मजा ॥ ४०५ ॥ प्रोचे कुलपतिश्चैनां, वत्से ! धर्मरतेस्तव । दूरे नास्त्युपदेशोऽवस्थितिर्यन्मुनिदर्श-
नम् ॥ ४०६ ॥ ततः कुलपतिं नत्वाऽऽपृच्छय सा तापसीजनम् । कुमारमागता सोऽपि, सर्वं सम्पूज्य निर्ययौ ॥ ४०७ ॥ दिनैः
कतिपयैर्विश्वपुरं प्राप्तो न्यवेदयत् । राज्ञे शान्तिमतीलाभं, सोऽथ वर्धापनं व्यधात् ॥ ४०८" अथ सम्मान्य पल्लीशे, विस-

१ निविक्तता० विवेकता ।

ष्टेऽमरसेनभूः । शान्तिमत्या समं भोगान्, बुभुजे भूभुजः प्रियः ॥४०९॥ अन्यदा कर्मवैचित्र्यात्, संसारासारतावशात् । सद्योघाती नृपस्याऽऽगाद्यमराज इवाऽऽमयः ॥४१०॥ शूलं शिरोर्त्तिः सन्धीनां, दन्तानां च प्रकम्पनम् । श्वासो लोचनभङ्गश्च, स्वरभङ्गश्च जज्ञिरे ॥४११॥ भिषजो भेषजे व्यर्थे, विषेदुः खेदमाप च । शुद्धान्तस्तं च वृत्तान्तमाख्यत्सेनाय वेत्रभृत् ॥४१२॥ सेनोऽथ नृपतेर्विश्वोपकर्तुस्तादृशीं दशाम् । श्रुत्वा स्वमक्षमं निन्दन्, प्रतीकारे विमूर्च्छितः ॥४१३॥ वीजित्वाऽऽश्वासितः शान्तिमत्याऽथोपायधीरया । उक्तः स्मरसि किं नाऽऽर्यपुत्र! तं दैवतं मणिम्? ॥४१४॥ सोऽथ सुन्दर्यदः साधु, स्मृतमुक्त्वेति तं मणिम् । आदाय शकुनैर्भव्यैः, प्रेरितो नृपमासदत् ॥४१५॥ नृपमारोग्यरत्नेन, चाऽपमार्जयति स सः । अचिन्त्यरत्नमाहात्म्याच्छान्ते शूलशिरोव्यथे ॥४१६॥ घटिताः सन्धयः सर्वे, दन्ता निश्चलतामिताः । शान्तः श्वासो दृशौ स्मेरे, किमेतच्चेति भाषितम् ॥४१७॥ स्तोकया वेलया जातसामर्थ्यश्चोत्थितो नृपः । वैद्यैरुक्तं कुमारस्य, प्रभावोऽयमहो! महान् ॥४१८॥ हृष्टाश्च मन्त्रिणो नृत्ता, देव्यः प्रोवाच भूपतिः । न नष्टस्मृतिना ज्ञातं, मया किं किमभूदिह ॥४१९॥ जीवानन्देन कथिते, तुष्टः प्राह नराधिपः । कुमारेऽमृतरूपे स्यादवकाशो मृतेः कुतः? ॥४२०॥ सेनः प्राह प्रसादोऽयं, गुरुदेवसमुद्भवः । नृपोऽवोचदिमे प्राणास्तव योज्या यथोचितम् ॥४२१॥ गुरवो यूयमित्युक्ते सेनेन नृपतिर्जगौ । गुरुवाक्यमलङ्घ्यं हि, न मोच्योऽहं ततस्त्वया ॥४२२॥ सेनेनाऽऽदेश इत्युक्ते, वेश्मने विससर्ज तम् । नृपतिस्तन्नियुक्तं च, प्रोचे परिजनं निजम् ॥४२३॥ कुमारसङ्गतः कश्चिदेति यः स निवेद्य मे । कुमारस्य ततः प्रेष्य, आदेश इति तेऽवदन् ॥४२४॥ अन्यदाऽमरगुर्वाख्यो, मन्त्रिपुत्रः समागतः । राज्ञे निवेदितस्तेन, पूजितो भणितश्च सः ॥४२५॥

भद्र! सेनः कुमारोऽयं, जीवितादधिको मम । प्रतिपन्नं तथैतेन, यत्त्वं मोच्यो मया न हि ॥४२६॥ तत्तथा भवता कार्यं,
यथाऽऽत्रां स्वःस्थितौ सुखम् । स प्राह भवता देव!, सेनः सेनः किमुच्यते ॥४२७॥ यच्चादिष्टमहं तत्रोपयुक्तोऽस्मि विधि-
यथा । सेनाय प्रेषिता राज्ञाऽथ तदागमवर्धकाः ॥४२८॥ प्रेषितश्च स निर्गच्छन्, दध्यावत्रेति युज्यते । यदेष न त्यजत्येनं,
सेनं विश्वपुरेश्वरः ॥४२९॥ यतो वशीकृतं राज्यं, विषेणेन कृपामयः । कुमारोऽस्मिंश्च तातेन, प्रोक्तः प्रव्रजिताऽस्म्यहम्
॥४३०॥ हारयिष्यत्यसौ राज्यं, कुमारस्तूद्धरिष्यति । तच्चारब्धं विषेणेन, सामन्ताद्यपमानतः ॥४३१॥ प्रजाना पीड-
नाद्बाढमुचिताचारलङ्घनात् । लोभाच्च तदवस्थानं, सेनस्याऽत्रैव सुन्दरम् ॥४३२॥ [ कलापकम् ] ध्यायन्नित्ययमायातो,
द्वाःस्थेन च निवेदितः । कुमारोऽथ समुत्थाय, तमाश्लिष्य च पृष्टवान् ॥४३३॥ क्षेमोऽस्ति तातपादानां, कुमा-
रस्य च सोऽवदत् । क्षेमोऽन्यच्च तवाऽदृष्टेर्विषण्णो हरिषेणराट् ॥४३४॥ दत्त्वा राज्यं विषेणस्य, तातप्रभृतिभिः सह ।
प्रधानैर्जगृहे दीक्षामनाकाङ्क्षो वपुष्यपि ॥४३५॥ सेनः प्रोचेऽभवद्युक्तमिदं किं नु कुमारतः ? । सुखिन्यस्ति प्रजा सोऽथ,
प्रोचेऽनाथेव साऽस्त्यलम् ॥४३६॥ सेनः प्राह कुतोऽनाथा, विषेणे तत्र जीवति ? । वेत्रिण्याऽथ क्षुते देवो, जीवत्विति
बभाण सः ॥४३७॥ स्फुरितं वामचक्षुश्चाऽनिष्टं भावि किमप्यदः । ध्यात्वेति स प्रियां प्राहाऽऽर्यस्य कालोचितं कुरु ॥४३८॥
तयाऽथ कारिते तस्मिन्देहवृत्तिं समार्पयत् । कुमारः स्वाधिकारं, स जग्राह मुदितश्च तम् ॥ ४३९ ॥ प्रेषिताश्च विषेणस्य,
राज्ये प्रणिधयोऽमुना । निजः परिजनो वृद्धिं, कुमारस्याऽऽप च क्रमात् ॥४४०॥ दिनैः कतिपयैः शान्तिमती सुतमजी-
जनत् । सेनस्तस्य ददौ नामाऽमरसेन इति स्वयम् ॥४४१॥ चम्पातश्चाऽन्यदा चारः, समायातो न्यवेदयत् । देवाचलपुर-

स्वामी चम्पाराज्यमुपाददे ॥४४२॥ मुक्तापीठाभिधः कोशकोष्ठागारसमन्वितम् । विनष्टप्रकृतिर्नष्टो, विषेणस्तु विदूरतः ॥४४३॥ [ युग्मम् ] ततोऽमरगुरोर्ज्ञातवृत्तान्तोऽमरसेनजः । सामर्ष प्रोचिवान् राज्ये, स्थापयाम्यनुजं पुनः ॥४४४॥ तदा जगर्ज मत्तेभो, देवो जयतु मन्त्रिणा । प्रोक्तं दक्षिणबाहुश्च कुमारस्याऽस्फुरत्ततः ॥४४५॥ सेनोऽमरगुरुं प्राह, कथयैतन्महीभुजे । कथितेऽथ महीभर्ता, प्राह मेऽसौ पराभवः ॥४४६॥ तत्प्रेषयामि विक्षेपं, तं साधयितुमञ्जसा । मन्त्र्यूचे प्रेष्यतां सेनो, विक्षेपाधिपतिस्ततः ॥४४७॥ नृपेणाऽस्त्वेवमित्युक्तेऽमर्षदुर्धर्षमानसः । प्रणम्य नृपतिं सेनस्तत्रैव दिवसेऽचलत् ॥४४८॥ आरूढो हस्तिनं हस्तितुरङ्गमरथस्थितैः । स निरैन्नगराद्वीरैः, समं शक्रः सुरैरिव ॥४४९॥ पुरान्निर्गच्छतस्तस्य, जगर्जाऽत्यूर्जितं गजः । कुमारो जयतीत्युक्तं, सैनिकैः सकलैस्ततः ॥४५०॥ प्रासेऽत्र देशसीमानं, मुक्तापीठोऽप्यथाऽऽगमत् । तस्य दूतः कुमारेण, प्रहितो नीतिरीतितः ॥४५१॥ तेनोक्तः पैतृकं राज्यं, परित्यज्य मम व्रज । भवाऽथ संयुगे सज्जः, स ससर्ज गिरं ततः ॥४५२॥ सिंहेनेव वनं राज्यं, मयोपात्तं निजैर्भुजैः । न मुञ्चे युधि सज्जस्तु, नेतुं त्वामन्तकान्तिकम् ॥४५३॥ स्वभर्तुरिदमाख्याहि, गत्वा दूतोऽथ तज्जगौ । क्रोधानलः कुमारस्योद्दिदीपेऽथ हृदन्तरे ॥४५४॥ धीरत्वेन धृतोऽप्येष, भृकुटीधूमरेखया । शोणत्वेन च नेत्राणां, जनैरनुमितः परैः ॥४५५॥ ऊचेऽथ युद्धश्रद्धालोरस्य श्रद्धा प्रपूर्यताम् । श्राद्धदेवो महीदेवो, युद्धश्राद्धेऽत्र तृप्यतु ॥४५६॥ ततो द्वावपि तौ कृत्वा, प्रसादं भटसंहतेः । द[त्त्वा] दीने जने दानं, युद्धसज्जौ बभूवतुः ॥४५७॥ प्रातश्च हास्तिकाश्वीयरथ्यापादातसंकुले । उभे चापि महासैन्ये, निर्दैन्ये मिलिते मिथः ॥४५८॥ ततः शरसमूहेन, च्छन्नशूरं द्विधापि हि । निशितासिहतानेकपतद्धर्यपदातिकम् ॥४५९॥ सादि-

क्षिप्रमहाकुन्तभिन्नमत्तमतङ्गजम् । मतङ्गजावमर्दोत्थभीतिवित्रस्तभीरुकम् ॥४६०॥ रथिक्षिप्तक्षुरप्रौघच्छिन्नच्छत्रध्वजव्र-
जम् । गजस्थितचमूमध्यमिलितक्षितिनायकम् ॥४६१॥ इतः समेहीत्याहूतवलमानभटोत्कटम् । अन्योन्यमदगन्धोत्थस-
त्सरायातसामजम् ॥४६२॥ संतुष्टभटसंदृष्टकवन्धावद्धताण्डवम् । उभयोरपि सञ्जातं, समनीकमनीकयोः ॥४६३॥
[ पञ्चभिः कुलकम् ] मुक्तापीठः समुत्थाय, सेनसेनाममर्षणः । बभञ्जाऽथ कुमारोऽपि, समुत्तस्थौ ससैनिकः ॥४६४॥
दारुणेऽथ रणे जाते, मुक्तापीठकुमारयोः । निहतः सेनखड्गेन, मुक्तापीठोऽपतद्भुवि ॥४६५॥ जितमित्यूर्जितः जज्ञे, कलः
कलकलस्ततः । जयश्रियः प्रवेशार्थमिव तूर्यमथाऽध्वनत् ॥४६६॥ कुमारेण स्वयं सोऽथाऽऽश्वासितः सलिलानिलैः ।
श्लाघितश्च न कीर्तिस्ते, स्वं राज्यं त्वाददे मया ॥४६७॥ ततस्त्वया न सन्तप्यं, विषेणादधिको यतः । भ्राता मम त्वमि-
त्युक्त्वा, तं निजावासमानयत् ॥४६८॥ व्रणपट्टान्निबध्याऽथ, पूजयित्वा च सादरम् । न्यायसारः कुमारस्तमप्रैषीन्निज-
नीवृति ॥४६९॥ ऊचेऽमरगुरुं चैष, विषेणोऽन्विष्यतां क्वचित् । यथा पुनः स चरुपायां, महाराजो विधीयते ॥४७०॥
स प्राह यामश्चम्पायां, तत्र सोऽप्यानयिष्यते । सेनः प्रोचे महाराजस्तातादिष्टः स एव तु ॥४७१॥ आदेश इति मन्त्र्युक्ते,
प्रेष्य मुख्यनरान्निजान् । अधिचम्पं ययौ सेनोऽभ्युद्गतश्च पुरीजनैः ॥४७२॥ विज्ञप्तस्तैः प्रवेशाय, महाराजः समेत्विति ।
उक्त्वा तस्थौ वहिस्तेऽथ, समेयुः प्रेषिता नराः ॥४७३॥ मन्त्रिणे कथयामासुः, पुरीं प्राप्तैः कृतार्गलाम् । दृष्टोऽस्माभिः
कुमारोऽस्य, वृत्तान्तः कथितोऽखिलः ॥४७४॥ ततो दूनः स्वयं न्यूनः, समुच्छूनरदच्छदः । विषेणोऽयं विषेणेव, मिश्रां

१ क्षुरप्र० बाण । २ व्रज० मार्ग । ३ सामज० गज । ४ युद्धम् । ५ देशे ।

वाचमुवाच सः ॥४७५॥ राज्यं कदापि नैवाऽहं, कुर्वे परभुजार्जितम् । तद्यूयं यात नाऽऽगम्यं, पुनरत्र कदाचन ॥४७६॥
दध्यौ मन्त्री न योग्योऽयं, देयस्य प्रागभवद्विषन् । ध्यात्वेत्येतत्कुमारस्य, सनिर्वेदो न्यवेदयत् ॥४७७॥ कुमारोऽथ स्वयं
राज्यनिःस्पृहः प्रोचिवानिति । तं विनाऽनेन राज्येन, ध्वान्तवृत्तेन को गुणः? ॥४७८॥ मन्त्र्यूचे देव! संत्यज्य, विषादं
पालय प्रजाः । सेनः प्रोचे स्वपुण्येन, रक्ष्यन्ते हि प्रजाः स्वयम् ॥४७९॥ तदा च ज्ञातवृत्तान्त, उद्दिधीर्षुर्भवार्णवात् ।
आचार्यो हरिषेणोऽस्य, पितृव्यः श्रव्यगीर्बुधैः ॥४८०॥ अमात्रकरुणापात्रमागच्छत्साधुभिर्वृतः । स्थितश्च नष्टशोकाख्ये,
वने ज्ञातश्च पूर्जनैः ॥४८१॥ [ युग्मम् ] लोकवार्तानियुक्तास्तमाकर्ण्य प्रेक्ष्य च स्वयम् । वेत्रिण्यै कथयामासुः, साऽऽख्यच्च
नृपसूनवे ॥४८२॥ सेनस्तस्यै च तेभ्यश्च, प्रवरं पारितोपिकम् । दत्त्वाऽमरगुरुं प्राहाऽनभ्रं पीयूषवर्षणम् ॥४८३॥ स
प्रोचे देव! धन्योऽसि, त्वं च कल्याणभाजनम् । ततस्तेन समं यातः, कुमारस्तत्र कानने ॥४८४॥ दृष्टश्च तत्र निर्मोहः,
सहितो ज्ञानसम्पदा । शरन्नीरामलस्वान्तः, शङ्खवच्च निरञ्जनः ॥४८५॥ लोकद्वयनिराकाङ्क्षो, मुक्तिमार्ग इवाऽमलः ।
भगवान्हरिषेणाख्यः, सूरिर्दूरितदुष्कृतः ॥४८६॥ [ युग्मम् ] दृष्ट्वा तमनमत्सैष, गुरुणा धर्मलाभितः । तस्थौ रोमाञ्चवाष्पा-
भ्यां, प्रमोदं प्रोद्गिरन्निव ॥४८७॥ उक्तो भगवता चैष, वत्स! त्वं भावधर्मवित् । सुन्दरः सर्वचेष्टासु, यतस्त्वन्निर्ममेण
मे ॥४८८॥ निर्वेदोऽजनि तस्माच्च, व्रतं तस्माच्च नाऽपरम् । उपादेयं किमप्यस्ति, प्रकृत्या निर्गुणे भवे ॥४८९॥ [ युग्मम् ]
जीवितं वहुलं क्लेशैर्विनश्वर्यश्च सम्पदः । अकाण्डभङ्गकृन्मृत्युर्विनिर्जितसुरासुरः ॥४९०॥ प्रमादचेष्टितं स्वल्पमप्यनल्प-
व्यथाप्रदम् । अत्रार्थे गुरुभिः प्रोक्तां, ममाऽग्रे त्वं कथां शृणु ॥४९१॥ अस्त्युत्तरपथप्रष्ठे, नगरे वर्धनापुरे । सपत्नैरजिते

राजा, नामतो जितवर्धनः ॥ ४९२ ॥ तत्राऽस्ति सद्दुडश्चन्द्राजानिः सर्गः सुतोऽस्य तु । पूर्वकर्मानुभावेन, तानि दारिद्र्यमन्दिरम् ॥ ४९३ ॥ सद्दुडेऽथ मृते चन्द्रा, कुक्षिपूरणहेतवे । कर्म कर्तुं समारेभे, परकीयेषु वेश्मसु ॥ ४९४ ॥ सर्गः सर्गेन्धनाद्यं तु, वनादानेतुमुद्यतः । इत्थं याति तयोः कालो, दुःखदारिद्र्यदूनयोः ॥ ४९५ ॥ अन्यदा धूसरश्रेष्ठिगृहे जामातुरागमे । वार्यानेतुं समाहूता, चन्द्रा तन्द्राविवर्जिता ॥ ४९६ ॥ पुत्रस्याऽऽगमवेलेति, शिक्ये तद्योग्यभोजनम् । संस्थाप्य सा गता द्वारं, बद्ध्वा किटिकया रयात् ॥ ४९७ ॥ सर्गः समागतो नाऽम्बामपश्यत्कुपितोऽथ सः । न शिक्यमैक्षताऽम्बाऽपि, स्तोककालात्समागता ॥ ४९८ ॥ सर्गः प्रोवाच तत्र त्वं, भिन्ना शूलिकया कथम् ? । मम क्षुधाभिभूतस्य, वेला कापि व्यतीयुषी ॥ ४९९ ॥ तयाऽपि दूनया श्रेष्ठिसदनेऽनाप्तवित्तया । प्रोचे हस्तौ कथं छिन्नौ, यन्नात्तं शिक्यतोऽशनम् ॥ ५०० ॥ तदा दुर्वाक्यतस्ताभ्यां कर्म समार्जितम् । अन्यदा मानतुङ्गर्षेः, श्राद्धधर्मः समाददे ॥ ५०१ ॥ प्रपन्नश्रावकत्वौ तौ, कालेन कियताऽपि हि । चारित्रपरिणामेनाऽगृहीतां व्रतमुत्तमम् ॥ ५०२ ॥ त्यक्त्वा देहं दिवं यातौ, सर्गः स्वर्गच्युतोऽजनि । ताम्रलिप्तेभ्यकुमारदेवजीजुकयोः सुतः ॥ ५०३ ॥ क्रमेणाऽरुणदेवाख्यः, कुमारत्वमवाप सः । चन्द्राजीवोऽपि हि च्युत्वा, नगरे पाटलापथे ॥ ५०४ ॥ जसादित्यमहेभ्यस्येल्लायां पत्न्यां सुताऽभवत् । देइणीति कृताभिख्या, कुमारीत्वमवाप च ॥ ५०५ ॥ [ विशेषकम् ] सा दत्ताऽरुणदेवाय, भवितव्यनियोगतः । अवृत्तेऽपि विवाहेऽसौ, यानपात्रे गतः पुनः ॥ ५०६ ॥ महाकटाहतस्तस्य, वलमानस्य दैवतः । यानपात्रं विपन्नं तन्महादुर्मरुता हतम् ॥ ५०७ ॥ महेश्वरद्वितीयोऽथाऽरुणदेवः

१ कीलिकया ।

पयोनिधिम् । फलकेन समुत्तीर्य, समेतः पाटलापथे ॥५०८॥ प्रोक्तो महेश्वरेणैष, तवाऽत्र श्वशुराश्रयः । तत्तत्र गम्यते सोऽथ, प्रोचेऽवस्था न तादृशी ॥५०९॥ यादृश्यां गम्यते तत्र, ततः प्राह महेश्वरः । तिष्ठ देवकुलेऽत्र त्वं, यावद्भोजनमानये ॥५१०॥ [ युग्मम् ] महेश्वरः प्रविष्टोऽथ, पाटलापथमध्यतः । तत्र देवकुले सुप्तोऽरुणदेवस्तु निद्रया ॥५११॥ तदोदीर्णं च देइण्याः, कर्म दुर्लक्ष्यजन्मजम् । भवनोद्यानमार्गेणागमत्तत्रैककोऽपि तस्करः ॥५१२॥ माणिक्यकटकद्वन्द्वं, वीक्ष्य तत्करयोरगम् । छित्त्वा तन्मुष्टिमापूर्य, करौ छित्त्वा तदग्रहीत् ॥५१३॥ आकृष्टक्षुरिकस्तेन, गृहीतेन भयाशयम् । वनपालिकया दृष्टः, कन्दितं च तया दृढम् ॥५१४॥ अन्वधावंस्तलारक्षास्तस्करं वीक्ष्य दूरगम् । तत्र देवकुले सोऽपि, प्रविष्टः पूर्वचिन्तिते ॥५१५॥ तदा चाऽरुणदेवस्य, कर्मोदीर्णं पुरातनम् । कटकौ क्षुरिकां चापि, स्तेनस्तस्याऽन्तिकेऽमुचत् ॥५१६॥ प्रविष्टः पूर्वदृष्टे च, शिवारे स तमस्विनि । उत्थितोऽरुणदेवस्तत्कटकद्वयमाददे ॥५१७॥ देवतादत्तमित्येतन्मुष्टिकोणं न्यवेशयत् । क्षुरिकां पश्यतश्चाऽस्य, तलारक्षाः समाययुः ॥५१८॥ संक्षुब्धोऽरुणदेवोऽथ, तैरुक्तो रे! क्व यास्यसि? । पपात च क्षुरी हस्तात्तलारक्षैर्धृतश्च सः ॥५१९॥ चाह किं नु मया चक्रे?, प्रोचुस्ते दैवनोदितः । यत्करोत्यर्पय ज्ञातस्त्वत्कङ्कणयुगं ततः ॥५२०॥ न जानामीति तेनोक्ते, कुपितैर्दण्डपाशिकैः । हन्यमानस्य चाऽऽतङ्कात्पतितं कटकद्वयम् ॥५२१॥ तद्गृहीत्वा च तैर्नीतो, नियम्य स नृपान्तिके । नृपेण सहसा प्रोचेऽमुं भेदयत शूलया ॥५२२॥ तैस्तथा विहिते ज्ञात्वा, भोजनमागान्महेश्वरः । तमदृष्ट्वाऽऽकुलः सोऽथाऽपृच्छदारामिकानिति ॥५२३॥ युष्माभिरीदृशः श्रेष्ठिपुत्रो गच्छन् वीक्षितः? । ते

---

१ पद्मेन । २ उद्विकापा० उत्तरे । ३ भयात् ।

प्रोचुर्नेत आत्तस्तु, चौर एको विनाशितः ॥५२४॥ न जानीमो गतस्तत्र, यदि कौतुकतो भवेत् । वध्यस्थानं ततः पृष्ट्वा,
गतस्तत्र महेश्वरः ॥५२५॥ शूलप्रोतं च तं वीक्ष्य, बाष्पाविलविलोचनः । ब्रुवन्हा ! श्रेष्ठिपुत्रेति, मूर्च्छितः पतितो भुवि
॥५२६॥ सकौतुककृपैः पृष्टश्चाऽऽश्वास्य च निरीक्षकैः । क एष स समाख्यच्च, वृत्तमेतत्कथानकम् ॥५२७॥ अयं कुमार-
देवस्य, नन्दनस्तामलिप्तगः । जसादित्यस्य जामाता, वास्तव्यस्य पुरेऽत्र च ॥५२८॥ इत्यादि भोजनानायप्रान्तमाख्याय
सोऽखिलम् । पतितो हन्तुमारब्धः, स्वं निषिद्धो निरीक्षकैः ॥५२९॥ तच्च श्रुत्वा समायातो, जसादित्यः सुतायुतः । तं
निरीक्ष्योपलक्ष्योच्चैर्मूर्च्छितः ससुतोऽपि हि ॥५३०॥ स समाश्वासितो बन्धुजनैः काष्ठान्ययाचत । जामातुः पुत्रिकायाश्च,
तत्तादृग्द्रष्टुमक्षमः ॥५३१॥ नृपः क्रुद्धस्तलारक्षानूचे प्रोचुश्च ते प्रभो ! । प्राप्तोऽस्माभिः सलोप्त्रोऽयमुक्त्वा प्रत्यायितश्च
तैः ॥५३२॥ श्रेष्ठिप्रत्यायनायाऽथ, स्वयं भूपः समागतः । उवाच मन्तुर्दैवस्य, न त्वस्माकं मतेरयम् ॥५३३॥ अथाऽम-
रेश्वरो नाम, चतुर्ज्ञानयुतो गुरुः । सर्वेषामपि बोधाय, तेषां तत्र समागमत् ॥५३४॥ देवैरशोधि भूर्वृष्टं, गन्धाम्बुकुसु-
मैस्ततः । कृतं काञ्चनपद्मं च, तत्रोपविशति स्म सः ॥५३५॥ प्रास्तौद्धर्मकथां भद्रा !, मोहनिद्रां समुज्झत । नित्यं जागृत
सङ्गृह्य, धर्मजागरणोत्सवम् ॥५३६॥ पापस्थानानि सन्त्यज्याऽङ्गीकुरुध्वं गुणव्रजम् । हताऽहितं प्रमादाख्यं, कर्मबन्धनिव-
न्धनम् ॥५३७॥ कर्मबन्धाद्धि दुःखानि, जन्तुः प्राप्नोत्यनेकशः । यथैषोऽरुणदेवश्च, देइणी च सुदुःखितौ ॥५३८॥ ततो
नृपतिना पृष्टो, ज्ञानशूरस्तयोः कथाम् । आविश्चक्रेऽथ संविग्ना, परिषन्निखिलाऽप्यसौ ॥५३९॥ मूर्च्छितौ तौ सचैतन्यौ,
स्मृतजाती च दम्पती । अक्लिष्टौ शुद्धचित्तौ च, चतुर्ज्ञानिनमूचतुः ॥५४०॥ भगवन्यत्त्वयाऽऽदिष्टं, तत्तथेति तदावयोः ।

प्रदेह्यनशनं कर्मरोगदुःखक्षयङ्करम् ॥५४१॥ स चाऽवोचदवस्थाया, अस्याः समुचितं ह्यदः । इदं ह्यनशनं सर्वसौख्यनिर्वाणकारणम् ॥५४२॥ ततोऽनशनमादाय, मुदितौ तौ मुनीश्वरम् । ऊचतुर्नौ शुभं जन्म, धर्मसारथिना त्वया ॥५४३॥ यत्किञ्चिद् व्यसनं चेदं, स्वकर्मपरिणामजम् । तदादिश किमावाभ्यां, कर्तव्यं भगवाञ्जगौ ॥५४४॥ युवाभ्यां हि कृतं कृत्यं, ममत्वं त्यज्यतामतः । मैत्री च भाव्यतां भावाद्, दुष्कृतं निन्द्यतां निजम् ॥५४५॥ ज्ञानदर्शनचारित्रत्रयं च बहुमान्यताम् । चिन्त्यतां च प्रमादस्य, वर्जनात्परमं शिवम् ॥५४६॥ तत्प्रतिश्रुत्य चाऽऽरब्धं, ताभ्यामत्रान्तरे नृपः । प्राह प्रभोऽल्पकस्याऽपि, दुष्कृतस्येदृशं फलम् ॥५४७॥ अस्मादृशां तदुद्दामप्रमादवशवर्तिनाम् । का गतिर्भगवानूचे, स्युर्दुर्गा दुर्गतिव्यथाः ॥५४८॥ तासामपेक्षया चैतन्न किञ्चिदत एव हि । आह लोकगुरुर्भक्ष्यं, विषं क्रीड्यं हविर्भुजा ॥५४९॥ सन्तर्पणीय आतङ्कः, कर्तव्या शत्रुसङ्गतिः । वसनीयं भुजङ्गैश्च, न कर्तव्या प्रमादिता ॥५५०॥ इहलोकापकारीणि, विषादीन्यखिलान्यपि । लोकद्वयापकारी तु, प्रमादः प्रथितो यतः ॥५५१॥ [विशेषकम्] नृपः प्रोवाच भगवन्नस्त्युपायोऽपि कश्चन? । सेवितस्य प्रमादस्य, क्षपणेऽस्ति गुरुर्जगौ ॥५५२॥ स कीदृगिति राज्ञोक्ते, गुरुः प्राहाऽमरेश्वरः । सर्वारम्भपरित्यागादप्रमादस्य सेवनम् ॥५५३॥ तत्कर्मरोगभैषज्यं, लोकद्वयसुखावहम् । समग्रश्रेयसां हेतुः, परमारोग्यसौख्यदम् ॥५५४॥ [युग्मम्] नृपः प्राह किमेताभ्यामप्रमादो न सेवितः? । गुरुः प्राहाऽप्रमादस्याऽतिशयो न निषेवितः ॥५५५॥ अल्पेऽपि सेविते क्लेशो, नैतस्मादधिकोऽनयोः । अतो भगवता ज्ञातभवमोक्षात्मनोदितम् ॥५५६॥ अप्रमादः सदा कार्यः, स्मर्तव्यं पूर्वदुष्कृतम् । निन्दितव्यं च संवेगादाख्येयं च गुरोः पुरः ॥५५७॥ विधिपूर्वं च कर्तव्यं, प्रायश्चित्तैर्विशोधनम् ।

इत्थं दग्धे कर्मबीजे, न विपाकाङ्कुरो भवेत् ॥५५८॥ बुद्धोऽथ नृपतिः सार्धं, जसादित्येन तेन च । महेश्वरेण सहितो,
व्रतं जग्राह साग्रहः ॥५५९॥ श्रुत्वेति सानुतापोऽथ, तस्करोऽपि समागतः । निर्वेदवानुवाचैवं, पापकर्माऽस्म्यहं प्रभो !
॥५६०॥ मयेदं कर्म निस्त्रिंशं, कृतं धर्मोऽवमानितः । पापं बहुमतं चक्रे, मानुषत्वं च दूषितम् ॥५६१॥ तत्किं गीर्वि-
स्तरेणाऽहं, त्यक्तुकामोऽस्मि जीवितम् । तदादिश यथायोग्यं, ज्ञानी ध्यात्वा ततो जगौ ॥५६२॥ गृहाणाऽनशनं सोऽथ,
प्रतिपेदे गुरोर्वचः । शिक्षितश्च नमस्कार, पञ्चानां परमेष्ठिनाम् ॥५६३॥ तानि त्रीण्यप्यनशनं, परिपाल्य समाधिना ।
बभूवुर्भाजनं स्वर्गसुखानां नृपनन्दन ! ॥५६४॥ तत्त्वया न कृतं भव्यं, राज्यमात्रकृतेऽपि यत् । सङ्ग्रामो विदधे प्रौढक-
र्मबन्धनिबन्धनम् ॥५६५॥ कुमारस्त्वेतदाकर्ण्य, चारित्रपरिणामवान् । ऊचे परिभवामर्षाद्विदधे भगवन्निदम् ॥५६६॥
असुन्दरमिदं ज्ञातमधुना ह्युपदेशतः । तदहं यदि योग्योऽस्मि, तत्प्रसीद व्रतेन मे ॥५६७॥ गुरुः प्रोवाच साध्वेतत्त्वया-
ऽध्यवसितं ननु । हेय एव भवः सोऽयमुचितश्च व्रते भवान् ॥५६८॥ शीघ्रमिष्टं विधेहीदमनित्यं हि शरीरकम् । सेनो-
ऽमात्यं जगावार्य !, श्रुतं भगवतो वचः ॥५६९॥ करोमि क्रियया त्वत्तो, नाऽन्यो मे हितचिन्तकः । अनुमन्यस्व मां सो-
ऽथाऽवदद्देव ! भवत्वदः ॥५७०॥ किं त्वष्टदिवसान्देवोऽनुग्रहं कुरुतां मयि । प्रतिश्रुते कुमारेणाऽमात्यो दानमदापयत्
॥५७१॥ अष्टाहिकामहं चक्रे, राज्ये न्यास्थच्च नन्दनम् । आनन्दिताः प्रजाः सन्मानिताः सामन्तमन्त्रिणः ॥५७२॥
सेनः शुभे मुहूर्तेऽथ, शान्तिमत्या द्विधा युतः । सहितोऽमरगुर्वादिप्रधानैश्चाग्रहीद् व्रतम् ॥५७३॥ ततोऽधीतश्रुतो
ज्ञाततदर्थः सेवितक्रियः । योग्यत्वाद्गुर्वनुज्ञातो, जिनकल्पं प्रपन्नवान् ॥५७४॥ स चैकरात्रिकं ग्रामे, नगरे पञ्चरात्रिकम् ।

विहरन्नन्यदाऽऽयातः, कोल्लाके संनिवेशने ॥५७५॥ स्थितः प्रतिमयैकान्ते, युतेन कतिथैर्नरैः । दृष्टश्च भ्रष्टराज्येन, विषेणेन विषीदता ॥५७६॥ प्राक्कर्मदोषतः क्रुद्धो, दध्यौ जातमिदं शुभम् । यन्मुक्तायुध एकाकी, विविक्ते च हिनस्मि तत् ॥५७७॥ वधोऽस्य पश्यतामेषां, साम्प्रतं तु न साम्प्रतम् । ध्यात्वेति स तदामन्नभिन्नदेवकुले स्थितः ॥५७८॥ अनुगानामनाख्यातभावो निद्राविवर्जितः । अर्धरात्रे गृहीतासिः, सेनं हन्तुं गतोऽन्तिके ॥५७९॥ तं वीक्ष्य निश्चलध्यानमिद्धक्रोधधनं[1]जयः । निस्त्रिंशः कृष्टनिस्त्रिंशः, स प्रोवाच मुनिं प्रति ॥५८०॥ अरे कुरु दुराचार!, सुदृष्टं जीवविष्टपम् । विपन्नोऽस्यधुना तेन, ध्यानिना तत्तु न श्रुतम् ॥५८१॥ श्रुतं तु क्षेत्रदेव्या तत्ततः कुपितया तया । हृत्वाऽसिं वाहितं साधौ, स्तम्भितो भणितश्च सः ॥५८२॥ अहो! ते पापकर्मत्वमनार्यत्वमहो! तव । अहो! ते क्लिष्टचित्तत्वमहो! ते निर्विवेकता ॥५८३॥ [2]वासीचन्दनतुल्यस्य, यदस्याऽपि व्यवस्यसि । इत्थं तस्माद् व्रजेत्युक्त्वा, कृपयो[3]त्तम्भितस्तया ॥५८४॥ प्रवृत्तोऽथ मुनिं हन्तुं, पुनर्देवतया ततः । हतश्चपेटया पृथ्व्यां, पतितो रुधिरं वमन् ॥५८५॥ आश्वास्य कृपया कृष्टस्तया साधोरवग्रहात् । मुक्तो वननिकुञ्जेऽथ, स्वयं देवी तिरोदधे ॥५८६॥ वत्सले बान्धवे साधौ, विकारं भेजिवानयम् । उचितं तद्विकारो हि, तस्य नाम्नि धुरि स्थितः ॥५८७॥ एवं स्थितेऽपि हन्म्येनं, कथं न्विति विचिन्तयन् । महताऽभिनिवेशेन, नरकायुरपोषयत् ॥५८८॥ काले कियत्यप्येकाकी, शबरैः पिच्छकाङ्क्षिभिः । गृध्रावतारणार्थं स, विषेणो निहतो मृतः ॥५८९॥ समुत्पन्नस्तमाख्यायां, षष्ठावन्यां स नारकः । द्वाविंशत्यब्धिसंख्यायुरसंख्या वेदनाः सहन् ॥५९०॥ श्रीमा-

१ धनञ्जय० अग्नि । २ वासी० सूत्रधारस्य शस्त्रविशेषः । ३ मुक्तः ।

न्सेनमहामुनिः शमसुखं पीयूपकल्पं पिबन्, वन्दित्वा चरणाञ्जिनेश्वरततेः कृत्वा च संलेखनाम् । संगृह्याऽनशनं विशुद्धहृदयस्त्यक्त्वा तनुं जातवांस्त्रिंशत्सागरजीवितस्तु नवमग्रैवेयके निर्जरः ॥५९१॥ इति श्रीहरिभद्रोक्त्या, प्रद्युम्नाचार्यगुम्फिते । समरादित्यसंक्षेपे, सप्तमः समभूद्भवः ॥५९२॥

## [ अथाऽष्टमो भवः ]

इतश्च भरतेऽत्रैव, विश्वकर्मविनिर्मिता । अस्त्ययोध्याभिधायोध्या, परिपन्थिगणैः पुरी ॥ १ ॥ ययोत्पत्तिभुवा देवाधिदेवानां विनिर्जिता । मन्ये शून्ये[1] स्थिता देवोत्पत्तिभूरमरावती ॥ २ ॥ तत्र मैत्रीबलो नाम, नृपो भुजबलोत्कटः । बलोद्दामोऽपि नो यस्य, बलो[2] बन्धुसखः[3] समः ॥ ३ ॥ कुमुदं तन्वतो नेत्रानन्दिनो हरतस्तमः । यद्यशःशशिनः स्पष्टः, शशः प्रत्यर्थिदुर्यशः ॥ ४ ॥ उत्फुल्लमुखपद्माऽस्ति, तस्य पद्मावती प्रिया । यत्कान्त्या विजिता पद्मा, मन्ये पद्माश्रयाऽभवत् ॥५॥ उर्वी तां च गुणैरुर्वी, भुञ्जानस्याऽविरोधतः । भूनेतुर्दक्षिणस्याऽस्याऽतीतः कालः कियानपि ॥ ६ ॥ नवमादप्यनवमादथ ग्रैवेयकाच्च्युतः । कुक्षौ पद्मावतीदेव्याः, सेनजन्तुरवातरत् ॥७॥ अपश्यन्निश्यसौ तस्यां, सरः सरसिजाकुलम् । चक्रवाकसमाकीर्णं, भ्रमद्भ्रमरशोभितम् ॥ ८ ॥ हंसावतंसितं दिव्यवनराजिविराजितम् । उदरे विशदास्येन, स्वप्ने कल्लोलसंकुलम् ॥ ९ ॥ [ युग्मम् ] साऽऽख्यत्पत्ये स च प्रोचे, देवि! सूनुर्भविष्यति । पद्माश्रयनरैः सेव्यः, साधुचक्रसमाश्रयः ॥ १० ॥

---

१ शाकाशे । २ बलदेवः । ३ बन्धो. कृष्णस्य सखा–मित्र बन्धुसखः ।

सेवितः शुद्धपक्षैश्च, सदा चरणरागिभिः । पूरिताशोऽर्थिभृङ्गाणां, सच्छायः पुरुपाश्रयः ॥ ११ ॥ [ युग्मम् ] प्रतिश्रुत्येति संतुष्टचित्ता गर्भं बभार सा । समये सुषुवे सूनुमन्यूनगुणवैभवम् ॥ १२ ॥ अथ प्रमोदमञ्जूषाभिधचेटिकया नृपः । वर्धापितो व्यधात्तुष्टस्तां तुष्टां पारितोषिकात् ॥ १३ ॥ बन्धमोक्षादिकं सर्वं, नृपस्तदुचितं व्यधात् । उच्छ्रिता मुदितैर्लोकैः, परितः प्रमदध्वजाः ॥ १४ ॥ पूजा भूजानिना सर्वायतनेषु वितेनिरे । वर्धापनानि सर्वेषु, भवनेषु च जज्ञिरे ॥ १५ ॥ महोत्सवमये मासि, व्यतीतेऽस्य नरेश्वरः । तस्य पैतामहं नाम, गुणचन्द्र इति व्यधात् ॥ १६ ॥ स पञ्चवर्षदेशीयः, कलाचार्याय चाऽर्पितः । लीलयाऽपि ललौ लेख्यमुख्या द्वासप्ततिं कलाः ॥ १७ ॥ स सिद्धभावासन्नत्वात्क्लिष्टकर्मोपशान्तितः । कलाकलापाभ्यासाच्च, तुल्यकन्यासमागमात् ॥ १८ ॥ विमुखो विपयव्यासौ, कलासु सततोद्यतः । क्रीडन्नुद्यानवीथीषु, तस्थौ मित्रजनैर्युतः ॥ १९ ॥ [ युग्मम् ] इतो जीवो विषेणस्याऽप्युद्धृत्तो दुर्गदुर्गतेः । परिभ्रम्य भवं कृत्वा, तादृक् चाऽनन्तरे भवे ॥ २० ॥ वैताढ्ये खेचरो जज्ञे, नामतो वानमन्तरः । चक्रवालोत्तरपदे, नगरे रथनूपुरे ॥ २१ ॥ [ युग्मम् ] कियानपि ययौ कालः, सोऽन्यदा तु समाययौ । अयोध्यातिलकप्रायोद्याने नन्दननामनि ॥ २२ ॥ तत्राऽऽलेख्यविनोदं चाऽनुभवन्भुवनातिगम् । वीक्षितस्तेन निस्तन्द्रो, गुणचन्द्रो नृपात्मजः ॥ २३ ॥ तं वीक्ष्य प्राग्भवाभ्यासात्परमामरतिं दधत् । ध्यायन्व्यापादयाम्येनमिति तस्याऽन्तिकं ययौ ॥ २४ ॥ अभ्येतुमक्षमस्तस्याऽवग्रहं ध्यातवानयम् । विद्याशक्त्या स्थितोऽत्रैव, क्ष्वेडया[1] भापयाम्यमुम् ॥ २५ ॥ ध्यात्वेति वज्रनिर्घोषभैरवं विदधे रवम् । न संक्षुब्धः कुमारस्तु, वयस्याश्च

१ सिंहनादेन ।

स्थिरीकृताः ॥ २६ ॥ तस्य धीरतया बाढं, क्रुद्धः काञ्चनपादपम् । अपातयत्कुमारस्य, भाग्यैः सोऽपतदन्यतः ॥ २७ ॥ दूनोऽथ खेचरो बाढं, तदा क्रुद्धः समागतः । क्षेत्रपालो भयेनाऽस्य, त्वनश्यद्धानमन्तरः ॥ २८ ॥ कुमारोऽप्युचिते काले, वयस्यपरिवारितः । समाप्याऽऽलेख्यमुद्यानात्प्राविशन्नगरीं निजाम् ॥ २९ ॥ अथोत्तरापथे श्रेष्ठे, श्रीशङ्खपुरपत्तने । नृपः शङ्खायनो नाम, तस्य कान्तिमती प्रिया ॥ ३० ॥ रूपेणाऽतिरतिः पुत्री, नाम्ना रत्नवती तयोः । विज्ञा स्त्रीजनयोग्यासु, सकलासु कलासु च ॥ ३१ ॥ पतिरप्रतिमः कः स्यादस्या? इति तदम्बया । प्रेषिताः पुरुषा दिक्षु, निपुणाश्चित्रकर्मणि ॥ ३२ ॥ उक्ताश्च राजपुत्राणां, प्रतिरूपाणि रूपिणाम् । आनेतव्यानि युष्माभी, रत्नवत्युचितान्यलम् ॥ ३३ ॥ केऽपि क्वाऽपि गताः कौचित्त्वयोध्यामीयतुः पुरीम् । राधां विध्यंस्तदा ताभ्यां, गुणचन्द्रो निरीक्षितः ॥ ३४ ॥ तौ वीक्ष्य विस्मितौ चित्रमति-भूषणनामकौ । सकृद् दृष्टं तु तद्रूपमिमौ लिखितुमक्षमौ ॥ ३५ ॥ कन्यारूपोपदाव्याजात्तं सेवितुमुपागतौ । द्वाःस्थाख्यातौ प्रविष्टौ च, गुणचन्द्रं प्रणेमतुः ॥ ३६ ॥ [ युग्मम् ] पटं च प्राभृते कृत्वोवतुरावां गुणालयम् । श्रिते च वत्सलं देवं, श्रुत्वैतौ शङ्खपत्तनात् ॥ ३७ ॥ तद् दृष्टोऽसि कलाविद्वन्! विद्धंश्चित्रकलालवम् । तव प्रसादादावां तदवधारय देव ! नौ ॥ ३८ ॥ [ युग्मम् ] उन्मील्य तं पटं वीक्ष्य, रूपं प्राह नृपात्मजः । अयं कलालवः स्याच्चेत्तत्पूर्णा का भवेत्कला ? ॥ ३९ ॥ रेखान्यासेषु रेखा यच्चित्रे चित्रेऽत्र दृश्यते । समुदायस्य शोभा च, काचिद्वाचामगोचरा ॥ ४० ॥ एवंविधाः स्त्रियः क्व स्युः, [1] कलाकौशलमेव वाम् । तेन चित्तं हृतं को वा, नैपुण्येन न रज्यते? ॥ ४१ ॥ तावूचतुश्च नैपुण्यं, विधेरेवाऽत्र नौ न

१ उत्कृष्टता ।

तु । तत्कृतं वीक्ष्य लिखिते का, स्यान्निपुणताऽऽवयोः? ॥ ४२ ॥ कुमारः प्राह कस्यास्तदीदृग्दृगमृताञ्जनम् । रूपमप्रतिरूपं यद्विधिनाऽप्यकृतं पुरा? ॥४३॥ ऊचे ताभ्यामसौ शङ्खपुरेश्वरसुता कनी । नाम्ना रत्नवती दृष्टाऽऽवाभ्यां नरविमानगा ॥४४॥ सखीवृता धृतश्वेतातपत्रा दीर्घलोचना । शतपत्रमनङ्गास्त्रं, दधती दक्षिणे करे ॥ ४५ ॥ किंचिल्लिखितमावाभ्यां, तदनुस्मरणादिदम् । लिखितुं तु यथावस्थं, विश्वकर्माऽप्यकर्मठः ॥ ४६ ॥ श्रुत्वेत्यस्यां पराभूतरतो भूपात्मजो रतः । समन्तुरिव मारेण, शरैर्जघ्ने शरारुभिः ॥ ४७ ॥ आकारगोपनं कृत्वा, मित्रमूचेऽन्तिकस्थितम् । पठ विस्तृतबुद्धे! त्वमन्यत्प्रश्नोत्तरं पुनः ॥ ४८ ॥ आदेश इति स प्रोच्य, परितुष्टेन चेतसा । कुमारमनुसृत्यैवाऽपठत्प्रश्नोत्तरं नवम् ॥ ४९ ॥ किं ते संबोधनं देव?, वने कः कुम्भिकुम्भभित्? । प्रद्युम्नस्य कवेर्लक्ष्मीजानिः किमभिधः पिता? ॥५०॥ कुमारसिंह इत्युक्ते, कुमारेणाऽपरः सुहृत् । विशालवुद्धिनामाऽथ, पपाठाऽभिनवं कविः ॥ ५१ ॥ प्रकाशा कीदृशी वार्ताऽऽशीर्वादे च किमुच्यते? । किं च योग्यं सतां वासे?, भवात्कः स्याद्विवेकिनाम्? ॥५२॥ कश्चाधिष्ठायकः शङ्खेश्वरपार्श्वजिनेश्वरे? । कुमारेण विचिन्त्योक्तं, भूतानन्दपुरंदरः ॥ ५३ ॥ अहो! मतेरतिशयो, भापित्वेत्यथ भूषणः । प्राह देव! मयाऽप्यस्ति कृतं स प्राह तत्पठ ॥ ५४ ॥ वेश्यानां क्व नरे प्रीतिर्नीरसं कीदृशं फलम्? । उपक्षये च को धातुर्वाजिनां किं प्रशस्यते? ॥५५॥ प्रद्युम्नस्य कवेरस्य, गुरूणां श्रीमतामिह । कनकप्रभसूरीणां गुरवः के च विश्रुताः? ॥ ५६ ॥ पाठयित्वा पुनस्तं च, श्लाघित्वा कवितागुणान् । मैत्रीबलात्मजः प्राह, श्रीदेवानन्दसूरयः ॥५७॥ प्रोचे चित्रमतिश्चित्रमति देवमतेरहो! । मया कर्मक्रियागुप्तं, कृतमस्त्यवधार्यताम् ॥ ५८ ॥ पर-

१ कमलम् । २ प्रसिद्धा । ३ वानम्-शुष्कम् ।

कीयमनायासादभिप्रायं प्रकाशयन् । कुमार! स्वर्गतः स्वर्गी, भवानिति मतिर्मम ॥५९॥ कुमारः प्राह कुं पृथ्वीमाजगामेति ते मतिः । बभाषे भूषणश्चेके, देव एव किल स्वयम् ॥ ६० ॥ तयोर्विस्मितयोरित्थं, कोशाध्यक्षं नृपात्मजः । धनदेवं जगौ देहि, दीनाराल्लॅक्षमेतयोः ॥ ६१ ॥ स दध्यौ मुग्धभावेन, लक्षमानं न वेत्त्ययम् । दृष्टं करोमि तद्येन, पुनर्नाऽज्ञापयत्यदः ॥ ६२ ॥ तत्पुञ्जितं पुरो वीक्ष्य, गुणचन्द्रो व्यचिन्तयत् । मन्येऽमुष्य मनस्येतद्बहु मे दर्शयत्यतः ॥ ६३ ॥ तद्बोधायाऽवदल्लक्षमेतावन्मात्रकं भवेत्? । तद् द्वयोरनयोर्नाऽलं, द्वितीयमपि देह्यदः ॥ ६४ ॥ तथैव च तदादेशे, कोशाध्यक्षेण निर्मिते । जातौ चित्रकृतौ चित्रभृतौ तत्त्यागरागतः ॥ ६५ ॥ कालज्ञस्य स्वयं शत्रुवर्गे कालसधर्मणः । मध्याह्नकालमेतस्याऽऽचख्यौ कालनिवेदकः ॥ ६६ ॥ मध्यस्थः पुरुषोऽवश्यं, विश्वस्योपरि जायते । आख्यानिवेदमारोहन्नभोमध्यं नभोमणिः ॥ ६७॥ देवमज्जनमेदिन्यां, देवमज्जनसज्जधीः । वारवेश्याजनश्चागादुत्क्षिप्तस्वर्णकुम्भयुक् ॥ ६८ ॥ अथोत्थाय कृतस्नानभोजनः शयनीयगः । दध्यौ शङ्खायनसुताकन्यायोगो नयोचितः ॥ ६९ ॥ इति चिन्तयतस्तस्याऽऽस्थानवेला समाययौ । निविष्टस्य सदस्येत्य, वयस्याः समुपाविशन् ॥ ७० ॥ अथ विद्याधरद्वन्द्वमालिखन् नृपनन्दनः । तच्च पश्यत्युपायातौ, तौ चित्रमतिभूषणौ ॥७१॥ नत्वोचतुश्च तौ देव!, किमिदं? सोऽवदत्ततः । वीक्षध्वं स्वयमित्युक्त्वाऽथाऽर्पयच्चित्रपट्टिकाम् ॥७२॥ वीक्ष्य तौ विस्मितौ बाढमूचतुश्चित्रकर्मणि । दुःसाध्याराधनाभावे, देवेन विदधे च सा ॥ ७३ ॥ नवस्नेहोत्सुकत्वेन, मिथः स्मेरविलोचनम् । अलङ्घितोचितस्थानमारूढप्रेमभावतः ॥ ७४ ॥ इदं विद्याधरद्वन्द्वं, लिखितं देव! यत्नतः । मन्वहे विश्व-

१ देशे ।

कर्माऽसि, विश्वकर्मसु कर्मठः ॥७५॥ [ विशेषकम् ] किं चाऽस्ति चित्रशास्त्रेऽदश्चित्रं यादृक् प्रजायते । तादृग्भावस्य संपत्तिर्ध्रुवं चित्रकृतो भवेत् ॥७६॥ मन्वहे भाविनं भावं, देवस्य प्रियदर्शनात् । तदीदृशमिति श्रुत्वा, कुमारः स्मितमातनोत् ॥७७॥ अत्रान्तरे समायातः, सन्ध्यायाः सर्वमूपकः । अपठच्च ततस्तारस्वरः कालनिवेदकः ॥७८॥ सराग इव सन्ध्यायामस्ताद्रौ त्वरितं रविः । संकेतस्थानवद्देव! द्रुमकुञ्जं निषेवते ॥७९॥ रमण्यो रमणीयेषु, कृत्वा रमणवेश्मसु । माङ्गल्यवेश्मरत्नानि, पूजयन्ति रतिप्रियम् ॥८०॥ श्रुत्वेति पितरौ नत्वा, पर्युपास्य क्षणं च तौ । वासवेश्मन्युपायातश्चित्ते रत्नवतीं दधत् ॥८१॥ समये जातनिद्रश्च, प्रातः स्वप्नेऽयमैक्षत । अर्पितां केनचिन्मालां, स्वेन कण्ठे निवेशिताम् ॥८२॥ तदा प्रभाततूर्याणि, प्रहतानि नियुक्तकैः । जजागार कुमारश्चाऽपठन्मङ्गलपाठकः ॥८३॥ वियुक्तानां रथाङ्गानां, संयोगकरणोद्यतः । निर्वासिततमाः सूर्यकिरणौघो विजृम्भितः ॥८४॥ स्मेराम्भोजमुखी भृङ्गीगीतिप्रीतिसमन्विता । नृत्यत्पत्रकरा जज्ञे, पद्मिनी सुखदर्शना ॥८५॥ श्रुत्वेति मुदितो दध्यौ, स्वप्नेनाऽनेन निश्चितम् । भावी रत्नवतीलाभः, शीघ्रं प्रातः प्रदर्शनात् ॥८६॥ ध्यात्वेत्युत्थाय नत्वा च, पितरावागतः सभाम् । विशालबुद्धिप्रमुखा, वयस्याश्च समाययुः ॥८७॥ समारेभे च तैः सार्धं, गोष्ठीं गूढचतुर्थकैः । विशालबुद्धिः प्रोवाच, पूर्वं गूढचतुर्थकम् ॥८८॥ श्रीमन्तो देशनावाराऽनंतदर्शितसूक्तयः । जयन्तु मद्गुरोरर्थ्याः, कुमारोऽपाठयत्पुनः ॥८९॥ ततः प्रोचे परिज्ञातं, श्रीदेवानन्दसूरयः । अथ चित्रमतिः प्राह, निजं गूढचतुर्थकम् ॥९०॥ सज्ज्ञानसूक्तयः कर्मनिकरप्रभविष्णवः । श्रेयसे सन्तु नः पूज्याः, पुनरूचे च पाठतः ॥९१॥ कुमारोऽथाऽवदज्ज्ञातं, कनकप्रभसूरयः । प्रोचेऽथ भूषणः पर्यङ्कूषणो गूढतुर्यकम् ॥९२॥ धर्मवीरत्वसकलः,

श्रितबान्धवतां श्रितः । श्रीप्रद्युम्नकवेर्नन्द्यात्कुमारोऽपाठयत्पुनः ॥९३॥ क्षणं विचिन्त्य च प्राह, धर्मबान्धववीकलः । सर्वेऽप्यूचुरविज्ञातं, न देवस्याऽस्ति किंचन ॥९४॥ अथ द्वाःस्थः समेत्याऽऽख्यद्वाहवाहनभूमिकाम्। गतो देवः कुमार ! त्वामाह्वयत्येहि तल्लघु ॥९५॥ अथोत्थाय समारूढस्तार्क्ष्यं जिष्णुरिवाऽपरः । समं परिजनेनाऽऽप, नृपतिं नृपवर्त्मनि ॥९६॥ वाहकेलिं गतो वाहान्, वहूनयमवाहयत् । उचिते समयेऽभ्येत्य, पुर्यां चक्रे यथोचितम् ॥९७॥ अन्यदा निर्भरोत्कण्ठावशश्चित्रगतामपि । पश्यामीति धिया चित्रेऽलिखद्रत्नवतीमयम् ॥९८॥ मुहुर्दृष्टामिमां चित्रस्थितां चित्तस्थितामपि । समुत्सुकोऽन्तरात्मा मे, पुनर्द्रष्टुं समीहते ॥९९॥ श्लोकमेतं लिखित्वाऽधो, यावदस्ति विलोकयन् । तावत्तत्र समायातौ, तौ चित्रमतिभूषणौ ॥१००॥ [ युग्मम् ] तौ चित्रपट्टिकां प्रेक्ष्य, प्रोचतुर्देव ! किं न्विदम् ? । स्मित्वा स प्राह भवतोर्विज्ञानस्य द्विरुक्तता ॥१०१॥ महाप्रसाद इत्युक्त्वा यावदेतावपश्यताम् । रूपं द्विधापि सश्लोकं, तावत्ताभ्यां निरीक्षितम् ॥१०२॥ दध्यतुश्च ध्रुवं धन्या, सा कन्या वहुमन्यते । कुमारेणाऽपि या चित्रं, किं वा योग्या हि सेदृशः ॥१०३॥ देव्या निवेद्यते ह्येतद्, ध्यात्वा चित्रमतिर्जगौ । देव ! रूपमदृष्टं यदित्थमाराध्यतेऽद्भुतम् ॥१०४॥ भूषणः प्रोचिवानीदृश्येव सा राजकन्यका । धन्याऽवश्यं यदेवं सा, देवेन वहुमन्यते ॥१०५॥ तदा द्वाःस्थः समेत्याऽऽह, कुमाराऽस्ति समागतः । देवगान्धर्विकः सैष, कुमारं द्रष्टुमिच्छति ॥१०६॥ आयात्विति कुमारोक्ते, विश्वभूतिः समागमत् । अवोचच्च कुमार ! त्वां, देव आज्ञापयत्यदः ॥१०७॥ प्रस्तुते गीतवीचारेऽस्त्यस्माकं विभ्रमः स्वरे । कुमारस्तं समागत्य, ततोऽपनयतु द्रुतम् ॥१०८॥

१ अश्वम् । २ इन्द्र ।

स्मित्वा स प्राह देवस्य. स्वापत्ये बहुमानिता । गान्धर्वः प्राह नाऽपत्ये, बहुमानो गुणेषु तु ॥ १०९॥ अवक्तामेवमेतद्धि, तौ चित्रमतिभूषणौ । गुणानां हि समग्राणां, कुमारे निकषः स्थितः ॥ ११० ॥ तातादेश इति प्रोच्य, कुमारः सौधमासदत् । द्विधा चित्रयुतौ चित्रकृतौ तु स्वगृहं गतौ ॥ १११॥ भूषणः प्राह संपन्नमात्मीयं हि समीहितम् । तदस्य रूपमालिख्याऽनाख्याय लघु गम्यते ॥ ११२॥ आख्याते हि कुमारोऽयं, न प्रेषयति नौ लघु । भवत्वेवं परेणोक्ते, तौ तमालिखतां ततः ॥ ११३॥ तद्रूपं खेचरद्वन्द्वरत्नवत्योश्च पट्टिके । कुमारलिखिते लात्वा, तौ शङ्खपुरमीयतुः ॥ ११४॥ देव्या वृत्तान्तमाख्याय तच्चित्रत्रयमर्पितम् । तयोः कान्तिमती द्वेधा, तुष्टाऽदात्पारितोपिकम् ॥ ११५॥ निरूपयन्ती सा रूपं, कुमारस्याऽतिमन्मथम् । दध्यौ विशेषसस्थानमहो! रूपमहोऽप्यहो! ॥ ११६ ॥ अतृप्ताऽपि तदालोके, वीक्ष्याऽन्ये चित्रपट्टिके । रूपानुरूपविज्ञानप्रकर्षात्सातिविस्मिता ॥ ११७॥ वाचयित्वा सुतामूर्तेरधः श्लोकमचिन्तयत् । धन्या ममाऽऽत्मजा येत्थं, कुमारेणाऽभिलष्यते ॥ ११८ ॥ अर्पयित्वा कुमारस्य, प्रतिरूपं सुतां प्रति । देव्या मदनमञ्जवाख्याऽनुशिष्य प्रेषिता सखी ॥ ११९॥ सा गत्वा चाऽर्पयद्रत्नवत्यै तां चित्रपट्टिकाम् । देव्यादेशं समाख्यच्च, शिक्षस्वेदं यथा लघु ॥ १२० ॥ रत्नवत्याह कश्चित्रे, लिखितः ? प्राह तत्सखी । चन्द्रेन्द्रविष्णुकामानामेकः कोपि भविष्यति ॥ १२१॥ रत्नवत्याह निर्लक्ष्मा, लोचनद्वयसुन्दरः । सुवर्णवर्णः चङ्गाङ्गस्तेभ्यो विसदृशस्ततः ॥ १२२॥ चन्द्रः सलाञ्छनो वज्री, सहस्रेक्षणदूषणः । विष्णुः कृष्णः स्मरोऽनङ्गः, सख्यूचे स्वयमूह्यताम् ॥ १२३॥ चिरं निरीक्ष्य सा प्रोचे, सखि! नाऽयममानुषः । वर्धमानवयोवस्थो, निमेपोचितलोचनः ॥ १२४॥ सख्यूचे सुष्ठु विज्ञातं, भवत्या भर्तृदारिके! । अहं तु तर्कयाम्येष, वरस्तव भवि-

ष्यति ॥१२५॥ तदा स्वकार्यमुद्दिश्य, सिद्धादेशः पुरोहितः । प्रोवाच संशयो नाऽत्र, निःसंदेहं भविष्यति ॥१२६॥ श्रुत्वा
रत्नवती हृष्टा, सख्याहोपश्रुतिः श्रुता । तद्वाक्यं बहु मत्वाऽथ, समारेभे निरीक्षितुम् ॥१२७॥ आनीते चित्रसुन्दर्योप-
स्करे चित्रकर्मणः । तदवस्थां समालेख्य, प्रैषीन्मदनमञ्जुकाम् ॥ १२८ ॥ सा गत्वा चाऽर्पयित्वा च, महिष्यै चित्रपट्टिकाम् ।
ज्जवाच रत्नवत्युक्तमयमाराधितो न वा? ॥ १२९ ॥ देवी तं वीक्ष्य दध्यौ च, प्रतिच्छन्दादयं वरः । कुमारालिखिता रत्नव-
तीमूर्तिमथैक्षत ॥ १३० ॥ मिथुनं चाऽनुरूपं तद्वीक्ष्योचे महिषी मुदा । गत्वाऽऽख्याहि हलेऽत्यन्तं, भवत्याराधितो ह्ययम्
॥ १३१ ॥ पारितोषिकमेतत्ते, यत्तेनाऽऽराधितो ह्यलम् । रूपेणाऽप्रतिरूपेण, सश्लोकेन द्विधाऽमुना ॥१३२॥ अन्यच्च सर्वदा-
प्येतदाराधनपरा भवेः । इत्युक्त्वाऽदर्शयद्गत्वा, तस्याः सा चित्रपट्टिके ॥ १३३ ॥ ऊचे च मद्वितर्कोऽयं, वरो भावीति
नाऽनृतः । ततो रत्नवती वीक्ष्य, चित्रं श्लोकमवाचयत् ॥१३४॥ मुदा रत्नवती प्राह, किमिहाऽऽलिखिताऽस्म्यहम्? । सख्याह
लिखिता किं वा, संक्रान्ता ज्ञायते न तत् ॥ १३५ ॥ प्राह रत्नवती कः स्यादूचे मदनमञ्जुका । अयं सर्वकलाम्भोधिः,
कश्चित्त्वय्यनुरागवान् ॥ १३६ ॥ आह रत्नवती रागः, किमदृष्टेऽपि संभवेत्? । सख्याह त्वं हि चित्रस्था, तेन दृष्टा भवि-
ष्यसि ॥ १३७ ॥ पुना रत्नवती प्राह, रागश्चित्रेऽपि किं भवेत्? । सख्याहाऽऽकृतिमाहात्म्यात्स्याद्रागोऽस्मिन्यथा तव ॥१३८॥
स्मित्वा निरश्वसीदेषा, सख्यूचे मा स्म संतपः । अवश्यं युज्यते स्वामिन्यनेनेति मनो मम ॥ १३९ ॥ रत्नवत्याह भाग्यं
मे, क्वेदृक्चिन्तामणिप्रदम्? । स्फुरता वामनेत्रेण, निश्चिते परितोषमैत् ॥१४०॥ अथैत्य प्रियमेलाख्या, चेटी प्राहाऽऽदिश-
त्यदः । देवी भोजनवेलाऽभूदभ्यर्णाऽऽवश्यकं कुरु ॥ १४१ ॥ सोत्थाय देवान् सम्पूज्य, विधाय विधिनाऽशनम् । कुमारस्य

प्रतिच्छन्दं, करे कृत्वा व्यचिन्तयत् ॥ १४२ ॥ रुचिरं धैर्यलालित्यमङ्गन्यासश्च सुन्दरः । दृष्टिः सलवणा भावः, प्रगल्भः सत्त्वमुद्भटम् ॥१४३॥ अहो! नरविशेषः स्यादीदृशोऽपि महाद्भुतः । इत्थं यान्ति दिनास्तस्याः, कुमारगुणकीर्तनैः ॥१४४॥ इतो रत्नवतीरूपदर्शनस्य विनोदतः । कुमारगुणचन्द्रस्याऽप्येवं गच्छन्ति वासराः ॥ १४५ ॥ ज्ञात्वा कुतोपि वृत्तान्तं, तं मैत्रीबलभूपतिः । प्रैषीच्छङ्खायनसुतां, याचितुं वरकाभिजान् ॥ १४६ ॥ इतो रत्नवती गाढोद्विग्नाऽङ्गीकृतशून्यता । स्मरज्वरभराक्रान्ता, सख्याख्यातशिरोव्यथा ॥ १४७॥ शयनीयगता मुक्तमाना पाण्डुकपोलभृत् । सास्रदृष्टिरलब्धाशा, यावदस्ति क्षणान्तरम् ॥ १४८ ॥ [ युग्मम् ] तावदुत्फुल्लनेत्रैत्य, प्रोचे मदनमञ्जुका । स्वामिनि! त्वं चिरं जीव, पूर्णास्तव मनोरथाः ॥ १४९ ॥ यन्मया तर्कितं तच्च, तथैव समजायत । स हि चित्रप्रतिच्छन्दो, वरस्तव वरोऽजनि ॥ १५० ॥ सांप्रतं हि किमेतेन, रतप्रत्यूहकारिणा? । इतीव तस्यै संतुष्टा, कटिसूत्रमदात्तदा ॥१५१॥ अपृच्छच्च कथं? सोचे, गता देव्यन्तिकेऽस्म्यहम् । दृष्टा देवी च हृष्टास्या, सचित्रमतिभूषणा ॥ १५२ ॥ ऊचे च मत्सुतां ब्रूहि, पूर्णास्तव मनोरथाः । कुमारगुणचन्द्राय दत्ता, त्वमसि याचिता ॥ १५३ ॥ यस्त्वयाऽऽराधितश्चित्रे, स एव विधिना वरः । परितुष्टेन ते दत्तोऽकृतदारपरिग्रहः ॥ १५४ ॥ हृष्टाऽथ रत्नवत्यस्यै ददौ सर्वाङ्गभूषणम् । ध्यात्वेतीव स एवाऽङ्गे, भविता मम भूषणम् ॥१५५॥ ऊचे च सत्यसंज्ञोऽयं गुणचन्द्रो यतोऽमुतः । मम व्यपगतस्तापो, गृहिणीशब्दमात्रतः ॥ १५६ ॥ सख्यूचे भणितं देव्या, वन्दस्व गुरुदेवताः । मज्जित्वाऽथ विभूत्या सा, गुरुदेवानवन्दत ॥ १५७ ॥ शङ्खायननृपेणाऽथ, कृत्वा वर्धापनं वरम् । प्रैषि रत्नवती सान्द्रा, महाभूत्या स्वयंवरा ॥ १५८ ॥ आसन्नाजेण कालेन, सैता ज्ञाततदागमः । तुष्टो मैत्रीबलो बन्धमोक्षादि-

क्रमकारयत् ॥ १५९ ॥ प्रतिपत्तिः कृता योग्या, मुहूर्तश्च निरीक्षितः । विवाहस्याऽनुरूपं च, समग्रमपि कारितम् ॥ १६० ॥ हट्टशोभा समारब्धा, द्रव्यं दीनेषु दापितम् । कोशपत्रं समाकृष्याऽऽभरणादि निरूपितम् ॥ १६१ ॥ हास्तिकाश्वीयरथ्याढ्यो भवद्धवलमङ्गलः । कुमारोऽथ समारोहदुपवाह्यं महागजम् ॥ १६२ ॥ पृष्ठे विशालबुद्ध्याद्या, वयस्यास्तस्य तस्थिरे । रथाश्वादिसमारूढो, राजलोकोऽखिलोऽपि च ॥ १६३ ॥ नदन्मङ्गलतूर्योऽथ, नृत्यद्वारवधूजनः । नन्द्यमानश्च पौरीमिरागाद्वीवाहमण्डपम् ॥ १६४ ॥ प्रयुज्य च विधिं सर्वं, प्रेषितोऽथ वधूगृहम् । अपश्यच्चित्रतो रम्या, रतेरपि मनोहराम् ॥ १६५ ॥ ईषल्लम्बाधरां चक्रयुग्मतुल्यपयोधराम् । त्रिवलीकलितां मध्ये, पल्लवाभकरद्वयाम् ॥ १६६ ॥ नितम्बबिम्बपृथुलां, स्थलाम्भोजनिभक्रमाम् । सर्वाङ्गसुन्दरां रत्नवतीं नृपतिनन्दनः ॥ १६७ ॥ [ विशेषकम् ] हृष्टः पाणिग्रहं तस्याः, सिद्धादेशगिराऽकरोत् । भ्रान्तानि मङ्गलान्युच्चैराचारश्चाऽखिलः कृतः ॥ १६८ ॥ तामादाय समायातः, कुमारः सदनं निजम् । सर्वं समुचितं चक्रेऽथाऽपठत्कालपाठकः ॥ १६९ ॥ समाप्य जगदुद्द्योतकृत्यं भ्रान्त्वाऽखिलं दिनम् । जगाम मज्जितुमिव, तरणिर्वरुणालयम् ॥ १७० ॥ प्रदोष[2]दुर्जने मित्र[3]प्रध्वंसेन प्रसृत्वरे । मिथुनानि रथाङ्गानां, भियेव व्यघटन्मिथः ॥ १७१ ॥ नभःश्रियाऽन्तिकस्थेन्दुप्रियसंगमया किल । दिनश्रीमानभङ्गाय, ताराभरणमाददे ॥ १७२ ॥ प्राचीवधूमुखं तोषेणेव श्यामा[4]मुखोद्भुवा । इन्दुः समुदगा[1]ज्ज्योत्स्नानिवहेन प्रकाशयन् ॥ १७३ ॥ विजृम्भितसुरागन्धं, प्रकाशक्षमणिव्रजम् । चन्द्रोज्ज्वलं जगज्जज्ञे, क्षीरोदमथने यथा ॥ १७४ ॥ तदा समागतो हृष्टः, कुमारो वासवेश्मनि । यत्र रत्नवती देवतेवाऽस्ति

१ समुद्गच्छम् । २ प्रदोप० सन्ध्या ३ मित्र० सूर्य । ४ श्यामा० पोडशवार्षिकी कन्या ।

सपरिच्छदा ॥ १७५ ॥ निर्गतेऽथ सखीवर्गे, स्नेहतः कूरसूपवत् । मिलितं तत्तथा युग्मं, यथा भेदो न लक्ष्यते ॥ १७६ ॥ क्षणदा क्षणदा[3] जज्ञे, तयोः प्रथमसंगमे । चित्रं तु क्षीयमाणाऽपि, क्षणदात्वं मुमोच न ॥ १७७ ॥ प्रदत्तचित्तनिर्वेदः, स्त्रीणां प्रियवियोगनः । निनदः कृकवाकूणां[4], प्रासरद्बन्दिनामपि ॥ १७८ ॥ निशानाथो निशावध्वा, वियोगेन भविष्यता । आकुलः कलयामास, किल निष्कलतां तदा ॥ १७९ ॥ ध्वान्तारातिरथ ध्वान्ते, प्रतिघादिव[5] पाटलः । उदयाचलचूलायामारुरोह महोद्यमः ॥ १८० ॥ रथाङ्गमिथुनान्यासन्, संयोगे सुस्थितान्यथ । मित्रस्याऽभ्युदयः कस्य, न स्यादथ सुखप्रदः ? ॥ १८१ ॥ कुमारगुणचन्द्रोऽथ, कृतप्राभातिकक्षणः । गत्वोद्याने चिरं रत्वा, सप्रियः पुनरायया[6] ॥ १८२ ॥ इति प्रतिदिनं रत्नवत्या सह मनोहरम् । तस्याऽनुभवतः सौख्यं, कालः कोपि व्यतीयिवान् ॥ १८३ ॥ उद्वृत्तोऽथाऽन्यदा तस्य, नृपतेर्विग्रहो नृपः । विक्षेपः प्रेषितस्तेनाऽविक्षेपेण विनिर्जितः ॥ १८४ ॥ सैनिकैर्ज्ञापितश्चैत्याऽचलन्मैत्रीबलः स्वयम् । कुमारेणाऽथ विज्ञप्तः, कीदृग्द्वेधापि विग्रहः ? ॥ १८५ ॥ संरम्भेणाऽलमेतेन, ताताऽऽदिश ततोऽत्र माम् । लभतां तातकोपाग्नावयं शलभतां द्रुतम् ॥ १८६ ॥ प्रेषितोऽथ नृपेणैष, मुक्त्वा रत्नवतीमगात् । यथासन्नेन सैन्येन, सहितो रहितो भिया ॥ १८७ ॥ विग्रहो विग्रहे मत्वा, कुमारं स्वयमागतम् । तस्थौ दुर्गमधिष्ठाय, विलं कुलिशदन्तवत्[7] ॥ १८८ ॥ सायग्रेव महायन्त्रं, त्रिस्तं संवेष्ट्य सेनया । चित्रं हीनबलं चक्रे, कुमारो नवमान्त्रिकः ॥ १८९ ॥ युध्यमानान्निषिध्याऽथ, सामन्तान्श्चपथैर्निजैः । प्रवेशं क[8]-तृण्यादेर्निरुध्य च समन्ततः ॥ १९० ॥ विशालबुद्धिमादिश्य, देशस्य परिपन्थने । स्थलस्थितः स्वयं तस्थौ, स्वस्थान ॠ

१ तण्डुलदालिकावत्। २ रात्रिः। ३ उत्सवदा। ४ कुर्कुटानाम्। ५ क्रोधात्। ६ चक्रमिथ्यो रक्त०। ७ कुलिशदन्त० मूषक। ८ मार्गनिरोधे।

सुस्थितः ॥१९१॥ [ युग्मम् ] अन्यदा च परिभ्राम्यन्, समेतो वानमन्तरः । कुमारं वाहकेलिस्थं, वीक्ष्य क्रुद्धो व्यचिन्तयत् ॥१९२॥ धीर एष दुराचारो, मया हन्तुं न शक्यते। तद्विग्रहस्य साहाय्यं, कृत्वाऽस्याऽपकरोम्यहम् ॥१९३॥ ध्यात्वेति विग्रहावासं, गतः पृष्टश्च तेन सः । हेतुमागमने प्राह, साहायककृते तव ॥१९४॥ गुणचन्द्रो हि मे वैरी, छुटितोऽर्धहतः पुरा । अधुना तु सहाऽनेन, नयेऽन्तं तव विग्रहम् ॥१९५॥ विग्रहः प्राह मां तत्र, गुणचन्द्रान्तिके नय । यथा समापयाम्यस्य, विग्रहं स्वयमप्यहम् ॥१९६॥ नीतोऽथ विग्रहस्तेन, खेचरेणाऽत्मपञ्चमः । विद्याबलात्कुमारस्य, वासवेश्म प्रवेशितः ॥१९७॥ दृष्ट्वा सुप्तं कुमारं स, विग्रहः प्राह विग्रहम् । कृत्वा समं मया शेषे, समुत्तिष्ठाऽऽयुधं कुरु ॥१९८॥ साधु साध्विति तं जल्पन्, कुमारः खड्गमग्रहीत् । उत्थितानङ्गरक्षांश्च, स्वद्रोहेण न्यषेधयत् ॥१९९॥ वञ्चयित्वाऽस्य घातं च, विशस्त्रं तं विधाय च । कुमारः पातयामास, केशेष्वाकृष्य विग्रहम् ॥२००॥ पातिताश्च भटास्तस्य, यामिकैस्तुमुलोऽभवत् । कुमारो जयतीत्युच्चैः, प्रनष्टो वानमन्तरः ॥२०१॥ दध्यौ च नैवमप्येष, हतो मेऽधन्यता ततः । गत्वाऽयोध्यां हतं वच्मि, लोकः शोचति तं यथा ॥२०२॥ स्यादस्याऽपकृतं हन्त!, कृतेनैतावतापि हि । चिन्तयित्वेत्ययोध्यां स, गन्तुं प्रावर्तताऽधमः ॥२०३॥ इतश्च विग्रहः प्रोक्तः, कुमारेणाऽऽयुधं कुरु । स प्रोचे नोचितं शस्त्रग्रहणं स्वामिनं प्रति ॥२०४॥ ततः स्वसेवया देवः, प्रसादं कुरुतां मयि । कुमारः प्राह तातस्ते, स्वामी भ्राताऽसि मे महान् ॥२०५॥ तत्तातान्तिकमागच्छ, विग्रहः प्रतिपद्य तत् । चक्रे वर्धापनं दुर्गमुदवेष्टत भूपभूः ॥२०६॥ विग्रहे विनिवृत्तेऽपि, विग्रहेण समन्वितः । विग्रहज्ञः पुरीं गन्तुं, प्रवृत्तः स सुविग्रहः ॥२०७॥ तदा च गुणचन्द्रस्य, बोधाय व्योमवर्त्मना । चतुर्ज्ञानधरः साधुधुरंधरसमा-

वृतः ॥२०८॥ क्रियास्वशिथिलाचारः, पुरा च मिथिलाधिपः । सूरिर्विजयधर्माख्यो, धर्माख्योद्दाम आययौ ॥२०९॥ [ युग्मम् ] गुणचन्द्रः परिज्ञाय, निजात्परिजनादमुम् । सुस्थितं स्थितमुद्याने, गुणसंभवनामनि ॥२१०॥ विग्रहेण प्रधानेन, सार्धं परिजनेन च । अत्यकुण्ठसमुत्कण्ठः, शुश्रूषितुमुपागतः ॥२११॥ [ युग्मम् ] नतस्तं सपरीवारममुना धर्मलाभितः । उपाविक्षदयं दक्षः, सहितो विग्रहादिभिः ॥२१२॥ तदैत्य सहसा कोपि, दिव्यरूपधरो दिवः । विद्याधरोऽनवद्यात्मा, गुरुं नत्वा च सोऽवदत् ॥२१३॥ विभो! त्वया यः कनकपुरस्वामिपुरः पुरा । उक्तो मार्गप्रपत्त्याद्यो, वृत्तान्तः स्वो महाद्भुतः ॥२१४॥ ओघेन स श्रुतो लोकात्तच्छ्रुतौ कौतुकं मम । तच्चेश धर्मप्रत्यूहस्तदाख्याहि प्रसादतः ॥२१५॥ तथैव गुणचन्द्रेण, कुमारेणापि भाषिते । विभुर्वृत्तान्तमात्मीयमाख्याति स्म तयोः पुरः ॥२१६॥ अस्त्यत्र भरतक्षेत्रे, मिथिला नामतः पुरी । तस्या विजयधर्माख्यो, बभूवाऽहं महीपतिः ॥२१७॥ ममाऽग्रमहिषी चन्द्रधर्मा नाम्नाऽतिवल्लभा । केनापि मन्त्रसिद्धेन, सा मन्त्रविधये हृता ॥२१८॥ ततो विजयदेव्या मे, वृत्तान्तोऽयं निवेदितः । श्रुत्वेति तस्यां मोहेन, महामोहं गतोऽस्म्यहम् ॥२१९॥ श्रीखण्डद्रवसिक्तोऽथ, तालवृन्तैश्च वीजितः । सदुःखं वारवेश्याभिः, कथंचिदपि बोधितः ॥२२०॥ मम दुःखजुषस्त्रीणि, दिनानि व्यतिचक्रमुः । परित्यक्तान्नपानादिदेवपूजादिकर्मणः ॥२२१॥ चतुर्थे दिवसे तीव्रतपोनिष्टप्तविग्रहः । आगाज्जटाधरो मन्त्रसिद्धो भूतिविभूषितः ॥२२२॥ ऊचे च नृपते! कस्मादाकुलः कुलभूषणः । मया मन्त्रविधानाय, तव नीता नितम्बिनी ॥२२३॥ आचारश्चात्र याचित्वा, प्रथमं नैव नीयते । तस्या न पीडा देहस्य, शीलस्य च कदाचन ॥२२४॥ न संतप्यं त्वया षण्णां, मासानामन्तरे तया । योक्ष्यसे त्वमिति प्रोच्य, मन्त्रसि-

द्धस्तिरोदधे ॥२२५॥ ज्ञात्वेति विरहं दीर्घं, मूर्च्छित्वाऽऽश्वासितः पुनः । तस्थौ तदा नवनवैर्विलापैर्विलपन्नहम् ॥२२६॥ इत्थं च नारकस्येव, पल्योपमसमा मम । महादुःखाद् व्यतिक्रान्ता, मासाः पञ्च कथंचन ॥२२७॥ अन्यदा च ममाऽकस्मात्प्रमोदो हृदि जृम्भितः । अर्हदागममाख्यच्च, मम वर्धापकस्तदा ॥२२८॥ दत्त्वा यथोचितं तस्य, गत्वा तत्र स्थितो विभुम् । नाथं त्यक्तभवोन्माथं[1], सर्वर्द्ध्या नन्तुमागमम् ॥२२९॥ दृष्ट्वा समवसरणं, प्राकारत्रयसुन्दरम् । उत्तीर्य द्विरदाद् द्वारोत्तरया तत्र चाविशम् ॥२३०॥ नत्वा जिनेन्द्रमुद्दामप्रमोदोद्भूतकण्टकः । मारेभे[2] सिंहमारेभे, स्तोतुं भून्यस्तमस्तकः ॥२३१॥ जय त्रिभुवनाधीश!, जय त्रिदशपूजित! । जय त्रिदोषनिर्मुक्त!, जय त्रिज्ञानवज्जने ॥२३२॥ जय क्रोधदवाम्भोद!, जय मानाचलाशने! । जय मायालतापर्शो!, जय लोभाब्धिकुम्भज[3]! ॥२३३॥ विषयैः पुरतो भूत्वाऽऽकृष्टो निजगुणैरहम् । कषायैः प्रेरितः पृष्ठे, पतितोऽस्मि भवावटे[4] ॥२३४॥ ज्ञानदर्शनचारित्रगुणत्रितयगाढया । गिरा वरत्रया[5]ऽऽकृष्य, नय मां शिवभूमिकाम् ॥२३५॥ जगद्वैद्य! कृपां कृत्वा, कर्माऽजीर्णं क्षिणु क्षणात् । पथ्यां निजगिरं दत्त्वा, तपस्तप्ताम्भसा समम् ॥२३६॥ भ्राम्यन्भवेष्टिकापाके, दष्टो मोहमहाहिना । मूर्च्छितोऽहमुपेक्ष्यो न, जगज्जाङ्गुलिक! त्वया ॥२३७॥ कषायैः करपादाद्यैश्छिन्नैरपि हि रोहति । मत्कर्मरिपुमानस्योत्तमाङ्गं छिन्धि तन्मनः ॥२३८॥ मन्मनो विध्यते भ्राम्यद्बहिर्विषयकण्टकैः । तद्देहि चरणत्राणं, जिनेश! निजदर्शनम् ॥२३९॥ इति स्तुत्वा जगन्नाथं, नत्वा गणधरादिकान् । साधूनिन्द्रादिकान्देवान्, यथोचितमुपाविशम् ॥२४०॥ ततो विभुर्भवाम्भोधिनिस्तारणतरीनिभाम् । शुद्धकाष्ठाश्रयां

१ उन्माथ० जाल । २ मारः काम एव इभस्तज्जयिन् । ३ कुम्भज० अगस्ति । ४ अवट० कूप । ५ रज्जु ।

कर्तुमारेभे धर्मदेशनाम् ॥२४१॥ अनाद्यनन्तो जीवोऽयं, कर्मणाऽनादिना युतः । पापेन जायते दुःखी, धर्मेण सुखितः पुनः ॥२४२॥ धर्मश्चरित्रधर्मोऽयं, श्रुतधर्माद्विजायते । स कषच्छेदतापैश्च, शुद्धो ज्ञेयः सुवर्णवत् ॥२४३॥ सर्वप्राणातिपातादिपापस्थाननिषेधनम् । सद्ध्यानाध्ययनादीनां, विधिर्धर्मकषो मतः ॥२४४॥ बाह्यक्रियाकलापेन, येनाऽयं नैव बाध्यते । शुद्धश्च जायते छेदः, स धर्मकनके मतः ॥२४५॥ जीवादिर्भाववादो यो, बन्धमोक्षप्रसाधकः । स धर्मजातरूपेऽत्र, ज्ञेयस्तापो मनीषिभिः ॥२४६॥ त्रिभिरेभिर्विशुद्धो यः, स धर्मो धर्म उच्यते । अविशुद्धस्त्रिभिर्यः स, फलकालेऽन्यथा भवेत् ॥२४७॥ समग्रपुरुषार्थेषु, धर्मो हि प्रथमो मतः । यस्तत्र वञ्चितः सर्वकल्याणेषु स वञ्चितः ॥२४८॥ कल्याणकामिना तस्मात्सर्वकल्याणकारणम् । कल्याणवत्परीक्ष्यैष ग्राह्यः कल्याणभाषितः ॥२४९॥ रत्नत्रयमयं तस्मादादायाऽमुं मयोदितम् । सफलं मानुषं जन्म, विधत्ताऽत्यन्तदुर्लभम् ॥२५०॥ श्रुत्वेति केऽपि संविग्नाः, श्रमणत्वं प्रपेदिरे । केपि श्रावकतां केपि, सम्यग्दर्शनमेव तु ॥२५१॥ तदा च समवसृतौ, वीक्ष्य देवीं व्यचिन्तयम् । कैषाऽत्र? मन्त्रसिद्धस्य, ततश्च वचनं स्मृतम् ॥२५२॥ पृच्छामि च जिनं चक्रे, किमघं प्राग्भवे मया? । देवीविरहजं दुःखं, यतो जातं सुदारुणम् ॥२५३॥ ततो नत्वा मया पृष्टो, मम प्राक्कर्मदूषणम् । सर्वं सर्वविदां मुख्यः, समाख्यातुं प्रचक्रमे ॥२५४॥ विन्ध्याद्रौ शिखरे सेनो, नाम्ना शबरनायकः । त्वमभूः प्रेयसी चेयं, श्रीमती नामतस्तव ॥२५५॥ अत्रस्तुर्विषये गृद्धुः, शिशुः श्वापदसन्ततेः । धृष्णुर्जिष्णुः स्वभावेन, समभूः शमभूर्न तु ॥२५६॥ तव वल्कदुकूलाढ्या, गुञ्जाफलविभूषणा । भ्रान्ता

---

१ जातरूप० सुवर्ण । २ कल्याण० कुशल । ३ कल्याण० स्वर्ण । ४ कल्याण० सर्वज्ञ ।

कान्तापि कान्तारे परिश्रान्ता त्वया सह ॥२५७॥ अन्यदा च निदाघर्तावनार्तस्त्वं तया समम् । विषयानुपभुञ्जानो. यावदास्से वनान्तरे ॥२५८॥ तावत्तत्र समुद्देशे, पथभ्रष्टः परिभ्रमन् । क्षुधा तृषा परिक्षीणः, साधुगच्छः समागमत् ॥२५९॥ सानुकम्पं त्वया पृष्टाः, साधवः! किं वनान्तरे । परिभ्रमत ? ते प्रोचुर्महात्मन्मार्गतश्च्युताः ॥२६०॥ श्रीमत्या भणितश्चासि, स्वामिन्नेतान्महामुनीन् । उत्तारय वनाद्भीमात्प्रीणीष्व च फलादिना ॥२६१॥ इदं धर्मनिधानं हि. प्रदत्तं वेधसा तव । ततस्त्वं जातरोमाञ्चः, फलमूलाद्यढौकयः ॥२६२॥ प्रोचे च साधुभिः श्राद्ध!, कल्पन्तेऽमूनि नैव नः । सिद्धान्ते यन्निषिद्धानि, सर्वज्ञैः सर्वदर्शिभिः ॥२६३॥ त्वयोचेऽनुग्रहः कार्यो, निर्वेदः स्यान्ममाऽन्यथा । श्रद्धालुत्वमथ ज्ञात्वा. साधवस्त्वां बभाषिरे ॥२६४॥ यद्येवं तर्हि जीर्णानि, फलमूलानि देहि नः । शीघ्रं च गह्वरात्तान्यानीय तान्प्रत्यलभयः ॥२६५॥ कृतार्थं मन्यमानः स्वं, सपत्नीकोऽपि तान्पथि । मुनीनस्थापयस्ते तु, तवाऽऽख्यन् धर्ममार्हतम् ॥२६६॥ त्वया ते स्थापिता मार्गे, धर्ममार्गे च तैर्भवान् । महतामुपकारो हि, सद्यः फलति निर्मितः ॥२६७॥ सजायोऽपि नमस्कारं, पाठितः साधुभिर्भवान् । समादिष्टश्च कर्तव्यमस्मदीयमिदं वचः ॥२६८॥ पक्षस्यैकदिने हित्वाऽऽरम्भं स्थित्वा च निर्जने । स्मर्तव्योऽयं नमस्कारः, सारः श्रीमज्जिनागमे ॥२६९॥ दिने तत्र च कश्चिद्वां, देहद्रोहं विचिन्तयेत् । कुर्याद्वा तदपि क्षन्तव्यमित्थं स्वर्गो भविष्यति ॥२७०॥ इति तैर्ज्ञानिभिः प्रोक्तं, युवाभ्यामुररीकृतम् । भावनापावनात्मभ्यां, तदाचीर्णं च सर्वदा ॥२७१॥ अन्यदा युवयोरित्थमात्तपौषधपोषयोः । आगात् सिंहः प्रियां त्रातुं, भवांश्चापं करेऽकरोत् ॥२७२॥ ऊचे च भीरु! मा भैषीः, शरेणैकेन हन्म्यमुम् । सा प्राह नाऽत्र संदेहः, किन्तु गौर्बाध्यते गुरोः

॥२७३॥ त्वयोचे भवतीस्नेहमोहादग्रे धनुर्मया । ततोऽलममुना यत्नं, कुरुष्व गुरुभाषिते ॥२७४॥ पतितो वां स
पञ्चास्यो, विलिखन्नखरैः खरैः । त्वया सहोढया सोढः, क्लीबजीवसुदुःसहः ॥२७५॥ नयताऽप्यन्यतो धातूनुपसर्गेण तेन
वाम् । गुरुगीरक्षधात्वर्थौ, निन्ये न त्वन्यतो वलात् ॥२७६॥ मुनी इव क्षमोपेतौ, परेतौ दम्पती युवाम् । त्रिदशत्वेन
सौधर्मे, जातौ पल्योपमायुषौ ॥२७७॥ इतोऽवरविदेहेऽस्ति, गुरुचक्रपुरं खवत् । राज्ञा कुरुमृगाङ्केन मृगाङ्केनेव राजितम्
॥२७८॥ तस्याऽग्रमहिषी वालचन्द्राख्या त्वं दिवश्च्युतः । तदीयकुक्षौ समरमृगाङ्काख्यः सुतोऽभवः ॥२७९॥ श्रीमती
तु नृपस्यालसुभूषणनृपस्त्रियाम् । कुरुमत्यामभूत्पुत्र्यशोकदेवीति नामतः ॥२८०॥ उभावपि कलाचार्यात्, प्रापथुः
सकलाः कलाः । भवनं पञ्चत्राणस्य, यौवनं च क्रमाद्युवाम् ॥२८१॥ दत्ता चाऽशोकदेवी ते, सुभूषणमहीभुजा । दिने
प्रशस्ते युवयोर्जज्ञे परिणयोत्सवः ॥२८२॥ काले सुखमये याति, पिता ते पलितेक्षणात् । राज्यं तव वितीर्याऽथ, प्रवव्राज
प्रियायुतः ॥२८३॥ तवाऽथ कुर्वतो राज्यं, भिल्लत्वभवसंभवम् । विपाकमागतं कर्म, जन्तुजातविघातजम् ॥२८४॥
ततश्च विजयेऽत्रैव, भम्भानगरभूभुजा । श्रीवलेन समं जज्ञेऽनिमित्तो विग्रहस्तव ॥२८५॥ सर्वे विघटिता योधास्तव
श्रीवलमाश्रिताः । युद्धे त्वं निहतस्तेन, पञ्चम्यां नारकोऽभवः ॥२८६॥ श्रुत्वा तव मृतिं कृत्वा, निदानं त्वद्भवानुगम् ।
पञ्चम्यां नारको जज्ञे, सशोकाऽशोकदेव्यपि ॥२८७॥ तत्र सप्तदशाम्भोधीनायुर्वां दुःखतो गतम् । अथोद्धृत्य युवां जातौ,
पुष्करार्धस्य भारते ॥२८८॥ दरिद्रकुलयोः पुत्रपुत्रीरूपतया क्रमात् । युवत्वे युवयोर्जज्ञे, विवाहः स्नेहशालिनोः ॥२८९॥
अन्यदा स्वगृहस्थाभ्यां, युवाभ्यां यतिनीयुगम् । वीक्षितं प्रतिलाभ्यैतत्पृष्टं कुत्र व आश्रयः ? ॥२९०॥ वसुश्रेष्ठिगृहासन्ने,

तदाख्याते प्रतिश्रये । गृहीतफुल्लाबुत्फुल्लनयनौ च गतौ युवाम् ॥२९१॥ दृष्टा च गणिनी तत्र, सुमता सुव्रताभिधा । जन्तूनां यद्वचःक्षीरात्तुष्टिः पुष्टिश्च जायते ॥२९२॥ यस्या एकादशाङ्गानि, महार्थभरभाञ्ज्यपि । अद्भुतं रसनाग्रेऽस्थुः, शम्भोदरसोदरे ॥२९३॥ ताभ्यां सपुलकाभ्यां सा, वन्दित्वा व्यतरत्तयोः । धर्मलाभाशिषं तौ चाऽपोचतपेशलया गिरा ॥२९४॥ भद्रौ! जिनाग्रतः पुष्पवृष्टिरत्र विमुच्यताम् । विमुच्येथां यथा कारागारात्संसारवासतः ॥२९५॥ तथा कृत्वा युवामेताऽभिवन्द्य गणिनीं पुनः । निविष्टौ कथितौ साध्व्या, गोचराग्रप्रविष्टया ॥२९६॥ धर्मश्रद्धालुकावेतौ, परिपृच्छ्य प्रतिश्रयम् । पार्श्वेऽस्माकं जिनेन्द्राणां, वन्दनार्थमथागतौ ॥२९७॥ गणिन्यूचे कृतं चारु, धार्मिकौ यदिहाऽऽगतौ । जन्तूनां दुःखतप्तानां, शरणं धर्म एव हि ॥२९८॥ स च सत्यो मनुष्यत्वे, तच्च स्वप्नवदस्थिरम् । तत्रापि विपत्ती ज्ञेयश्चन्दनाङ्गारकारकः ॥२९९॥ धर्माद्धि सर्वसौख्यानि, सशाश्वतपदान्यपि । स चाऽर्हद्भिः स्मृतैर्दृष्टैरर्चितैर्वन्दितैर्नुतैः ॥३००॥ तयाऽऽख्यातं युवां धर्मं, प्रपेदाथे जिनोदितम् । मधुमांसनिवृत्तिश्च, विहिता स्वहितावहा ॥३०१॥ प्रस्थितौ दम्पती गेहं, गणिन्या भणितौ युवाम् । अत्राऽऽगत्य सदा धर्मः, श्राव्यो दुःखनिषूदनः ॥३०२॥ प्रतिपद्येति कुर्वन्तौ, युवामभवतां क्रमात् । सुश्राद्धौ ब्रह्मलोके च, जातावायुःक्षये सुरौ ॥३०३॥ तत्र साधिकसप्ताब्धीनायुः संपूर्य तच्च्युतौ । युवां नृपतिगेहेषु, जज्ञाथे अत्र जन्मनि ॥३०४॥ तच्छिद्रत्वेऽर्जितं कर्म, क्षपितं नरके बहु । शेषं क्षुद्रमनुष्यत्वे, तच्छेषमधुना पुनः ॥३०५॥ तत्पापकर्मणामत्र, मत्वा विपाकमीदृशम् । तथा कुरु यथा नैव, दुःखान्याप्नोषि साम्प्रतम् ॥३०६॥ इत्याकर्ण्य मया सार्धं, देव्या परिजनेन च । प्रतिपन्नं व्रतं सैष, वृत्तान्तः प्राक्तनो मम ॥३०७॥ श्रुत्वेति पर्षत्संविग्ना,

गुणचन्द्रो गुरुं जगौ । प्रभोः प्रभावतो धर्मो, मया ज्ञातो यथातथः ॥ ३०८ ॥ ततो देहि गृहस्थत्वस्योचितानि व्रतानि मे । इत्युक्ते विग्रहेणाऽपि, द्वयोरपि ददौ प्रभुः ॥ ३०९ ॥ तौ भावश्रावकौ भक्त्या, गुरुं प्राणमतां ततः । गुरुणा गुणचन्द्रस्तु, भाषितो बहुमानतः ॥ ३१० ॥ कुमार! तव बोधायाऽऽगतो रत्नपुरादहम् । सञ्जातश्चैष तत्तत्र, याम्युन्मुखयतिव्रजे ॥ ३११ ॥ अयोध्यायां पुनर्भावि, भवता सह दर्शनम् । भाव्यं दृढव्रतेनोच्चैरादेश इति सोऽवदत् ॥ ३१२ ॥ गुरुः ससाधुरप्यभ्रगत्या प्रचलितस्ततः । एताभ्यां वन्दितो दूरं, वीक्षितश्चातिभक्तितः ॥ ३१३ ॥ तस्मिंश्चादर्शनीभूते, तावयोध्यां पुरीं प्रति । ससैन्यौ चलितौ हर्षकलितौ धर्मलाभतः ॥ ३१४ ॥ इतश्च गत्वाऽयोध्यायां, खेचरो वानमन्तरः । चक्रे कैतवतो वार्ता, कुमारस्य परिग्रहे ॥ ३१५ ॥ कुमारो निहतो युद्धे, विग्रहेणेति सा क्रमात् । श्रुता मैत्रीवलेनैष, न श्रद्धत्ते स्म तां पुनः ॥ ३१६ ॥ श्रुत्वा रत्नवती त्वेनां, मूर्च्छिता पतिता भुवि । आश्वासिता परिजनेनाऽलं वाष्पमुचा शुचा ॥ ३१७ ॥ राज्ञो निवेदितेऽत्रार्थे, तत्र राजा समागतः । तया वह्निप्रवेशाय, विज्ञप्तः प्रोचिवानिति ॥ ३१८ ॥ अश्रद्धेयमिदं तन्मा, कार्षीरविधवे! शुचम् । गोमायुना दृढेनाऽपि, पञ्चास्यो न विनाश्यते ॥ ३१९ ॥ त्वयि पुत्रं कुमारस्य, सिद्धादेशो दिशत्यलम् । दृष्टश्च कुशलस्त्वमो, मया मे नाऽऽकुलं मनः ॥ ३२० ॥ कुमारस्य च नोत्पातः, कोप्यभूदभिषेणने । तवाऽवैधव्यलक्ष्मीश्चाऽविपन्ना शिवमेव तत् ॥ ३२१ ॥ केनाऽपि हि कुमारस्य, मन्ये प्राग्भववैरिणा । कृता कैतववार्ताऽसौ, तत्त्यजैनमसद्ग्रहम् ॥ ३२२ ॥ इदमित्थमथो दैवं, यदि सत्यं विधास्यति । ततस्त्वमाकुला कस्मादस्माकमपि सा गतिः ॥ ३२३ ॥

१ युद्धप्रयाणे ।

प्रेषितः पवनगतिनामाऽऽस्ते लेखवाहकः । पञ्चदिन्यागते तत्र, करिष्यामो यथोचितम् ॥ ३२४ ॥ अर्वाक् पुनर्न संतप्यमथ रत्नवती जगौ । तातादेशः प्रमाणं मे, किञ्चिद्विज्ञपयामि तु ॥ ३२५ ॥ करोमि शान्तिकर्माऽहं, पूजयामि च देवताः । यावत्कुशलवार्तेति, तावदुज्झामि चाऽशनम् ॥ ३२६ ॥ राज्ञोचे कुर्विदं वत्से!, प्रसाद इति साऽवदत् । त्वं भवाऽविधवेत्युक्त्वाऽगमन्मैत्रीबल्ले नृपः ॥ ३२७ ॥ प्रारब्धं चाऽनया सर्वं, शान्तिकर्म यथोचितम् । दीनादीनां प्रदानानि, प्रादात्कल्पलतोपमा ॥ ३२८ ॥ दृष्टा च सर्वसंपत्तिः पूजार्थं गतया तया । विचारभूमिव्यावृत्ता, निर्विकारा वराकृतिः ॥ ३२९ ॥ युक्ता तपःशमज्ञानैः, साध्वीभिः परिवारिता । श्वेतवीस्वामिनः पुत्री, कोशलाधिपगेहिनी ॥ ३३० ॥ गणिनी गृहिपर्यायेऽभिधानेन सुसंगता । सुसंगता गुणैः सङ्गतापेन न तु संगता ॥ ३३१ ॥ [ विशेषकम् ] ता वीक्ष्य नत्वा चोवाच, दुःखिता भगवत्यहम् । तत्प्रसीद गृहगत्या, श्रोतुमिच्छामि किंचन ॥ ३३२ ॥ गणिन्याह भवत्वेवं. नाऽप्रीतिः कस्यचिद्यदि । सोचे गुरुजनः सर्वो, धर्मश्रद्धापरो मम ॥ ३३३ ॥ ततो रत्नवतीवाचा, गणिनीगेहमागता । कृतोपचारा सा चाऽस्याः, पुरतः समुपाविशत् ॥ ३३४ ॥ अथाऽऽह गणिनी वत्से!, सर्वे संसारिजन्तवः । दुःखपादपबीजेन, जन्मना संगताः खलु ॥ ३३५ ॥ बाध्यन्ते भोगतृष्णाभिः, कदर्थ्यन्ते तथेन्द्रियैः । जरसा चाऽभिभूयन्ते, पच्यन्ते च क्रुदाग्निना ॥ ३३६ ॥ चूर्यन्ते मानशैलेन, मोह्यन्ते दम्भजालतः । छाद्यन्ते मोहतमसा, प्लाव्यन्ते लोभवार्द्धिना ॥ ३३७ ॥ खण्ड्यन्ते च वियोगाद्यैर्ग्रस्यन्ते कालरक्षसा । भ्रम्यन्ते कर्मचक्रेण, कवल्यन्ते च मृत्युना ॥ ३३८ ॥ न केऽपि सुखितास्तस्मान्मुक्त्वा जिनमुनीनिमान् । श्वभ्रतिर्यग्नृदेवत्वगतिष्वखिलजन्मसु ॥ ३३९ ॥ यथा केऽपि रुजाक्रान्ता निर्विण्णा वेदनावशात् ।

स्वं निवेद्य सुवैद्यस्य तदुक्तक्रियया स्थिताः ॥ ३४० ॥ बाध्यमाना अपि रुजाऽऽरोग्यलाभस्य निर्वृतेः । न दुःखं गणयन्तीह, संजातसुखनिश्चयाः ॥ ३४१ ॥ [ विशेषकम् ] मुनयोऽपि तथा कर्मरोगसंपन्नवेदनाः । निवेद्य जिनवैद्यस्य, स्वं तदुक्तक्रियान्विताः ॥ ३४२ ॥ कर्मभिर्बाध्यमाना अप्यारोग्यप्राप्तिनिर्वृतेः । न दुःखं गणयन्त्येतन्निर्वाणसुखनिश्चिताः ॥ ३४३ ॥ ते ह्यमोहाः ससंतोषाः, समीपशिवसंपदः । सुखिनः परमार्थेन, तेभ्योऽन्ये दुःखिनः सदा ॥ ३४४ ॥ किंच वत्सेऽनयाऽऽकृत्या, निःशेषसुखसंजुषः । किं दुःखं तव? नाऽकथ्यं, यदि तत्कथ्यतां मप ॥ ३४५ ॥ तयाऽथ भर्तुरक्षेमवार्तादुःखे निवेदिते । गणिन्यूचेऽस्ति नाऽक्षेमस्तस्येदानीं दृढा भव ॥ ३४६ ॥ जानाम्यविधवाभावं, तव स्वरविशेषतः । स्वरमण्डलमेतच्च, निःसंदिग्धं जिनोदितम् ॥ ३४७ ॥ किं च यादृक् परानन्दयोगे भर्तुर्मृगीदृशः । स्वरः संभवतीदानीं, तादृशस्तव धार्मिकि! ॥ ३४८ ॥ त्वत्प्रत्ययनिमित्तं च, शास्त्रस्थं वच्मि किंचन । एवंविधस्वरा नारी, गुह्ये मषवती भवेत् ॥ ३४९ ॥ एवमेतदसौ प्रोच्य, प्रोचे पृच्छामि किंचन । विपाकः कर्मणः कस्य, जज्ञे भगवतीदृशः? ॥ ३५० ॥ गणिन्यवोचदज्ञानस्याऽल्पस्येदं विजृम्भितम् । अल्पेन कर्मणा यच्च. मयाऽऽसं शृणु तन्ननु ॥ ३५१ ॥ समस्ति कोशलाधीशो, नरेशो नरसुन्दरः । तस्याऽत्र जन्मपर्याये, संजज्ञे धर्मपत्न्यहम् ॥ ३५२ ॥ अन्यदा वाहकेल्यां स, वाहेनाऽपहृतोऽपतत् । अटव्यां तत्र चाऽपश्यदपूर्वां कामपि स्त्रियम् ॥ ३५३ ॥ तया प्रोक्तो महाराज!, स्वागतं ते? निविश्यताम् । राजा प्रोवाच कासि त्वं?, प्रदेशश्चैष को? वद ॥ ३५४ ॥ सोचे मनोरथा नाम, यक्षिण्यहमिदं पुनः । विन्ध्यारण्यं नृपः प्राह, त्वमत्रैकाकिनी कुतः? ॥ ३५५ ॥ सोचेऽहं नन्दनोद्यानादभूवं मलयं गता । सह प्रियेण स त्वत्र, क्रुद्धो निष्कारणं मयि ॥ ३५६ ॥ गतस्त्यक्त्वा स मां

च्छापि, तेनैकाऽहं नृपोऽवदत् । द्वाभ्यामपि कृतं नैव, सुन्दरं साऽवदत् कथम्? ॥ २५७॥ नृपः प्राहोज्झिता पत्या, तेनाऽसौ त्वं च नाऽगसः । सा प्राह तेन नाथेनाऽविशेषज्ञेन पूर्यताम्! ॥२५८॥ नाऽयं धर्मः कुलीनानां, विज्ञानां च नृपोदिते । सोचे किं तस्य विज्ञत्वं, योऽनुरक्तं जनं त्यजेत्? ॥ २५९॥ राज्ञोचे को विना दोषमनुरक्तं त्यजेज्जनम्? । साऽऽह योऽज्ञ इति प्रोच्य, सविलासं व्यलोकयत् ॥ २६०॥ राज्ञाऽवगणिता मोहदोषादाह गतत्रपा । राजंस्त्वयोक्तं निर्दोषं, कोऽनुरक्तं जनं त्यजेत्? ॥ २६१॥ ततोऽवमन्यसे किं मां?, राज्ञोचे जल्प मेदृशम् । परस्त्री त्वं हि सा प्राह पुंसः सर्वाः परस्त्रियः ॥ २६२॥ राज्ञोचे वक्रवाक्येन, परलोकविरोधिना । कृतमेतेन सा प्रोचेऽलीकवाक्यमपीदृशम् ॥ २६३॥ नृपः प्राह मयाऽलीकं, किमुक्तं? यक्षिणी जगौ । कोऽनुरक्तं जनं विज्ञो, विना दोषं परित्यजेत् ॥ २६४॥ किमत्राऽलीकमित्युक्ते, राज्ञा प्रोवाच सा यतः । परित्यजसि मां रक्तां, नृपतिः प्राह तामथ ॥ २६५॥ मयि नैवानुरक्ता त्वमहिते विनियोजनात् । अत एव न निर्दोषा, परलोकानवेक्षणात् ॥ २६६॥ सा प्राह किं बहूक्तेन?, न मानयसि मां यदि । ततोऽहं नियमेन त्वां, निहन्म्यथ नृपोऽवदत् ॥ २६७॥ कस्त्वया हन्यते भद्रे!, रण्डया यश्च हन्यते । नरस्तस्य न युक्तं स्यादपि दानं जलाञ्जलेः ॥ २६८॥ द्वेषदष्टाधरा साऽथ, पृथ्वीशं प्रत्यधावत । तस्य हुंकारमात्रेण, जज्ञे लुब्धददर्शना ॥ २६९॥ नृपोऽथ चलितः स्तोकं, भूमिभागं समागतः । यावत्तावदकाण्डेऽप्यपतत् काञ्चनपादपः ॥ २७०॥ अलग्नेऽत्र नृपोऽपश्यदूर्ध्वं दृष्टा च साऽम्बरे । तयोचे च दुराचार!, कतिकृत्वश्छुटिष्यसि ॥ २७१॥ नृपः प्रोवाच हा! पापे!, ममाऽसि त्वमगोचरे । अन्यथा तु

१ सह ।

निगृह्णामि, त्वामहं नात्र संशयः ॥ ३७२ ॥ तिरोहिता पुनः साऽथ, सैन्येनाऽश्वानुगामिना । मिलितः कथमप्यागात्, कोशलां कुशली नृपः ॥ ३७३ ॥ वर्धापनं कृतं लोकैरविश्वस्तस्तु सर्वतः । पृष्टो हेतुं मया प्रोचे, न किंचिदपि भूपतिः ॥ ३७४ ॥ मयोचे क्वाऽऽर्यपुत्रस्त्वं ?, क्व चाऽविश्वस्ततेदृशी ? । तन्निमित्तं समाख्याहि, चित्तं पर्याकुलं हि मे ॥३७५॥ नृपोऽवोचदलं पर्याकुलत्वेनाऽति चाऽऽदरात् । पृष्टेन कथितस्तेन, वृत्तान्तो यक्षिणीभवः ॥३७६॥ मयोचेऽभिनिविष्टा सा, कथमेतद्भविष्यति ? । राज्ञोचे देवि ! किं तस्या, भवेदभिनिवेशतः ? ॥ ३७७ ॥ यद्यामोम्यधुनाऽप्येतां, तत्तथाऽहं कदर्थये । कुरुतेऽभिनिवेशं सा, यथा न पुनरप्यमुम् ॥ ३७८ ॥ अन्यदा वासवेश्मस्थे, नृपे तत्र व्रजन्त्यहम् । स्त्रिया स्वतुल्यया सार्धमपश्यं तल्पगं नृपम् ॥ ३७९ ॥ संक्षुब्धाऽहं ततो दृष्टा, वलमाना महीभुजा । उक्ता क्व यासि पापिष्ठे ! ?, ज्ञाता माया मया तव ॥ ३८० ॥ देवि ! पश्यसि पापाया, धृष्टत्वमिति तां स्त्रियम् । उक्त्वा धावत मत्पृष्ठे, केशेषु जगृहे च माम् ॥ ३८१ ॥ मयोचे वेपमानाङ्ग्याऽऽर्यपुत्र ! किमिदं ननु ? । स मद्वचोऽवमत्यैतां, स्त्रियमाहूय चाऽवदत् ॥ ३८२ ॥ देवि ! पश्यसि पापाया, धृष्टत्वं कूट चेष्टितम् । यादृगुक्तं त्वया पश्य, तादृग्विहितमेतया ॥३८३॥ तव वेषं विधायैषा, समेताऽथ तयोदितम् । आर्यपुत्राऽलमनया, निर्वासय पुरादिमाम् ॥ ३८४ ॥ नृपेणाऽथ समाहूय, यामिका भणिता इति । दुष्टां यक्षवधूमेतां, देवीनेपथ्यधारिणीम् ॥ ३८५ ॥ कदर्थयित्वा निःशूकं, निर्वासयत वेगतः । आदेश इति तैरुक्त्वा, गृहीता वैरिणी यथा ॥ ३८६ ॥ [ युग्मम् ] आः ! पापिनीति जल्पद्भिः, केशबाहूत्तरीयतः । केनापि विधृता क्वापि, नृपस्याऽग्रे कदर्थिता ॥ ३८७ ॥ बहिर्नीत्वा च दुःशीलस्त्रीवद्गाढं विडम्ब्य च । निर्वास्य नगरोद्यानसन्निधावुज्झिताऽस्मि तैः ॥ ३८८ ॥ उक्ता च

भवने राज्ञः, प्रवेक्ष्यसि पुनर्यदि । ततोऽस्मदीयहस्तेन, गन्ताऽसि धमसद्मनि ॥ २८९ ॥ गतेषु राजमर्त्येषु, दध्यौ च किमहो ! मया । प्राप्तं पापपरीणामादपि मन्तुविहीनया ? ॥ ३९० ॥ व्यापादये तदात्मानं, पतित्वा गिरिशृङ्गतः । ध्यात्वेति तत्राऽऽरोहन्ती, दृष्टा साधुजनैरहम् ॥ ३९१ ॥ अथ ज्ञानयुतो दुःखिवत्सलः साधुभिर्वृतः । गुरुर्दृष्टो नतश्चैष, तेनाऽहं धर्मलाभिता ॥ ३९२ ॥ उक्त्वा सुसंगतं वत्से !, न संतप्यं हृदि त्वया । भवेऽत्र प्राणिनः प्रायो, भवन्ति विपदां पदम् ॥३९३॥ दुष्कृतानां कृतानां प्राक्, छुटन्ति न कथंचन । अकृत्वा वचनं चारु, वीतरागनिदेशितम् ॥ ३९४ ॥ मयोक्तं भगवन्किं प्राक्, पापकर्म मया कृतम् ? । यस्येदृशो विपाकोऽभूद्भगवानाह तच्छृणु ॥ ३९५ ॥ उत्तरस्यां दिशि ब्रह्मसेनो ब्रह्मपुरेश्वरः । अभूद्बहुमतस्तस्य, विदुरो नामतो द्विजः ॥ ३९६ ॥ पुरंदरयशा नाम्न, तत्पत्नी त्वं तयोः सुता । आसीश्चन्द्रयशा नामाऽतीतेऽस्मान्नवमे भवे ॥ ३९७ ॥ पित्रोरिष्टा भवत्याश्च, तौ धर्म दिशतः सदा । जैनं तव तु बालत्वात्, परिणामे समेति न ॥ ३९८ ॥ उत्पन्ना च तव प्रीतिर्यशोदामेभ्यभार्यया । बन्धुसुन्दर्यभिधया, सदा संक्लिष्टचित्तया ॥ ३९९ ॥ संसारस्याऽभिनन्दिन्या, कामभोगेषु गृद्धया । अनपेक्षाजुषा प्रेक्ष्य, पितृभ्यां वारिताऽसि च ॥४००॥ [ युग्मम् ] वत्सेऽलमेतत्सङ्गेन, पापमित्रसखी ह्यसौ । प्रतिषिद्धो हि तत्सङ्गस्तत्त्वयाऽवमतं वचः ॥ ४०१ ॥ अन्यदा त्वं गता वीक्ष्य, विषण्णां बन्धुसुन्दरीम् । अपृच्छः कारणं सोचे, विरक्तः सखि ! मे प्रियः ॥ ४०२ ॥ रक्तश्च मदिरावत्यां, मदिरायामिरापवत्[1] । अजातपुत्रभाण्डा च, विषण्णाऽस्मि ततो दृढम् ॥ ४०३ ॥ त्वयोचेऽलं विषादेन, कुरूपायं तयोदितम् । प्रव्राजिकोत्पलाख्याऽस्ति, कुशला

१ इराप० मद्यपायिन् ।

कर्मणीदृशे ॥४०४॥ न तु मेऽवसरस्तस्या, दर्शनेऽथ त्वयोदितम् । क्व साऽस्तीतरया प्रोचे, पूर्वस्यां नगराद्बहिः ॥४०५॥ गत्वा त्वयाऽथ साऽऽनीयाऽर्पिताऽस्यै त्वं गृहे गता । साऽर्चिता बन्धुसुन्दर्या, वृत्तान्तः कथितो निजः ॥४०६॥ परिव्राजिकया प्रोचे, धीरा भव करोम्यहम् । तस्यां विद्वेषणं पत्युः, सा प्राहाऽनुग्रहो महान् ॥४०७॥ तया तथा कृते श्रेष्ठी, तत्याज मदिरावतीम् । गृहीता सा शुचा बद्धं, त्वया कर्म च तद्भवम् ॥४०८॥ ततस्त्वं परिपाल्याऽऽयुः, कर्मदोषाद्वशाऽभवः । अप्रिया यूथनाथस्य, पतिता वारिबन्धने ॥४०९॥ मृता च वानरीत्वेनाऽभवस्तत्राऽपि दुर्भगा । यूथेशेन बहिर्यूथात्कृताऽथ पुरुषैर्धृता ॥४१०॥ लोहशृङ्खलया नद्धाऽऽयुः प्रान्ते सरमाऽभवः । शुनामनिष्टा सर्वेषां पूर्वकर्मानुभावतः ॥४११॥ कीटभक्षितदेहा च, मृता मार्जारिकाऽभवः । तत्राऽप्यनिष्टा सर्वेषामोतूनां कर्मदोषतः ॥४१२॥ मृता रथाङ्गयथो जाता, सर्वदाऽपि प्रियोज्झिता । मृत्वा बभूव चाण्डाली, तत्राऽपि प्रियवर्जिता ॥४१३॥ मृत्वाऽभूः शबरीत्वेन, सर्वानिष्टा च पलितः । आकृष्टा शबरैः कर्मदोषाद्दुःखेन जीवसि ॥४१४॥ अन्यदा मुनिभिर्मार्गभ्रष्टैः पृष्टाऽसि धार्मिकि! । कोऽयं प्रदेशो मार्गश्च, दूरे कियति तिष्ठति ॥४१५॥ त्वयोचे सह्यकान्तारमिदं मार्गश्च सन्निधौ । दर्शयामीति भाषित्वा, बहुमानेन दर्शितः॥४१६॥ चिन्तितं च विशुद्धेन चेतसाऽमी विमत्सराः । प्रियंवदाः प्रशान्ताश्च, भाग्यैरेतत्समागमः ॥४१७॥ त्वयेति शुद्धचित्तत्वाद्बोधिबीजं समर्जितम् । ततश्च प्रणता भावात्साधुभिर्धर्मलाभिता ॥४१८॥ तदा त्वयाऽल्पकारम्भमार्दवार्जवभावतः । साधुसन्निधिसामर्थ्यान्मनुष्यायुर्न्यबध्यत ॥४१९॥ गतेष्वपि मुनिष्वेषु, तदनुस्मरणात्तव ।

---

१ हस्तिनी । २ शूली । ३ विन्ध्याटवी ।

नैवाऽत्रुटच्छुभो भावस्त्रुटितं जीवितं पुनः ॥४२०॥ जाता तत्कर्मशेषेण, सहिता श्वेतवीपतेः । दुहिता कोशलेशेनोपयताऽसि च रूपतः ॥४२१॥ कर्मशेषादयं च त्वां, यक्षिणीरूपवञ्चितः । इत्थं कदर्थयामास, वत्सेऽनुत्सेकवानपि ॥४२२॥ श्रुत्वेत्यपगतं मोहतमो मेऽभूद्विरागिता । जाता जातिस्मृतिर्वृद्धः, संवेगो वन्दितो गुरुः ॥४२३॥ उक्तं च भगवन्नेवमिदं मम कदा पुनः । प्राच्यकर्मविपाकोऽयं, सकलोऽपि त्रुटिष्यति ॥४२४॥ गुरुराख्यदहोरात्रादस्मादेव मयोदितम् । कथं तां यक्षिणीमार्यपुत्रो विज्ञास्यति प्रभो!? ॥४२५॥ गुरुः प्रोचेऽद्य रात्रौ त्वत्स्वभावात्तुल्यभावतः । साशङ्कमानसः स्वस्य, मन्त्रिणः कथयिष्यति ॥४२६॥ न्यस्तेऽथ मन्त्रिणा जैनविम्बे प्रोल्लङ्घिते तया । नेयं देवी महीपालश्चित्ते निश्चेष्यतीदृशम् ॥४२७॥ कृष्टरिष्टिस्ततश्चैनां, हन्तुमुत्थास्यति स्वयम् । तिरोधास्यति निष्पुण्या, सा पुण्यजननार्यपि ॥४२८॥ मयोचेऽकुशलं तस्या, नाऽऽर्यपुत्रः करिष्यति । गुरुः प्राह न किं तु त्वद्दुःखात्संतप्स्यतेऽधिकम् ॥४२९॥ मयोचे भगवन्दोषो, नाऽऽर्यपुत्रस्य कश्चन । केवलं मम कर्मेदं, गुरुः प्राह तथेति च ॥४३०॥ तथाऽपि मोहदोषेण, संतप्तः [१]श्वः समेष्यति । त्वां दृष्ट्वा च त्वया युक्तः, सुखितोऽति भविष्यति ॥४३१॥ ततस्त्वया न संतप्यं, मयोक्तं भगवन्! गतः । त्वदीक्षणेन संतापो, विरक्तं च मनो भवात् ॥४३२॥ तत्किं मम नृपागत्या ?, वियोगान्ता हि संगमाः । कीदृशं सुखितत्वं च, जरामरणदुःखिनाम् ? ॥४३३॥ गुरुराख्यदिदं सत्यं, किन्त्वत्यन्तसुखी भवेत् । जिनोक्तक्रियया तां च, कुर्वन् सुस्थी भविष्यति ॥४३४॥ एतदाकर्ण्य हृष्टाऽहमुक्ता भगवतेति च । सर्वमन्त्रोत्तमं वत्से!, सर्वकल्याणकारणम् ॥४३५॥ दुर्लभं जीवलो-

---

१ आगामिनि दिने ।

केऽत्र, सर्वभीतिप्रणाशनम् । अचिन्त्यशक्तिसंयुक्तं, शिवसौख्यस्य साधकम् ॥४३६॥ पूजनीयं सतां सर्वगुणानां प्रापकं परम् । परमेष्ठिमयं मन्त्रं, गृहाण जिनभाषितम् ॥४३७॥ [विशेषकं] महाप्रसाद इत्युक्ते, मयाऽथ भगवाञ्जगौ । प्राङ्मुखी वामतस्तिष्ठ, स्थिता किञ्चिन्नता तथा ॥४३८॥ भगवानुपयुक्तोऽथाऽस्खलितादिगुणान्वितम् । ददौ पञ्चनमस्कारं, प्रत्यैच्छं तमहं मुदा ॥४३९॥ नष्टेव भवभीर्मेऽथ, समेतेवाऽथ निर्वृतिः । अनाख्येयप्रमोदोऽभूद्भगवानूचिवान् तथा ॥४४०॥ वत्से! मन्त्रं स्मरन्त्याऽमुं, त्वया गिरिगुहस्थया । निशि स्थेयमहं यामि, श्वः पुनर्दर्शनं हि नः ॥४४१॥ मयोचेऽनुगृहीताऽस्मि, गतश्च भगवांस्ततः । नमस्कारपराया मेऽतिक्रान्ता क्षणदा क्षणात् ॥४४२॥ प्रातः सादिशतैर्युक्ते, समेते नृपतावहम् । दृष्टा सादिभिराख्याता, तस्य सोऽन्तिकमागमत् ॥४४३॥ साश्रुरुचे न कोप्यं मे, मन्तुरज्ञानजो ह्ययम् । मयोचे कीदृशः कोपो, भोक्तव्ये निजदुष्कृते? ॥४४४॥ हेतुरत्राऽहमित्युक्ते, भूनेत्राऽहमभाषिषि । आर्यपुत्र! मया सोढं दुःखं जन्मान्तरेषु यत् ॥४४५॥ तत्राऽपि किं भवान् हेतुर्दोषोऽयं मत्कृतः खलु । राज्ञोचे देवि! सामान्याद्विजानाम्यहमप्यदः ॥४४६॥ विशेषज्ञानयुक्तेव देवी मन्त्रयते पुनः । मयोचे सत्यमेवेदं, राज्ञोचे कथमुच्यताम् ॥४४७॥ मयाऽऽख्यायि मृतिध्यानगुरुसंदर्शनादिकः । श्रीनमस्कारलाभान्तो, वृत्तान्तो निखिलस्ततः ॥४४८॥ ततो भगवतो ज्ञानातिशयाद्विस्मितो नृपः । अल्पपापमहद्दुःखश्रुतेः संवेगमागमत् ॥४४९॥ ऊचे च क्व गुरुः? प्रोक्तं, मयाऽस्ति निकषा गिरिम् । मया सहोपगुर्वेष, गतः परिजनान्वितः ॥४५०॥ प्राणमत्प्रमनाः पूज्यममुना धर्मलाभितः । स प्राह सर्वो वृत्तान्तो, देव्याऽऽख्यायि मम प्रभो! ॥४५१॥ तदल्पस्याऽपि पापस्य विपाकः स्याद्यदीदृशः । किं कर्तव्यं ममाऽनेकविधपापजुषस्तदा? ॥४५२॥ विभुराह

तेऽमुष्याः, कदलानि च नन्दया । सितपुष्पकरश्चैत्य, प्रोवाचेति पुरोहितः ॥४७०॥ देवि! देवगुरूणां हि, वर्तते वन्दनक्षणः । दध्यौ रत्नवती हृष्टा, संदेहो नात्र कश्चन ॥४७१॥ अनुकूलः समग्रोऽपि, यदेष शकुनव्रजः । आर्यपुत्रेण तत्सम्यक्, वीतरागवचः श्रुतम् ॥४७२॥ लब्धः शिवाध्वा वाग्देवीतुल्यायाः कथमन्यथा । एतस्याः परमानन्दशब्दोऽयं स्फुरितो मुखात् ॥४७३॥ अथ नत्वा गणिन्युक्ता, स्थातुं वः कल्पते निशि । गणिन्युवाच यत्र त्वं, तत्र नैवं विरुध्यते ॥४७४॥ गच्छामि सांप्रतं तावन्न दूरेऽस्मत्प्रतिश्रयः । इत्युक्त्वा गणिनीं यान्तीं, रत्नवत्यनुजग्मुषी ॥४७५॥ निवृत्य श्वोचितादेशात्, सान्ध्यकृत्यं विधाय च । नमस्कारपरा रात्रिमतिवाहयति स्म सा ॥४७६॥ प्रातः श्वशुरमापृच्छ्याऽनुज्ञाता तेन साऽऽगमत् । वन्दित्वा गणिनीं श्रुत्वा, धर्ममागात्पुनर्गृहम् ॥४७७॥ द्वितीयदिवसे धर्मानुरागाद्गणिनी गृहे । रत्नवत्याः समागत्याऽऽचख्यौ धर्मकथां मुदा ॥४७८॥ इत्थं गणिन्युपास्त्या सा, निनाय चतुरो दिनान् । पञ्चमे पर्युपासाना, गणिनीं यावदस्ति सा ॥४७९॥ समेत्य चन्द्रसुन्दर्या, तावत्तस्या निवेदितम् । सत्यं भगवतीवाक्यं, त्वच्चित्तानन्द आगमत् ॥४८०॥ तुष्टा रत्नवती तस्यै, व्यतरत्पारितोषिकम् । कुमारस्तु समं यातो, विग्रहेण नृपान्तिकम् ॥४८१॥ आख्याय विग्रहोदन्तं, तातेन बहुमानितः । आगतो गणिनीयुक्तां, प्रियां प्रेक्ष्य स पिप्रिये ॥४८२॥ ववन्दे गणिनीं लब्धधर्मलाभोऽवदच्च ताम् । मम पुण्योदयं पश्य, महान्तं भगवत्यमुम् ॥४८३॥ यतः श्रीसुगृहीताख्यगुरुणा बोधितोऽस्म्यहम् । त्वया च बोधिता देवी, द्वितीयं हृदयं मम ॥४८४॥ दृष्टा भगवती जन्मशतदुर्लभदर्शना । गणिन्युवाच पुण्यानुबन्धिपुण्यात्र किं भवेत्? ॥४८५॥ अस्माद्धि प्राणिनां मुक्तिसुखं स्यात्परं तु किम्? । कुमारः प्राह मुक्तिः स्यात्पु-

ण्यपापक्षयेऽपि चेत् ॥४८६॥ तथापि कारणं तत्र, पुण्यं पुण्यानुबन्धकम् । तद्विपाकं विना भावस्तादृशो हि न लभ्यते ॥४८७॥ गणिन्यूचे कुमारेण साध्वेतदवधारितम् । अथवा कुशलानां स्याद्धेतुमात्रं हि देशना ॥४८८॥ इत्थं धर्माख्यया वेलां, निर्गम्य कियतीमपि । तावापृच्छ्य परिप्रीतौ, निजस्थानं गणिन्यगात् ॥४८९॥ सधर्मधर्मसंपत्त्या, तुष्यत्तन्मिथुनं मिथः । चक्रे भुक्तोत्तरं धर्मवृत्तान्तं च श्रुतानुगम् ॥४९०॥ गतौ च गणिनीपार्श्वे, तस्याः शुश्रुवतुर्गिरम् । उचिते समये वेश्म, पुनरेव समागतौ ॥४९१॥ इत्थं प्रतिदिनं धर्मयोगाराधनयुक्तयोः । बाढं भावितयोर्धर्मे, पुत्रः कालक्रमादभूत् ॥४९२॥ पुत्रपुत्राननं वीक्ष्य, मुदा मैत्रीबलो नृपः । गुणचन्द्रं न्यधाद्राज्ये, स्वयं तु व्रतमग्रहीत् ॥४९३॥ तस्य निष्कण्टकं राज्यं, न्यायकर्मसमन्वितम् । परिपालयतः कालः, कियानप्यातिजग्मिवान् ॥४९४॥ अन्यदा प्रावृडभ्यागाच्छन्नं जलधरैर्नभः । व्यजृम्भतोर्जितागर्जिनीपवाता ववुः सुखाः ॥४९५॥ उल्ललास बलाकालिर्विद्युद् विद्योतते स्म च । प्रनृत्ताः केकिनो वृष्टा, मेघा हृष्टाश्च चातकाः ॥४९६॥ नष्टं हंसै रुतं भेकैरुद्भिन्नं कन्दलैर्नवैः । खिन्नं पथिकजायाभिर्निर्वृत्तं महिषीव्रजैः ॥४९७॥ नृपोऽथ सरितः पूरं, द्रष्टुं परिजनान्वितः । ययौ दृष्टा च सा तेन, तृणकाष्ठादिसंकुला ॥४९८॥ कूले प्रपातयन्ती द्राग्, नाशयन्ती तटद्रुमान् । कल्लोलकलिता त्यक्तमर्यादाऽत्यन्तभीषणा ॥४९९॥ आकुला क्रूरयादोभिर्वर्जिता दूरतो बुधैः । आवर्त्तैः संकुलाऽनेकैः, कलुषं स्वं प्रकुर्वती ॥५००॥ [ विशेषकम् ] तां निरीक्ष्य मुहूर्तेन, प्राविशन्नगरीं नृपः । शरद्यथ व्रजन्वाहकेलिमैक्षत तां नदीम् ॥५०१॥ स्वच्छोदकामपक्रूरसत्त्वां साधुजनोचिताम् । तां वीक्ष्य पूर्ववृ-

१ पावस० जलधरजीव ।

त्तान्तस्मृतेर्दध्यौ नराधिपः ॥५०२॥ मन्ये नदीरयप्रायं, पुरुषस्यर्द्धिविस्तरम् । यदेषोऽपि महारम्भः, शुभकूलप्रपातकः ॥५०३॥ विनाशयति धर्मद्रून्, स्वं च कश्मलयत्यलम् । सत्त्वैः संयुज्यते क्रूरैः, साधुभिश्च वियुज्यते ॥५०४॥ सेव्यते कृत्यमर्यादारहितो मदवीचिभिः । अपकारी स्वपरयोर्मोहावर्तविवर्ततः ॥५०५॥ [विशेषकम्] स्वभावे तु मनःशुद्धः, पापमित्रविवर्जितः । जीवलोकोपकाराय, जायते सिन्धुवाहवत् ॥५०६॥ बाह्यस्तु विस्तरः पुंसः, परलोकान्तरायकम् । तत्तं विहाय स्वार्थाय, कुर्वे यत्नं समाहितः ॥५०७॥ विचिन्त्येति समागत्य, निजाकूतं न्यवेदयत् । रत्नवत्यै प्रधानानां, सामन्तानां च मन्त्रिणाम् ॥५०८॥ एतैरनुमतो न्यस्य, राज्ये धृतिबलं सुतम् । गुरुं काशिस्थितं मत्वा, तत्राऽगात्सपरिच्छदः ॥५०९॥ नत्वा गुरुं निवेद्य स्वाकूतं तेनोपबृंहितः । शुभे मुहूर्ते काशीशकृतनिष्क्रमणक्षणः ॥५१०॥ रत्नवत्या प्रधानेन समं परिजनेन च । गुरोर्विजयधर्माख्याद्यतिधर्मं नृपोऽगृहीत् ॥५११॥ [युग्मम्] काले कियत्यप्यभ्यस्तसूत्रो ज्ञातक्रियाक्रमः । गुरूनापृच्छ्य कल्पज्ञो, जिनकल्पं प्रपन्नवान् ॥५१२॥ तपसा सत्त्वसूत्राभ्यामेकत्वेन बलेन च । तुलनां पञ्चधा कृत्वा, निर्व्यूढस्तासु सात्त्विकः ॥५१३॥ [युग्मम्] कियत्यपि गते काले, कोल्लाके सन्निवेशने । समागतो रहस्येष, स्थितः प्रतिमया स्थिरः ॥५१४॥ तदा च मलयं गच्छन्, वीक्ष्य तं वानमन्तरः । क्रुद्धो गिरिशिलामेकां, तस्योपरि विमुक्तवान् ॥५१५॥ स तया पीडितः काये, न तु भावे महामनाः । अहतेऽत्र पुनः क्रुद्धः, शिलामन्यां मुमोच सः ॥५१६॥ एवं त्रिः प्रहतस्तेन, शिलया न मृतो यदा । तदा धर्मान्तरायार्थमुपायं विदधेऽपरम् ॥५१७॥ कस्यापि सदनं मुष्ट्वा, मुक्त्वा मोषं च सन्निधौ । आख्यदारक्षकाणां स, तेऽथ तत्र समाययुः ॥५१८॥ वीक्ष्य तं भगवन्तं च, शान्त-

मूर्तिं तपःकृशम् । ते दध्युः कथमीदृक्षः, कर्मेदृक्षमयं श्रयेत् ॥५१९॥ अथवा दम्भवैचित्र्यं, मोषमन्वेषयामहे । दृष्टे
मोषे घृताशङ्कैः, पृष्टश्च भगवानिमैः ॥५२०॥ न स जल्पत्यर्थकेन, ताडितोऽपि न जल्पति । हृष्टस्तु खेचरो बद्धं, नर-
कायुर्न्यकाचयत् ॥५२१॥ तलारक्षैरथाऽऽख्यायि, विश्वसेनाय भूभुजे । समेतः प्रत्यभिज्ञाय, सं ननाम स भावतः ॥५२२॥
ऊचे चाऽऽरक्षकान् किञ्चिद्विलोमं न कृतं मुनेः । ते प्रोचुस्तादृशं किञ्चिन्न चक्रेऽथ नृपोऽवदत् ॥५२३॥ अहो ! स्वाम्य-
यमस्माकं, गुणचन्द्राभिधो नृपः । सर्वसङ्गपरित्यागी, ध्यानयोगं समाश्रितः ॥५२४॥ समस्तेष्वपि भावेषु, ममत्वपरिव-
र्जितः । करोति सफलं जन्म, मानुषं जिनकल्पतः ॥५२५॥ धन्योऽयमिति ते प्रोच्य, क्षमयामासुराशु तम् । राज्ञोचे
कथितं येन, तमानयत लघ्विह ॥५२६॥ श्रुत्वेत्यदर्शनीभूतः, खेचरो वानमन्तरः । तमदृष्ट्वा च ते प्रोचुरधुनैव गतः
क्वचित् ॥५२७॥ राज्ञोचेऽमानुषः स स्यादुपसर्गकरो विभोः । तेन संक्लिष्टचित्तेन, तदलं पापकारिणा ॥५२८॥ यात यूयं
सभाख्यात, पुरे सान्तःपुरेऽपि च । राजर्षिगुणचन्द्रोऽस्त्यागतस्तं नमताऽऽदरात् ॥५२९॥ तदादेशे तलारक्षैर्गत्वा तत्र
निवेदिते । अभ्येत्य पूजयित्वा च, भक्त्या सर्वैर्नतः प्रभुः ॥५३०॥ अथाऽश्मपातनिर्घातमूर्च्छाव्यपगमे सति । राज्ञो राज-
र्षिवृत्तान्तमित्याख्यत्काष्ठभारिकः ॥५३१॥ त्रिः कोऽपि भगवत्यस्मिञ्शिलां व्योमचरोऽमुचत् । तन्निर्घाताच्च मे मूर्च्छा-
ऽजाता वेद्म्यपरं न तत् ॥५३२॥ ततो नृपः सशुद्धान्तः, शुद्धान्तःकरणोऽधिकम् । शोचन्भगवता ध्यानं, पारयित्वेति
भाषितः ॥५३३॥ अलं शुचा महाराज!, दुःखरूपो ह्ययं भवः । सन्त्रस्तस्तापसंतप्ता, धर्मशाखिनमाश्रिताः ॥५३४॥
सम्यक्त्वमूलं सिद्धान्तस्कन्धं व्रतलतान्वितम् । शीलाङ्गपत्रलं देवनरर्द्धिकुसुमव्रजम् ॥५३५॥ जिनवाकुल्ययाऽजस्रं,

सिच्यमानमतुल्यया । निर्वाणफलमश्रान्तं, सेवितं साधुपक्षिभिः ॥५३६॥ [ विशेषकम् ] मूढास्तु तुच्छभोगानां, कृते क्लिश्यन्त्यनेकशः । जानन्तोऽप्यस्थिरं देहं, स्वं पश्यन्त्यजरामरम् ॥५३७॥ किं च राजन्मयाऽन्यत्र, संसारे भ्रमता चिरम् । किं किं दुःखं न संप्राप्तं, बहुकृत्वः सुदारुणम् ? ॥५३८॥ त्रयस्त्रिंशत्पयोध्यायुरप्रतिष्ठानकस्थितः । भिन्नोऽस्म्युत्पातपाताभ्यां, वज्राश्मकमलेष्वहम् ॥५३९॥ कन्दुकुम्भीकवल्लीषु, दीप्तासु नरकाग्निना । पक्वः सीमन्तकावासे, निःसीमं दुःखमाश्रितः ॥५४०॥ निहतोऽस्म्यायुधैस्तीव्रैर्नरकेष्वपरेष्वपि । भिन्नो रौद्रत्रिशूलैश्च, वज्रतुण्डैश्च भक्षितः ॥५४१॥ बहुशो वाहितस्तप्तयुगेषु च रथेष्वहम् । हिंसादोषाद्बलीचक्रे, कर्त्तं कर्त्तं तिलं तिलम् ॥५४२॥ जिह्वामुत्खाय चाऽसत्याजल्पितोऽस्मि बलादपि । परद्रव्यापहाराच्च, गृध्रैः क्षिप्तोऽस्मि दिक्ष्वहम् ॥५४३॥ श्लेषितः शाल्मलिं तप्तां, परदाराभिलापतः । जग्धश्च ढिङ्ककङ्काद्यैर्बह्वारम्भपरिग्रहात् ॥५४४॥ भक्षितोऽस्मि निजं मांसं, मांसभक्षणदूषणात् । त्रपुताम्रादिकं तप्तं, पायितो मद्यपानतः ॥५४५॥ तिर्यक्ष्वपि मया दुःखं, प्राप्तं तीव्रमनेकशः । बन्धवाहनभाराद्यैर्दहनाङ्कनभेदनैः ॥५४६॥ नरेष्वपि नराधीश !, दुःखदारिद्र्यविद्रवैः । तन्नकिञ्चिदिदं दुःखं, त्यज निष्कारणां शुचम् ॥५४७॥ राज्ञोचे नैव शोच्यस्त्वं, सफलं तव जीवितम् । संप्राप्तं हि विवेकाख्यं, निर्जिता भावशत्रवः ॥५४८॥ वश्या तपःश्रीस्त्यक्तश्च प्रमादः स्वं स्थिरं व्यधाः । व्यतीतं भवकान्तारं, प्राप्तप्राया च निर्वृतिः ॥५४९॥ [ युग्मम् ] शोच्यस्तु क्लिष्टसत्त्वोऽयमुपसर्गकरस्तव । भगवानाह भूपाल !, संसारोऽसौ सदेदृशः ॥५५०॥ चिन्तयाऽऽत्मानमन्यस्य, चिन्तया किं तया तव ? । नृपः प्राहाऽऽदिश स्वामिन् !, कुतो गृह्णाम्यहं व्रतम् ? ॥५५१॥ मुनिः प्राह भगवतो, गुरोर्विजयधर्मतः । वचनं गुणच-

न्द्र्पैस्तथेति विदधे च सः ॥५५२॥ अथ क्षीणायुषो वानमन्तरस्याऽभवद्गदः । समेतश्च स्वभावोऽस्य, संमुखो नरकावनेः
॥५५३॥ विपर्यासोऽभवत्तस्य शुभेषु विषयेष्वतः । ततो विष्टाङ्गरागाद्यैर्बभूव मनसो धृतिः ॥५५४॥ महाक्रन्दयुतो
रौद्रध्यानी मृत्युवशंगतः त्रयस्त्रिंशत्पयोध्यायुः, सप्तम्यां नारकोऽभवत् ॥५५५॥ कृत्वा संयममुज्ज्वलं समतयाऽऽत्मानं
विधूतैनसं, पश्यन्नात्मनि पादपोपगमनं श्रित्वा च तत्त्वाश्रयः । जीवः श्रीगुणचन्द्रभूपतियतेर्देवो विमाने त्रयस्त्रिंशत्-
सागरजीवितः समभवत्सर्वार्थसिद्धाभिधे ॥५५६॥ इति श्री हरिभद्रोक्त्या, प्रद्युम्नाचार्यगुम्फिते । समरादित्यसंक्षेपेऽज-
निष्ट जनिरष्टमी ॥५५७॥

## [ अथ नवमो भवः ]

इतश्च जम्बूद्वीपेऽत्र, भरतक्षेत्रमध्यतः । पुर्यस्त्युज्जयिनी नाम, जयिनी सर्वसम्पदाम् ॥१॥ अस्थैर्यकुपितेनेव, वेधसा
वीक्षिता चिरात् । निबद्धा परिखारज्ज्वा, लक्ष्मीस्त्रिभुवनस्य या ॥२॥ सरोभिर्यत्र सीमानः, पद्मिनीभिश्च तान्यलम् ।
ताश्च पद्मैर्विराजन्ते, तानि च भ्रमरव्रजैः ॥३॥ नृपः पुरुषसिंहोऽस्ति, तत्र सिंहपराक्रमः । द्विषद्द्विपप्रतिघाते, चित्रं न
नखरायुधः ॥४॥ यशःशशी द्विषां रात्रिं, प्रतापार्कः सतां दिनम् । विधत्तो युगपद्यत्रोदितौ पूर्वमहीभृति ॥५॥ चन्द-
नाभं यशो यस्य, प्रतापोऽग्निशिखोपमः । दिग्देव्यर्चाकृते भातश्चतुःसमतया युतौ ॥६॥ तस्य प्रियतमा रूपविजितान-
ङ्गसुन्दरी । सर्वाङ्गसुन्दराकारा, सुन्दरी नामतोऽभवत् ॥७॥ भुञ्जानस्य तया सार्धं, तस्य वैषयिकं सुखम् । धर्मार्थावा-

धया कालो, व्यतीयाय कियानपि ॥ ८ ॥ जीवोऽथ गुणचन्द्रर्षेश्च्युतः सर्वार्थसिद्धितः । उत्पन्नः सुन्दरीकुक्षौ, सा च स्वप्नमुदैक्षत ॥ ९ ॥ सूर्यं वदनमार्गेण, विशन्तमुदरान्तरे । विबुद्धा दयितायाऽऽख्यन्मुदितः प्राह तामयम् ॥ १० ॥ तमोपहो जगच्चक्षुर्बोधयन्कमलाकरम् । ऋषिस्तुत्यो जनैर्वन्द्यो, जीवलोकप्रकाशकः ॥ ११ ॥ सर्वक्रियाकलापस्य, कारणं तेजसां निधिः । अद्भुतस्तव सूर्याभः, सूनुर्देवि! भविष्यति ॥ १२ ॥ [ विशेषकम् ] साऽभिनन्द्य वचस्तस्य, त्रिवर्गनिरता मुदा । उद्भटं गर्भं दध्रे, शरभं वनभूरिव ॥ १३ ॥ तत्प्रभावाज्जगन्नेत्रस्वप्नसंदर्शनादिव । नेत्राम्भोजद्वयं देवी, विकस्वरतरं दधौ ॥ १४ ॥ मन्ये तनुतनुर्गर्भमतनुं वोढुमक्षमा । बभार देवी देहस्योपचयं निचयं श्रियः ॥ १५ ॥ गूढेऽपि दिनकृत्यत्र, परित्रस्ततमस्ततिः । देवी समभवत्पूर्वपर्वतैकतटीनिभा ॥ १६ ॥ प्रसूतिसमये प्राप्ते, प्रशस्तेऽह्नि प्रकाशकम् । प्रद्योतनमिव प्राची, प्रसूते स्म तनूरुहम् ॥ १७ ॥ सिद्धमत्यभिधा चेटी, तं नृपाय न्यवेदयत् । नृपः सपरितोषोऽस्यै, व्यतरत्पारितोषिकम् ॥ १८ ॥ आदिशच्च प्रतीहारीं, ममाऽऽदेशेन कार्ष्टिकैः[1] । कालघण्टाप्रयोगेण, बन्धनानि विमोचय ॥ १९ ॥ पद्मराजादिभूपानां, पुत्रजन्मनिवेदकान् । विसर्जय प्रतीहारान्, पौराणां च निवेदय ॥ २० ॥ विधापय क्षणादेव, महोत्सवमयं पुरम् । आदेशं नृमतेः सर्वं, तं तथा वेत्रिणी व्यधात् ॥ २१ ॥ ततो बहुविधातोद्यध्वनिनृत्यद्वधूजनम् । कर्पूरपटवासाद्यै[2]रुद्धूलितजनव्रजम् ॥ २२ ॥ बहुकस्तूरिकापङ्कग्रस्यमानजनक्रमम् । शिञ्जान[3]मञ्जुमञ्जीर[4]नारीराजिविराजितम् ॥ २३ ॥ परस्परसमुत्क्षिप्तोत्तरीयाणां च योषिताम् । संलक्ष्यमाणवक्षोजविस्तरं कामिभिर्नरैः ॥ २४ ॥ आयल्लक[5]मिलत्पौररुध्यमानाध्वसंच-

---

१ गुप्तिपालकैः । २ पट वासयतीति पटवासः—सौगंधिकद्रव्यमित्यर्थः । ३ शिञ्जान० व्यक्तशब्द । ४ मञ्जीर० नूपुर । ५ आयल्लक० उत्कण्ठा ।

धर्मार्थसाधकम् । ललिताङ्गो जगादाऽथ, सुशोभनतरं ह्यदः ॥४१॥ धर्मार्थमफलत्वस्य, निदर्शनमितो भवेत्। मोक्षो ह्यलौकिको ध्यानभावनादिप्रकर्षजः ॥४२॥ तस्माद्धर्मार्थसाफल्यनिदर्शनपरत्वतः । सुशोभनतरं ह्येतदशोकोऽथ सुहृज्जगौ ॥४३॥ कुमारोऽत्र प्रमाणं नः, प्राह कामाङ्कुरोऽस्त्विति । ललिताङ्गोऽवदत्तर्हि, प्रसादं कुरुता गिरा ॥४४॥ कुमारः प्राह कोप्यं न, परमार्थं भणाम्यहम् । ते प्रोचुः कीदृशः कोपोऽस्माकमज्ञाननाशने ? ॥४५॥ प्रोचे कुमारः शृणुत, कामशास्त्रमिदं खलु । आख्यतः शृण्वतश्च स्याद्वस्तुतोऽज्ञानकारकम् ॥४६॥ यतो विडम्बनाप्रायाः, कामभोगा विषोपमाः । जन्तवो न्यकृता ह्येतैर्महामोहस्य दोषतः ॥४७॥ परमार्थं न वीक्षन्ते, न जानन्ति हिताहितम् । विचारयन्ति नो कृत्यं, नाऽऽयतिं चिन्तयन्ति च ॥४८॥ [विशेषकम्] यत्कामिनोऽबलाङ्गेष्वशुचिष्वशुचिहेतुषु । कुन्देन्दीवरचन्द्रादिरम्यतां हृदि बिभ्रति ॥४९॥ अशुचौ निरतास्तत्र गर्ताशूकरवच्च ते । मूढाः सृजन्ति कामेषु, निर्वाणपदवैरिषु ॥५०॥ अन्यच्च वधबन्धानामिह लोकेऽपि कारणम् । विषयाः परलोके च, दुर्गदुर्गतिहेतवः ॥५१॥ एवं स्थिते च मध्यस्थभावेनैव निरीक्ष्यताम् । कामशास्त्रं कथं नाम, स्यात्त्रिवर्गस्य साधकम् ? ॥५२॥ अन्यच्च दारचित्तस्याऽऽराधको न भवेन्नरः । कश्चित्प्रयोगवेत्ताऽपि, कोप्यज्ञोऽपि पुनर्भवेत् ॥५३॥ दृश्यन्ते च सुताः केचित्सतीनामपि योषिताम् । दुःशीलाः कर्मवैचित्र्यमत्र हेतुः परं न तु ॥५४॥ तुच्छा दानादिशून्याश्चाऽनुरक्ता अपि योषितः । दृश्यन्ते तेन कामार्थौ, ततः स्युरिति नोचितम् ॥५५॥ अन्यच्चाऽशोभनं कामाः, पामाकण्डूयनोपमाः । विरसान्ताः कथं नाम, धर्मार्थफलदा मताः ? ॥५६॥ धर्मार्थौ तावनर्थौ हि, कामाज्जनयतोऽत्र यौ । सत्याप्रमत्तताशौचोपशमायतिनाशकौ ॥५७॥ धर्मार्थौ पुरुषार्थौ तन्नाऽत्र

कामफलौ मतौ । किन्तु मोक्षफलावेव, पुरुषार्थाविमौ मतौ ॥५८॥ अलौकिकश्च मोक्षो न, मुनिलोकविलोकनात् ।
जन्मादिबाधाहीनश्च, सर्वोत्तमसुखप्रदः ॥५९॥ समाधिभावनाध्यानादयो धर्मो हि भावतः । अर्थोऽपि हि निरीहस्य,
भवेन्मोक्षफलप्रदः ॥६०॥ अन्यथा गर्हितानीष्टापूर्त्तानीति श्रुतेर्वचः । कामाश्चाऽनिन्द्रिया न स्युः, प्रवर्त्तन्ते स्वभावतः
॥६१॥ तिरश्चामपि विख्याता, विरूपाश्च स्वरूपतः । शास्त्रेण तत्किमेतेषां, निन्दितानां प्ररूपणम्? ॥६२॥ शास्त्रं तदु-
च्यते शास्ति, त्रायते च यदंहसः । तदिदं न भवत्येव, शास्त्रमंहसि पातनात् ॥६३॥ कुकाव्यहविषा कामं, दीप्यते काम-
पावकः । तत्कामोद्दीपकं नैव, प्रशस्यं वचनं बुधैः ॥६४॥ शमादिभावकृद्वाक्यं, वाच्यं श्लाघ्यं च धीमताम् । तदलं
दुर्वचस्तुल्यकामशास्त्रार्थचिन्तया ॥६५॥ सर्वेऽथ विस्मिता दध्युरहो! अस्य विरागता । विवेको धन्यताभावः, परिणामश्च
कीदृशः? ॥६६॥ अशोकोऽथाऽवदत्सत्यं, कुमारैतत्तथापि हि । लोकमार्गे प्रतीत्येदं, कामशास्त्रं हि किंपरम् ॥६७॥
कामाङ्कुरोऽवदद्भव्यमशोकेन प्रजल्पितम् । ललिताङ्गोऽवदद्वक्तुं नाऽशोको वेत्त्यशोभनम् ॥६८॥ कुमारोऽथाऽवदद्भद्रजनो
भिन्नरुचिर्यतः । तन्मार्गेण ततः किञ्चिन्नाऽवैमि परतामहम् ॥६९॥ बालानां कामिनां मन्ये, शास्त्रमेतद्विनोदकृत् ।
जीवानां कर्महेतूनि, किंतु कामसुखान्यपि ॥७०॥ उत्तरस्याऽसमर्थैस्तैः कुमारवचनं मतम् । दिनैः कतिपयैर्वीतैः, पुनस्ते-
ऽमन्त्रयन्निति ॥७१॥ ऋषितुल्यो कुमारोऽयं, कथमस्मादृशैर्जनैः । शक्यते कामभोगेष्वादृतैरपि नियोजितुम्? ॥७२॥
तथाऽप्येक उपायोऽस्ति, यतो दाक्षिण्यवानयम् । मित्राणि मन्यतेऽस्मांश्च, वच्मस्तद्दारसङ्ग्रहे ॥७३॥ ध्यात्वेत्यवसरेऽशोको-
ऽवदत्त्वां वच्मि किंचन । कुमार! मित्रवात्सल्यं सता कार्यं न वा? वद ॥७४॥ कुमारोऽथ जगौ साधु, पृष्टं मित्रं भवे-

त्रिधा । अधमं मध्यमं चैवोत्तमं च गुणभेदतः ॥७५॥ आत्मनोऽप्यधिकं दृश्यमानं सन्मानितं सदा । कार्येऽन्यथा स्याद्यन्मित्रं, ज्ञेयं तदधमं बुधैः ॥७६॥ कदाचित्सङ्गतं यत्तु, लाल्यते चोत्सवादिषु । विधुरे च विलम्बेन, त्यजत्येतद्धि मध्यमम् ॥७७॥ उत्तमं तु नमस्कारमात्रतो मित्रता गतम् । दुःखान्मोचयते गाढं, विपत्स्वपि न मुञ्चति ॥७८॥ एवं स्थितं समालोच्य, निजमत्या नरोत्तमः । सर्वथाप्युत्तमे मित्रे, सदा भवति वत्सलः ॥७९॥ कामाङ्कुरोऽवदत्कोऽत्र, भावः? ख्यातमिदं यतः । जघन्यमध्यमे त्यक्त्वोत्तमं मित्रं निषेव्यते ॥८०॥ कुमारः प्राह भावोऽयमेव यः कथितस्त्वया । ललिताङ्गोऽवदन्नैतज्ज्ञायते विवृतिं विना ॥८१॥ तत्कानि त्रीणि मित्राणि?, विवृत्याऽऽख्याहि सांप्रतम् । कुमारः प्राह न ज्ञातं, युष्माभिः? श्रूयतां ततः ॥८२॥ पारमार्थिकमित्राणि, प्रतीत्येदं मयोदितम् । तत्प्रसिद्धं च को नाम, न जानाति सचेतनः? ॥८३॥ तदत्र मित्रमधमं, देहो ज्ञातिस्तु मध्यमम् । उत्तमं परमो धर्मस्तद्भावार्थं निबोधत ॥८४॥ सदोपचर्यमाणोऽपि, विकरोत्येव विग्रहः । संगतां शत्रुपक्षे च, विस्रसामनुवर्तते ॥८५॥ क्षणादेव त्यजत्यन्तकालापदि ततोऽधमम् । स्वजनस्तु ममत्वस्याऽनुरूपं चेष्टते सदा ॥८६॥ क्लिश्यते ग्लानकार्येषु, जहाति गतजीवितम् । स्मरत्यवसरे प्राप्ते, तन्मित्रं मध्यमं ततः ॥८७॥ [ विशेषकम् ] धर्मो यथा तथा व्याप्त, एकान्तेनैव वत्सलः । निर्भयो मित्रतां निर्वाहयत्येव तदुत्तमम् ॥८८॥ ज्ञात्वेत्यनित्ये विषयसौख्येऽसारे स्वभावतः । विपाकदारुणे धीरपुरुषैरवधीरिते ॥८९॥ प्राप्तेऽपि च मनुष्यत्वे, भवाटव्यां सुदुर्लभे । सुक्षेत्रे गुणधान्यानां, निर्वाणस्य प्रसाधके ॥९०॥ मोहं हित्वा पदं ध्यात्वाऽचिन्त्यचिन्तामणिप्रभे । उपादेये जिनप्रोक्ते, धर्ममित्रेऽत्र भिद्यते ॥९१॥ [ विशेषकम् ] श्रुत्वेत्यशोकमुख्यानां, व्यगलत्कर्मसंहतिः । ग्रन्थिभेदेन

मिथ्यात्वं, क्षयोपशममागतम् ॥९२॥ अशोकोऽथ ससंवेगोऽवददित्थमिदं खलु । संदेहो नात्र निर्दिष्टं, कुमारेण सुशोभ-
नम् ॥९३॥ कामाङ्कुरोऽवदत्सत्यं, शोभनादपि शोभनम् । रम्य यदिदमेवैकं, नास्ति रम्यमतः परम् ॥९४॥ ललिताङ्गो-
ऽवदन्मोहनिद्रासुप्ताः प्रबोधिताः । कुमारेण विदध्मोऽस्य, तदाज्ञामात्मनो हिताम् ॥९५॥ अशोकोऽथाऽवदत्साधु,
ललिताङ्गेन भाषितम् । सर्वैरूचे कुमारो नः, कृत्यमादिशतु द्रुतम् ॥९६॥ सोऽथ प्रोचे समासेन, हेया विषयवासना ।
ध्येयं भवस्वरूपं च, वर्जनीयः कुसगमः ॥९७॥ साधवः सेवनीयाश्च, यथाशक्ति विधीयताम् । दानशीलतपोभावरूपो,
धर्मश्चतुर्विधः ॥९८॥ [ युग्मम् ] ते प्रोचुः प्रतिपेदेऽदः, साधु साधु वचस्तव । कुमारः प्राह धन्याः स्थ, सफलं जन्म वो-
ऽभवत् ॥९९॥ ते प्राहुः स्यादधन्यानां, किं कुमारस्य दर्शनम् ? । इति स्तुत्वा ययुर्वेश्म, चक्रुस्तच्च यथोचितम् ॥१००॥
अथाऽऽगात्परपुष्टानां[1], मधुर्मधुरितस्वरः[2]। वनश्रियो व्यजृम्भन्त, पुष्पितास्तिलकादयः ॥१०१॥ वासन्त्युदलसच्चूतो, मञ्जरी-
जालमालितः । मुदिता भ्रमरश्रेणिः, प्रवृत्तो मलयानिलः ॥१०२॥ यस्मिन्बहुमता हाला[4], दोलाः परिवहन्ति च । उद्या-
नानि निषेव्यन्ते, चन्द्रश्चित्तहरोऽभवत् ॥१०३॥ प्रेरणानि प्रवर्तन्ते, गान्धर्वं बहु मन्यते । विशिष्टोज्ज्वलनेपथ्याः,
क्रीडन्ति तरुणव्रजाः ॥१०४॥ देवतानामपि रथा, भ्राम्यन्ति च विभूतिभिः । यान्ति स्मरशरत्रस्ताः, शरणं च प्रियाः
प्रियान् ॥१०५॥ एवंविधे मधौ भूपमेयुः पुरमहत्तमाः । उचुश्चोत्सववीक्षार्थं, प्रीतः स प्राह तान्प्रति ॥१०६॥ बहुशोऽपि
मया दृष्टो, वसन्तसमयोत्सवः । साम्प्रतं तु कुमारस्याऽवसरोऽस्याऽवलोकने ॥१०७॥ हृष्टास्तेऽथ ययुर्भूपः, नमरादित्य-

१ कोकिलाना । २ वसन्तर्तुः । ३ लताविशेष । ४ मदिरा ।

तातादेशः प्रमाणं मे, कुमारेणेति भाषिते । हृष्टो नृपः समा-
माह्वत । ऊचे च वत्स! पौराशां, पूरयोत्सवदर्शनात् ॥१०८॥ ज्ञानगर्भादिकामात्यान्, ममाऽऽदेशेन भाषत । चर्चरीदर्शनसुखं, यत्कुमारः श्रयिष्यति
दिक्षत्, प्रतीहारानुदारगीः ॥१०९॥ पौराणां परितोषार्थमुद्यानं च गमिष्यति । ततो रथवरं सज्जीकुरुत त्वरितक्रमम् ॥ १११ ॥ समादिष्टे प्रतीहारैरथ
॥ ११० ॥ ते रथवेश्मतः । समाकृष्य रथं चक्रुर्यन्त्रयोत्रसमन्वितम् ॥ ११२ ॥ निबद्धं किङ्किणीजालं, वैजयन्त्यः समुच्छ्रिताः । बद्धानि
रत्नदामानि, ग्रथिता मौक्तिकस्रजः ॥ ११३ ॥ आसनं कल्पितं रम्यं, लम्बिता चामरावली । श्रुत्वेति पापमूलानि, सहर्षाणि
समाययुः ॥ ११४ ॥ कुङ्कुमक्षोदसंपूर्णकच्चोलककरोऽमिलत् । भुंजङ्गलोकः पुष्पर्तुयोग्यनेपथ्यधारकः ॥ ११५ ॥ तस्थुः
परिजनैर्युक्ता, राजपुत्रा दिदृक्षवः । प्रग्रीवेष्वस्थुरुद्ग्रीवाः, कम्बुग्रीवाः सहस्रशः ॥ ११६ ॥ प्रावर्ततोत्सवः पुर्यामथाऽऽगत्य
निवेदितम् । सचिवैर्नृपतेर्देव! विहितं देवशासनम् ॥ ११७ ॥ समादिष्टो महीशेनाऽशोकादिसुहृदन्वितः । कुमारोऽथ समा-
रोहद्रथं शममनोरथः ॥ ११८ ॥ ऊचे च सारथिं रथ्यान्, प्रेरयस्वाऽऽर्य! सारथे! । तदादिष्टेन तेनाऽथ, प्रेरितास्तुरगाः
शनैः ॥ ११९ ॥ वादित्राणि ततो नेदुर्जज्ञे जयजयारवः । नृत्तानि पापमूलानि, क्षुभिता प्रेक्षकावली ॥ १२० ॥ केलिः प्रवृत्ता
परितः, प्रासरत्कौङ्कुमं रजः । तत्पश्यन् राजवर्माऽऽगात्सविघ्नात्मा नृपात्मजः ॥१२१॥ गीर्वाणचर्चरीतुल्याश्चर्चरीश्च विलो-
कयन् । दध्यौ चेतस्यहो! मोहसामर्थ्यं धृष्टताप्यहो! ॥ १२२ ॥ प्रमादचेष्टितं चाऽहो!, अहो! अशुभभावना । अहो!
अमित्रसंयुक्तिरहो! संसारचेष्टितम् ॥ १२३ ॥ ध्यायन्निति ससंवेगः, कर्मसात्म्यं विचारयन् । चर्चरीर्वीक्षमाणश्च, प्रेरणानि

१ वेश्या. । २ भुजङ्ग० विटपुरुष । ३ पुष्पर्तु० वसन्तर्तु । ४ गवाक्षेषु । ५ स्त्रियः ।

निरूपयन् ॥१२४॥ प्रेक्षस्वेदमिदं प्रोच्यमानः सारथिनेति च । कियन्तमपि भूभागमाजगाम नृपात्मजः ॥१२५॥ [ युग्मम् ] अथ दृष्टोऽमुना देवकुलिकापीठिकागतः । गलद्विग्रह आताम्रमुखो वीभत्सदर्शनः ॥१२६॥ प्रनष्टनासिकः श्यूनपदः शीर्णाङ्गुलीगणः । निर्गताताम्रनयनो, मक्षिकाजालमालितः ॥१२७॥ महाव्याधिपरिग्रस्तः, पुरुषः कोऽपि दूरतः । वसनाशनशय्याद्यैः, स्वकैरपि वहिष्कृतः ॥१२८॥ [ विशेषकम् ] तं वीक्ष्य करुणासान्द्रो, जनताबोधहेतवे । कुमारः सारथिं प्राह, किमिदं प्रेरणं ननु ? ॥१२९॥ स प्राह प्रेरणं नैतद्व्याधिग्रस्तः पुमानयम् । कुमारः प्राह को व्याधिरत्रोचदथ सारथिः ॥१३०॥ अकालेऽपि शरीरं यो, विनाशयति देहिनाम् । कुमारः प्राह दुष्टोऽयमहितश्च जनं प्रति ॥१३१॥ तत्किं तातो न हन्त्येनं ?, तेनाऽवध्य इतीरिते । कुमारो जनबोधाय, खड्गमादाय तं जगौ ॥१३२॥ रे व्याधे ! मुञ्च मुञ्चैनं, युद्धसज्जोऽथवा भव । इति जल्पन्समुत्थाय, रथात्तं प्रत्यधावत ॥१३३॥ हा ! किमेतदिति त्यक्त्वा, चर्चरी मिलितो जनः । सारथिः प्राह न व्याधिर्नाम्ना कोपि पुमानिह ॥१३४॥ दुष्टो निग्रहयोग्यश्च, नृपतीनामयं पुनः । जीवानां कर्मजः क्लेशो, नृपा न प्रभवोऽस्य तत् ॥१३५॥ कुमारपृष्टैः पौरैरपीदमित्थमितीरिते । कुमारः सारथिं प्राह, ग्रस्तोऽयममुना यदि ॥१३६॥ ततः किं पौरुषं हित्वा, तिष्ठतीदृगवस्थया ? । सूतः प्राह स्वभावोऽयमेतेनेदृग्भवेन्नरः ॥१३७॥ कुमारः प्राह कस्यैष, न स्यात्प्रभवितुं क्षमः ? । स प्राह परमार्थेन, धर्मपथ्यनिषेविणः ॥१३८॥ कुमारः प्राह कोप्यस्त्युपायोऽस्मिन्सारथिर्जगौ । स्वकृतं कर्म भुञ्जानाः, प्राणिनः क्षेत्रवाहिनः ॥१३९॥ नास्त्युपायस्ततः कोपि, विना धर्मचिकित्सितम् । कुमार-

---

१ श्यून० शोफ । २ क्षेत्र० शरीर ।

पृष्टैः पौरैरपीदमित्थमितीरितम् ॥ १४० ॥ प्रोचे कुमारस्तद् व्याधौ, सर्वसाधारणे रिपौ । उपायो धर्म एवाऽत्र, कार्यः किं नर्त्तनादिभिः ? ॥ १४१ ॥ पौराः प्राहुरिदं सत्यं, लोकस्थितिरियं पुनः । लोकस्य रसभङ्गस्तत्कर्तुं देव ! न युज्यते ॥ १४२ ॥ इत्थं सारथिनाऽप्युक्तेऽनुमते नृपसूनुना । प्रवर्तन्ते स्म चर्चर्यः, कियतीमपि भूमिकाम् ॥ १४३ ॥ अपश्यच्च स कोणस्थं, स्वगृहस्योपरि स्थितम् । श्लथाङ्गं खलतिं क्षीणदन्तं कम्प्रशरीरकम् ॥ १४४ ॥ गलद्विलोचनं काशश्वासैर्भाषितुमक्षमम् । वणिग्मिथुनकं वृद्धमवज्ञातं सुतैरपि ॥ १४५ ॥ [ युग्मम् ] तद्वीक्ष्य सूतं बोधाय, प्राह किं प्रेरणं न्विदम् ? । स प्राह प्रेरणं नैतज्जरार्तं मिथुनं त्वदः ॥ १४६ ॥ कुमारः प्राह का नाम, जरा ? स प्राह देव ! या । अजीर्णमपि कालेन, कुरुते गात्रमीदृशम् ॥ १४७ ॥ ऊचे कुमारो दुष्टेयमहिता च जने ततः । कस्मादुपेक्षते तातः, स प्रोचे तस्य नो वशे ॥ १४८ ॥ किं वशे नेति स प्रोच्य, बोधायाऽसिं विमार्ग्य च । प्रोचे जरे ! विमुञ्चेदं स्त्री, त्वं किं भण्यसे परम् ? ॥ १४९ ॥ भणन्निति रथोत्थायमेतां प्रति चचाल सः । चर्चर्योऽथ पुनः शान्ता, मिलितश्चाऽखिलो जनः ॥ १५० ॥ सूतः प्रोचे जरा देव !, न स्त्री काप्यस्ति किं पुनः । नृणां कालपरिणतिस्तन्नोपालम्भमर्हति ॥ १५१ ॥ देव ! साधारणा चेयं, सर्वेषामपि देहिनाम् । कुमारपृष्टैः पौरैरप्येतदेवमितीरितम् ॥ १५२ ॥ कुमारोऽथ जजल्पाऽस्यां, प्रणाशिन्यां महौजसः । धर्मकामापकारिण्यां, पराभवकुलावनौ ॥ १५३ ॥ उपहासप्रवर्द्धिन्यां, प्रभवन्त्यां जनं प्रति । युज्यते नर्त्तनाद्यं किं, हित्वा धर्मरसायनम् ? ॥ १५४ ॥ [ युग्मम् ] श्रुत्वेति ते कुमारस्य, विवेकं तत्त्वदर्शिताम् । स्तुवन्तः परमं प्रापुः, संवेगमखिला जनाः ॥ १५५ ॥ ऊचुश्च देव ! साधूचे, किं त्वेषा मोहवासना । दुस्त्यजा भूपसूः प्राह, मोहवासनया कृतम् ! ॥ १५६ ॥ यदेष दारुणो

व्याधिर्जरा रौद्रा च पापिनी । तद्विपक्षे ततो धर्मे, कर्तुं यत्नः सुसंगतः ॥ १५७॥ अत्रान्तरे जरन्मञ्चस्थितो जीर्णपटावृतः । उत्क्षिप्तः पुरुषैर्दीनैः, कतिथैर्बन्धुभिर्वृतः ॥१५८॥ रुदता स्त्रीजनेनोच्चैः, पत्न्याऽनुक्रन्दमानया । जनेन वीक्ष्यमाणश्च, दरिद्रः पञ्चतां गतः ॥ १५९॥ आराद् दृष्टः कुमारेण, ततः पृष्टश्च सारथिः । आर्य ! मह्यं समाख्याहि, किमिदं प्रेरणं नवम् ? ॥ १६० ॥ [ विशेषकम् ] दध्यौ सूतो विदन्नेष, विप्रलम्भयति ध्रुवम् । वाणी किमनभिज्ञस्याऽस्मादृग्बोधे प्रगल्भते ? ॥१६१॥ प्राप्तकालं भवत्वेवं, सत्यमाख्याम्यथाऽवदत् । प्रेरणं न भवत्येतन्मृत्युग्रस्तः पुमानयम् ॥ १६२॥ कुमारः प्राह को नाम, मृत्युः? प्रोवाच सारथिः । इत्थं संत्यज्यते मर्त्यो, येन ग्रस्तः स्वकैरपि ॥ १६३॥ कुमारोऽथाऽवदद्दुष्टोऽहितश्चैष जनं प्रति । तत्किं न हन्ति तातोऽमुं?, तेनाऽवध्य इतीरितम् ॥ १६४॥ कुमारो जनबोधाय, खड्गं लात्वाऽथ तं जगौ । अरे ! रे ! दुष्ट-मृत्यो ! ऽमुं, मुञ्च युध्यस्व वा मया ॥१६५॥ भणन्निति रथोत्थायं, प्रवृत्तस्तस्य संमुखः । सूतः प्राह न कोप्यस्ति, मृत्युनामा पुमानिह ॥ १६६ ॥ दुष्टो निग्रहयोग्यश्च, नृपतीनामयं पुनः । देहत्यागस्वभावो हि, कर्मणा जनितो जनैः ॥ १६७॥ तदस्याऽप्रभवो भूपाः, सर्वसाधरणो ह्ययम् । अथ पृष्टैः कुमारेण, पौरैरपि तदीरितम् ॥ १६८॥ कुमारोऽथाऽवदत्सूतं, बान्धवाः किं त्यजन्त्यमुम् ? । सूतः प्राह किमेतेन ?, हेतुभूतो गतो हि सः ॥ १६९॥ कलेवरमिदं तिष्ठदपकाराय केवलम् । सकुलं कृमिजालेन, पूतिगन्धनिबन्धनम् ॥ १७० ॥ कुमारः प्राह तर्ह्येते, बान्धवा विलपन्ति किम् ? । सूतः प्राह प्रियोऽमीषां, गतोऽयं दीर्घयात्रया ॥ १७१॥ एतेनाऽदर्शनं चैषां, स्मृत्वा तत्सुकृतान्यतः । निरोद्धुमक्षमाः शोकमनुपाया रुदन्त्यमी ॥ १७२॥ कुमारः प्राह यद्येष, प्रियः किं नाऽनुयान्ति तत् ? । सारथिः प्राह नो शक्यमिदं कर्तुं कथंचन ॥ १७३॥

गच्छन्नाऽऽख्याति न प्रेमाऽपेक्षते दृश्यते न च । स्थानं न ज्ञायते चाऽस्य, वैचित्र्यात्कर्मणां गतेः ॥ १७४ ॥ अनवस्थित-संयोगादनुबन्धो न चेदृशः । नाऽनुगच्छन्त्यतो हेतोः, कुमारोऽथाऽवदत्पुनः ॥१७५॥ एवं यदि ततो व्यर्था, प्रीतिस्तत्रेतरो जगौ । परमार्थोऽयमेवाऽत्र, कुमारः प्राह यद्यदः ॥ १७६ ॥ ततः कश्चिदुपायोऽस्ति, तमुवाचाऽथ सारथिः । उपायो योगि-गम्योऽत्र, ज्ञायतेऽस्मादृशैर्न हि ॥ १७७॥ पृष्टैरथ कुमारेण, पौरैरपि तदीरितम् । ऊचे कुमारो यद्येवं, तत्सर्वसमताजुपि ॥ १७८ ॥ असुन्दरे प्रकृत्या च, सर्वथाऽप्यपकारके । मृत्यौ चिन्त्यः प्रतीघातोपायः किं नर्तनेन नु? ॥ १७९ ॥ [ युग्मम् ] श्रुत्वेति पौराः संविग्ना, वोधिबीजानि लेभिरे । नृत्यादुपरताः कृत्ये, प्रवृत्ताश्च यथोचितम् ॥ १८० ॥ कुमारः सवसन्तस्य, वसन्तसुहृदश्चमूः । चर्चरीमिषतो मन्ये, त्रिर्भक्त्वा स्ववशे व्यधात् ॥ १८१ ॥ अथ ज्ञात्वेति वृत्तान्तं, देवसेनाभिधद्विजात् । राजा प्रेष्य प्रतीहारं, समरादित्यमाह्वत ॥ १८२ ॥ आयातः प्रणतः प्रोक्तो, भूभुजा वच्मि किंचन । कुमार ! तत्कुमारेणा-वश्यं कर्तव्यमेव च ॥ १८३ ॥ कुमारः प्राह गुरवो, दुर्लङ्घ्यवचनाः खलु । राज्ञोचेऽवसरे तर्हि, भणिष्याम्यधुना व्रज ॥ १८४ ॥ आदेश इत्यथ प्रोच्य, प्रणम्य च महीपतिम् । कुमारः सदनं गत्वा, कर्तव्यमुचितं व्यधात् ॥ १८५ ॥ अन्यदा भवनस्थस्य, मित्रैर्धर्मकथाकृतः । अमारस्य कुमारस्य, प्रतीहारः समागमत् ॥ १८६ ॥ अवोचच्च कुमार ! त्वां, देव इत्या-दिशत्यहो ! । एहि त्वं वेगतोऽमात्याः, समेता मातुलस्य ते ॥ १८७ ॥ कुमारोऽथ समुत्थायाऽऽगतः सहचरैः सह । नत्वा वसुमतीनाथमुपविष्टस्तदन्तिके ॥ १८८ ॥ उक्तो भूपतिना वत्स !, मातुलेन तवाऽऽदरात् । भूभुजा खड्गसेनेन, सप्तवेणी-सुनिर्मले ॥ १८९ ॥ जीविताभ्यधिके पुत्र्यौ, प्रहिते ते स्वयंवरे । एका विभ्रमवत्याख्या, परा कामलताभिधा ॥ १९० ॥

[ युग्मम् ] तत्तस्य बहुमानेन, कन्ययोश्चाऽनुरागतः । आज्ञया गुरुवर्गस्य, विशिष्टाध्वानुवर्तनात् ॥ १९१ ॥ कुमारेणेष्टसंपत्त्याऽऽनन्दितव्ये सुनिश्चितम् । कृतेऽस्मिन्वचने स्याच्च, सर्वेषामपि निर्वृतिः ॥ १९२ ॥ श्रुत्वेति समरादित्यो, दध्यावेतन्न शोभनम् । संयोगा दुःखबीजानि, निदेशवचनं त्वदः ॥ १९३ ॥ अभ्यर्थितोऽस्मि प्रथमं, मया बहुमतं च तत् । अलङ्घनीया गुर्वाज्ञा, मानिता हि जिनैरपि ॥ १९४ ॥ नियमेनेष्टसंपत्त्या, निर्वृतिः सुन्दरं वचः । कुर्वाणानां च गुर्वाज्ञां, क्वापि नाऽशोभनं भवेत् ॥ १९५ ॥ [ विशेषकं ] इति ध्यायन्नयं प्रोक्तः, साशङ्केनाऽवनीभुजा । चिन्तया पूर्यतां वत्स !. प्रार्थनां मम संस्मर ॥ १९६ ॥ न चाऽत्र परिणामस्ते, कल्याणानां परंपराम् । विमुच्याऽन्यादृशः कोपि, कर्तव्यं तदिदं ध्रुवम् ॥ १९७ ॥ इदं सुशोभनं वाक्यमिति प्रमुदितात्मना । अभाष्यत कुमारेण, गुर्वाज्ञा मे शिरस्यसौ ॥ १९८ ॥ हृष्टोऽथ नृपतिः प्राह, साधु साधु सुनन्दन ! । विवेकः संगतस्तेऽसौ, गुरुभक्तिः सुशोभना ॥ १९९ ॥ कल्याणभाजनं चासि, भवतोऽन्यच्च वेद्म्यहम् । पक्षपातं महाशुद्धे, धर्मे समुचिते सताम् ॥ २०० ॥ असारोऽयं भवः सत्यं, निर्वेदस्य निबन्धनम् । तथापि लोकधर्मोऽयमनुवर्त्यो मनीषिणा ॥ २०१ ॥ कुशला संततिः कार्या, परस्योपकृतिस्तथा । अनुवर्त्यः कुलाचारः, सदाचारविचारिभिः ॥ २०२ ॥ इत्थमेकान्ततो लोकधर्मे परिणते सति । निष्पन्ने पौरुषे ब्रह्मचर्ये सुष्ठु प्रतिष्ठिते ॥ २०३ ॥ वयसः परिणामेऽथोपद्रवैर्विद्रुतैरलम् । गुणपात्रीकृते चाऽऽत्मन्युचितं धर्मसेवनम् ॥ २०४ ॥ इदं ततः कुमारेण, शोभनं विदधेऽधुना । भवत्वेवमिदं भावि, परिणामेऽतिसुन्दरम् ॥ २०५ ॥ [ सप्तभिः कुलकम् ] तदा कक्षान्तरस्थेन, सिद्धार्थेन पुरोधसा । उक्तमत्र न संदेहोऽवश्यमेव भविष्यति ॥ २०६ ॥ मङ्गल्यतूर्यं दध्वान, गर्जितं मत्तहस्तिना । उद्घुष्टो वन्दि-

लोकेन, बाढं जयजयारवः ॥ २०७॥ नृपः प्रमुदितः प्रोचेऽनुकूलः शकुनव्रजः । अन्यच्च शुद्धधर्माहत्वं सुसुन्दरकारणम् ॥ २०८ ॥ गृहीतशकुनार्थोऽथ, कुमारो मुदितोऽवदत् । सर्वं ताताशिषा भाव्यथाऽपठत्कालपाठकः ॥ २०९ ॥ तमो निनाश्य मोहं च, जनस्य तपनोऽधुना । चेष्टयाऽऽकाशमध्यस्थो धर्मकृत्ये प्रवर्तते ॥२१०॥ केचिन्मज्जन्ति केचिच्च, कुर्वते देवतार्चनम् । केचिद्ददति दानानि, गुरूपास्तिपराः परे ॥ २११ ॥ साधवोऽप्युज्झितध्याना, जनानुग्रहहेतवे । योगान्तरं प्रपद्यन्ते. पिण्डग्रहणहेतवे ॥ २१२ ॥ इत्थं पुर्यां नराधीश !, नरः शुद्धक्रियापरः । पर नृजन्मसारं ते, कल्याणं सूचयत्यलम् ॥ २१३ ॥ मध्याह्नसमयं मत्वा, कुमारं व्यसृजन्नृपः । वर्धापनकृतेऽमात्यानादिशच्च समन्ततः ॥ २१४ ॥ आदेश इति नेरुक्त्वा, महादानं प्रदापितम् । कारिता नगरीशोभा, पूजितो देवताव्रजः ॥ २१५ ॥ पौराणां कथितं पापमूलान्याकारितानि च । दापिताऽऽनन्दभेरी च, हर्षशङ्खाः प्रपूरिताः ॥ २१६ ॥ अथ प्रहृष्टपौराढ्यं, प्रनृत्यत्पापमूलकम् । नदत्पुण्याहवादित्रं, पठन्मङ्गलपाठकम् ॥ २१७ ॥ युतमन्तःपुरीवर्गैं, राजलोकेन संयुतम् । महता विस्तरेणाऽभूद्दिव्यं वर्धापनं पुरि ॥२१८॥ [ युग्मम् ] परितुष्टेन भूपेन, पृष्टैर्मौहूर्तिकैरहः । कथितं देव! पञ्चम्यामद्यैवेदं सुसुन्दरं ॥२१९॥ नृपोऽमात्यानथाऽऽदिक्षद्विवाहप्रह्वताविधौ । ते कोशाध्यक्षमादिक्षन्, मङ्क्षु रत्नाकराभिधम् ॥ २२० ॥ प्रधानमुख ! वीक्ष्य त्वं, पत्रिकां भूषणावलीः । आकृष्याऽन्तःपुरीयोग्या, दायकेभ्यो नियोजय ॥ २२१ ॥ चेलकर्मान्तिकं प्राहुर्देवाङ्गं वसनान्यहो ! । देवाङ्गानि समाकृष्य, देवीपरिजनेऽर्पय ॥ २२२ ॥ महामातलिनामानमूचुः शस्त्राधिनायकम् । आयुधानि रथांश्चैव, प्रगुणीकुरु वेगतः ॥ २२३ ॥ गजचि-

१ वेश्याः ।

न्तामणिं नाम्ना, गजाध्यक्षं त्वभाषिरे । विक्रान्वशंश्च संभूष्य, वेगात्परिजनेऽर्पय ॥ २२४ ॥ केकाणधूलिनामानमश्वाध्यक्षं समादिशन् । सभूष्य तुरगाञ्शीघ्रं, प्रेषय क्ष्मापगोचरे ॥ २२५ ॥ यदादिशन्त्यमात्यास्तज्जातं सर्वैरितीरिते । सज्जितुं मण्डपं केपि, जग्मिवांसो वधूगृहे ॥ २२६ ॥ निर्वृत्तस्तत्र चोल्लोच, उच्छ्रिता मणितोरणाः । स्थापिता स्वर्णवेदी च, रचिताः काञ्चनध्वजाः ॥ २२७ ॥ न्यस्ता मङ्गलकुम्भाश्च, जातं स्नपनकं ततः । वध्वौ सस्नाप्य संभूष्य, द्वे अपि प्रगुणीकृते ॥ २२८ ॥ अथ लग्ने समासन्ने, मौहूर्तिकनिवेदिते । सम्पादितकुलाचारः, संपूज्य कुलदेवताः ॥ २२९ ॥ वन्दित्वा गुरुवर्गं च, समान्य सहचारिणः । कुमारो रथमारोहन्निजैः सहचरैः सह ॥ २३० ॥ [ युग्मम् ] आनन्दतुमुलोऽथाऽभून्, मङ्गल्यातोद्यमध्वनत् । नृत्ता वारविलासिन्यः, शुद्धान्तो गायति स्म च ॥ २३१ ॥ चलिताश्च महीपाला, भुजङ्गाः प्रविजृम्भिताः । आनन्दिता पुरी बाढं, हृष्टः पुरुषसिंहराट् ॥ २३२ ॥ कुमारस्तु ससंवेगो, भवरूपं विचिन्तयन् । विवाहभुवनं प्राप्तो, रथादवततार च ॥ २३३ ॥ कृतोचितविधिर्मध्यगतो वध्वौ व्यलोकत । गौराङ्गीं विभ्रमवतीं, श्यामां कामलतां रुचा ॥ २३४ ॥ आद्या कुङ्कुमलिप्ताङ्गी, लक्ष्यते दन्तपुत्रिका । नीलाश्मपुत्रिकेवाऽन्या, श्रीखण्डद्रवमण्डिता ॥ २३५ ॥ दध्यौ कुमारस्ते वीक्ष्य, कल्याण्याकृतिरेतयोः । सर्गचङ्गानि चाऽङ्गानि, संपूर्णावयवावली ॥२३६॥ निष्कलङ्कं च लावण्यमाभोगश्चातिनिर्मलः । लक्षणानि प्रशस्तानि, मूर्तिः शान्तरसाश्रया ॥ २३७ ॥ अनघं धैर्यमेते तत्, पात्रभूते भविष्यतः । इति चिन्तयता तेन, चक्रे पाणिग्रहस्तयोः ॥ २३८ ॥ [ विशेपकम् ] सर्वं यथोचितं कृत्वा, भ्रान्ता मङ्गलमण्डली । उपचारो जने चक्रे, महादानं च दापितम्

१ करिकलभान् । २ हस्तिन्यः । ३ वेश्याः । ४ स्त्रीवर्गः । ५ सर्ग० स्वभाव ।

॥२३९॥ वृत्तो विवाहयज्ञोऽथ, दिनः परिणतोऽभवत्। शीतिभूतं रवेर्बिम्बं, संहृतः किरणव्रजः ॥२४०॥ सन्ध्या समा-
गता जातं, नभः कनकपिञ्जरम्। अभ्युद्गतो निशानाथः, पूर्वकाष्ठा[1] विजृम्भिता ॥२४१॥ तदाऽशोकादिभिः सार्धं, प्रज्व-
लन्मणिदीपकम्। पुष्पोपचारसंयुक्तं, भ्रमरावलिमालितम् ॥२४२॥ सङ्गतं पटवासेन, विलुलच्चम्पकस्रजम्। सङ्गतं शयनी-
येन, धूपधूमाभिवासितम् ॥२४३॥ ससखीपरिवाराभ्यां, वधूभ्यां च विभूषितम्। कुमारो वासभवनमाजगाम शमप्रियः
॥२४४॥ [विशेषकम्] अभ्युत्थितो वधूभ्यां स, शयनीये निषेदिवान्। अशोकाद्यः सुहृद्वर्गो, यथायोग्यमुपाविशत्
॥२४५॥ अथ कुन्दलता नाम्ना, सखी सङ्केतिताऽऽद्यया। परया मानिनी नाम्ना, ताम्बूलं ददतुर्मुदा ॥२४६॥ मालां
ग्रथिता न्नकुलपुष्पाणामस्मै कुन्दलताऽऽपर्यत्। अतिमुक्तक[2]संभूतपुष्पमालां तु मानिनी ॥२४७॥ ऊचतुश्च स्वहस्ताभ्यां,
यथायोग्यं कुमारस्तन्निवेशयतु ते इमे। करोतु सफलं स्वस्मिन्न- प्रियया तव। कुमार! तव योग्येयमत्यन्तमनुरागतः ॥२४८॥
नुरागं च कान्तयोः ॥२४९॥ ऊचे च समरादित्यो, भवत्यौ! चिन्त्यमस्त्यदः। ममोपर्यनुरागोऽस्ति, कान्तयोर्नास्ति वाऽनयोः
॥२५०॥ प्राह कुन्दलताऽग्रेऽदश्चिन्तितं शृणु साम्प्रतम्। त्वन्नाम वन्दिनोद्घुष्टं, श्रुतमाभ्यां यदाद्यपि ॥२५१॥ तदादि
खेदहर्षाभ्यां, गृहीते निन्दतः स्तुतः। निजं जन्म कलाजालमस्यतोऽभ्यस्यतोऽपि वा ॥२५२॥ कुरुतः सङ्कथां ते न,
कुरुतस्तत्र विश्रमम्। खिद्येते च शरीरेण, वर्धेते विभ्रमेण च ॥२५३॥ मुच्येते लज्जयाऽऽप्येते, वाढं रणरणेन[3] च। इदं
वीक्ष्य किमेतन्नु?. व्यषीददनयोः पिता ॥२५४॥ ज्ञात्वा व्यतिकरं तं च, सुनिष्णातसखीजनात्। स्थानेऽभिलाषं संचिन्त्य,

१ पूर्वदिशा। २ अतिमुक्तक० माधवीलता। ३ उत्साहेन।

स हर्षात्प्राहिणोदिमे ॥२५५॥ संपन्नस्वेहिते सौख्यसहिते इह चाऽऽगते । कुमारचिन्तितो दूरमनुरागस्तदेतयोः ॥२५६॥ दध्यौ कुमारोऽस्त्यनयोरनुरागो ममोपरि । अनुरक्ताश्च गृह्णन्ति, निर्विकल्पं वचोऽङ्गिनः ॥२५७॥ प्रवर्तन्ते स्वभावेन, क्रियया विदधत्यपि । तद्युज्यतेऽनयोः कर्तुं, देशना क्लेशनाशिनी ॥२५८॥ ध्यात्वेत्याह भवत्योः किमनुरागोऽस्ति मा प्रति? । साशङ्कं दध्यतुस्ते किं, गम्भीरं वचनं ह्यदः? ॥२५९॥ नोचतुश्च पदाङ्गुष्ठप्रान्तालिखितकुट्टिमे । सख्यूचेऽथ स्वया मत्या, कुमारेणाऽवधार्यताम् ॥२६०॥ कुमारः प्राह यद्येवमहिते प्रविवर्तिषा । सानुरागितया स्याच्चेत्तत्कीदृगनुरागिता? ॥२६१॥ मानिन्यूचे कुमारेदं, न जानाम्यहितं कथम्? । कुमारः प्राह शृणु तत्त्वमत्रार्थे कथानकम् ॥२६२॥ कामरूपाभिधे देशे, मदनाद्यं पुरं पुरम् । प्रद्युम्नाख्यो नृपस्तत्र, प्रियाऽस्य रतिराख्यया ॥२६३॥ तयोर्विषयसौख्येन, गते काले कियत्यपि । अन्यदा च गतो राजा, वाहवाहनहेतवे ॥२६४॥ रत्या विमलमत्याख्यसार्थवाहस्य नन्दनः । दृष्टः शुभङ्करो राजमार्गे वातायनस्थया ॥२६५॥ सापि दृष्टिगता तेन, साभिलाषं विलोकिता । चित्तज्ञ इति सतुष्टा, रतिर्मतिविमोहतः ॥२६६॥ दुर्निवारस्मरशरप्रकरप्रहता च सा । जालिन्याख्यां सखीमूचेऽमुं युवानं समानय ॥२६७॥ अस्मिन्नर्थे मुत्रोधानि, मनांसि खलु कामिनाम् । प्रतार्यन्ते तयाऽऽनीय, प्रैष्ययं वासवेश्मनि ॥२६८॥ उपविष्टस्य पल्यङ्के, ताम्बूलं रतिरार्पयत् । तस्मिन्नर्धगृहीते च, वन्दिकोलाहलोऽभवत् ॥२६९॥ राजानमागतं ज्ञात्वा, चित्तारतिमती रतिः । उपायः कोऽपि नाऽन्योऽत्र प्रैषीद्वर्चोगृहेऽथ तम् ॥२७०॥ नृपः प्रविश्य पल्यङ्के, निविश्य क्षणमाह्वत । वारिव्यापारिणं वर्चोगृहं गन्तुं समुत्सुकः ॥२७१॥

१ पुरीषगृहे 'पाखाना' इति भाषायाम् ।

श्रुत्वेत्यत्यन्तभीतेन, तेन जीवितकाङ्क्षिणा । अगाधे ध्वान्तवत्यात्मा, वर्चष्कूपे प्रपातितः ॥ २७२ ॥ कृमिभिर्वेष्टितो रुद्धा, दृष्टिः सङ्कुचिता तनुः । उदीर्णा वेदना वाढमाकुलो मूर्च्छितश्च सः ॥ २७३ ॥ इतो नृपः शकृद्वेश्मन्यङ्गरक्षनिरीक्षिते । प्रविश्य कृत्वा कायस्य, स्थितिं तस्माद्विनिर्गतः ॥ २७४ ॥ स्थित्वा रत्या समं चित्तविनोदेन धराधिपः । अतीते वासरे गत्वा, तस्थावास्थानमण्डपे ॥ २७५ ॥ शुभङ्करव्यतिकरं, रत्या पृष्टाऽथ जालिनी । प्रोचे मन्ये मृतः कूपे, चित्तादप्यथ विस्मृतः ॥ २७६ ॥ शुभङ्करस्तु दुःखार्तस्तत्राऽशुचिरसाशनः । स्थित्वा कतिपयं कालं, वर्चष्कूपेऽथ शोधिते ॥ २७७ ॥ विष्टा-निर्गममार्गेण, निर्गतो विगतच्छविः । निर्नष्टरोमकरजः, शुचीभूतः कथंचन ॥ २७८ ॥ क्लेशेन गृहमायासीद्भीतः परिजनोऽखिलः । मा भैषीरिति जल्पित्वा, स्वमाख्यत शुभङ्करम् ॥ २७९ ॥ पित्रा पृष्टोऽथ किं चक्रे, त्वया ? येनाऽजनीदृशः । स प्राह तात ! यच्चक्रे, तदाख्यामि रहः कुरु ॥ २८० ॥ कथिते रतिवृत्तान्ते, पिता संविग्नमानसः । तं वेश्ममध्यतो नीत्वा, तैलाभ्यङ्गाद्यकारयत् ॥ २८१ ॥ कालात्प्रगुणगात्रोऽयं, प्रवृत्तो देवतागृहम् । दृष्टो रत्या सखीं प्रेष्याऽऽकारितः पुनरागतः ॥ २८२ ॥ पुनरप्यागते राज्ञि, प्रागुक्तं सर्वमप्यभूत् । इत्थं पुनः पुनर्जातं, वहुशोऽप्येतदीदृशम् ॥ २८३ ॥ ततः पृच्छाम्यहं तस्मिन्, रतेः स्नेहोऽस्ति वा न वा ? मानिन्यूचे कुमाराऽस्ति, परमार्थेन न ध्रुवम् ॥ २८४ ॥ निर्मतिः सा रतिर्वस्तु, निजं भावं च नेक्षते । आत्मनः परतन्त्रत्वं ध्यायत्यस्याऽऽयतिं च न ॥२८५॥ कुमारः प्राह तन्नैवाऽनुरागोऽस्त्यनयोर्मयि । इमे अपि मतिभ्रष्टे, स्वचेतसि विचार्यताम् ॥२८६॥ एते यदिच्छतो भोगान्, स्वभावासुन्दरास्थिरान् । हेतूनीर्ष्याविपादादेस्तेन

१ पुरीषकूपे । २ पुरीषगृहे ।

वस्तु न पश्यतः ॥ २८७॥ दुर्लभं च मनुष्यत्वं, निर्वाणपदकारणम् । न नियोजयतो धर्मे, तेन भावं न पश्यतः ॥ २८८॥ तथा मृत्योरतिक्रूरस्याऽऽत्मानं गोचरे स्थितम् । यन्न चिन्तयतस्तेन, नेक्षेते परतन्त्रताम् ॥२८९॥ तथा भोगविषं जीवमोहकं दुर्गतिप्रदम् । नियोजयन्त्यौ मां तत्राऽऽयतिं चिन्तयतो न मे ॥ २९० ॥ एवं स्थिते कथं नामाऽहितेषु विनियोजनात् । एतयोः परमार्थेनाऽनुरागः स्यान्ममोपरि? ॥ २९१ ॥ श्रुत्वेति वध्वौ संविग्ने, जातसशुद्धभावने । गुरोरिव कुमारस्य, क्रमौ नत्वेत्यभाषताम् ॥२९२॥ आर्यपुत्राऽऽवयोः कामरागो भवभयादिव । गतस्तत्स्वानुरागस्य, तुल्यं यत्कृत्यमादिश ॥ २९३ ॥ कुमारस्ते प्रशस्याऽऽह, मोहसंक्लेशयोरमी । विषया हेतवः सात्म्यादेतयोश्चाऽनुबन्धकाः ॥२९४॥ तत्त्यज्यन्तामिमे यावज्जीवमाद्रियतां शमः । चित्ते विचार्यतां धर्मे, क्रियतामुद्यमः परः ॥२९५॥ प्रोचतुस्ते तवाऽऽदेशाद्यावज्जीवं समुज्झिताः । आवाभ्यां विषयाः शेषे, प्रमाणं शक्तिरेव नौ ॥२९६॥ ये चर्चरीचमूभङ्गेऽनङ्गो दुर्गे किलाऽऽश्रयत् । ताभ्यामपि कुमारेण, धर्मद्वारा निरासि सः ॥ २९७॥ दध्यौ हृष्टः कुमारोऽथ, धन्यत्वमनयोरहो! । धीरत्वमल्पकर्मत्वं, प्रशमस्तत्त्ववेदिता ॥२९८॥ ध्यात्वेत्याह युवां धन्ये, यावज्जीवं मयापि तत् । विषयान्संपरित्यज्य, ब्रह्मचर्यं प्रतिश्रुतम् ॥ २९९॥ अहो! श्रेष्ठमहो! श्रेष्ठमित्यशोकादयोऽवदन् । चक्रे कुसुमवृष्टिश्च, यथासन्निहितामरैः ॥ ३०० ॥ सर्वं हर्षमयं जज्ञे, तदा त्वावरणक्षयात् । कुमारस्याऽवधिज्ञानं, वर्धमानमजायत ॥ ३०१॥ वीक्ष्याऽतीतादिकान्भावान्, सविग्नोऽतिशयेन सः । श्रुत्वेति पितरौ द्वाःस्थाद्विषण्णावेवमूचतुः ॥ ३०२॥ कुमारो नोचितं चक्रे, त्यजन्भवभवं सुखम् । इदं सुदुष्करं कस्माद्विदधे तनय. म नौ

१ स्वभावात् ।

॥ ३०३ ॥ तदा खड्गकरा सर्वाङ्गीणाभरणभारिणी । पराभवन्ती तेजोभिः, प्रदीपान्देवताऽऽगमत् ॥३०४॥ अथो महर्षखेदाभ्यामेताभ्यां प्रणता च सा । ऊचेऽलं वां विषादेन, कुमारेणोचितं कृतम् ॥३०५॥ सुधाऽऽदायि विषं हित्वा, क्लैव्य हित्वा च पौरुषम् । औदार्यं क्षुद्रतां हित्वा, भवं हित्वा, च निर्वृतिः ॥ ३०६ ॥ सुतेनैतेन धन्यौ हि, युवां निर्वृतिहेतुना । तद्विषादं परित्यज्य, कार्यमाचर्यतां शुभम् ॥ ३०७ ॥ [ विशेषकम् ] का ? त्वं भगवतीत्युक्ते, नृपेण प्राह देवता । राजन्खड्गायुधा देवी, नामतोऽहं सुदर्शना ॥ ३०८ ॥ वसामि भवनेऽमुष्मिंस्त्वत्पुत्रगुणरागतः । हृष्टो नृपः कुमारस्य, देवताश्लाघितैर्गुणैः ॥ ३०९ ॥ देव्यूचे देव ! पुत्रस्य, प्रभावः कश्चिदीदृशः । मन्त्रयन्ति प्रमोदेन, यदेवं देवता अपि ॥ ३१० ॥ तदेहि गत्वा तं वीक्ष्य, धर्मपिण्डं विदध्वहे । सर्वथा तत्कृतं युक्तमिति तौ मुदितौ गतौ ॥ ३११ ॥ मत्वा कुमारोऽभ्युत्थाय, नत्वा विनयवामनः । निवेश्याऽऽसनयोः प्राह, पुनर्नत्वा कृताञ्जलिः ॥३१२॥ किं चक्रेऽनुचितं तात !?, किमम्बाऽहं न शब्दित.? । नृपो नानुचितं प्रोच्य, देवताख्यातमाख्यत ॥ ३१३ ॥ ऊचे च जननी वत्स !, त्वमतुच्छगुणाश्रयः । आदेशस्य न योग्योऽसि कुमारस्तामथाऽवदत् ॥ ३१४ ॥ कस्मादम्ब ! वदस्येवं, यूयं हि गुरवो मम । गुर्वादेशविधानं च, गुणबन्धनिबन्धनम् ॥ ३१५ ॥ नृपः प्राह कुमाराऽतिदुष्करं भवता कृतम् । किमिदं दुष्करं तात !?, श्रूयतामित्ययं जगौ ॥ ३१६ ॥ पुरुषाः केऽपि चत्वारस्तत्र द्वावर्थलम्पटौ । द्वौ च स्त्रीलम्पटावेकमध्वानं तु प्रपेदिरे ॥ ३१७ ॥ तेऽद्राक्षुः क्वचिदुद्देशे, निर्भा नार्यौ च सद्रुची । प्रासं प्राप्यमतो हृष्टा, संमुखीना दधाविरे ॥ ३१८ ॥ कुतोऽपि दैवी वागेतैर्मा साहसमिति श्रुता । वीक्षध्वमूर्ध्वं युष्माकं, पतत्युपरि पर्वतः ॥ ३१९ ॥ एतद्गोचरयातानाममुना चेष्टितेन किम्? । एतदाकर्ण्य तैरूर्ध्वमीक्षितं भय-

संभ्रमात् ॥ ३२० ॥ दृष्टश्चाऽध्यासितव्योमा, न सोमाकारदर्शनः । देवानामप्यवार्योजाः, सर्वतः पर्वतः पतन् ॥ ३२१ ॥ ते प्रोचुः क उपायोऽत्र?, कुतोप्याकर्णितं पुनः । न सांप्रतमुपायोऽस्त्युपद्रवस्याऽस्य विद्रवे ॥ ३२२ ॥ किंत्विच्छन्त्यर्थभोगान् ये, संगतासगतैरपि । तैस्ते शैलेन चूर्यन्ते, हन्ताऽनेन पुनः पुनः ॥३२३॥ निरीहास्त्वर्थभोगेषु, तदसारत्वभावनात् । पुनः पुनर्न चूर्यन्ते, कालेनाऽस्माच्छुटन्ति च ॥ ३२४ ॥ तत्रैके चिन्तयामासुः किं तया दीर्घचिन्तया? । ध्यात्वेति तेऽर्थभोगेषु, प्रवृत्ता भाव्यनिश्चयात् ॥३२५॥ अन्ये निवृत्तास्तान्मत्वा, चरान् वीपाकदारुणान् । सयुज्यन्ते फलैः स्वैः स्वैस्तत्तत्कर्मानुभावतः ॥ ३२६ ॥ एवं व्यवस्थिते तात!, के स्युर्दुष्करकारकाः? । नृपः प्राह प्रवर्तन्ते, ये ते दुष्करकारकाः ॥ ३२७ ॥ किं पुनर्दुष्करं वत्स!, युक्तियुक्ते निवर्त्तने? । कुमारः प्राह यद्येवं, तत्तातेनाऽवधार्यताम् ॥ ३२८ ॥ मृत्युशैले जगत्रय्याघातकेऽत्यन्तभीषणे । पातुकेऽभीष्टभावानां, वियोगकृति दुर्जये ॥ ३२९ ॥ अर्थकामपरित्यागोऽव्यावाधः शिवकारणम् । सेव्यते दुष्करं नैतद्दुष्करस्त्वितराश्रयः ॥ ३३० ॥ राज्ञोचे सत्यमेवेदं, सम्यगालोच्यते यदि । दुरन्तस्तु महामोहः, कुमारोऽथ जगाद तम् ॥ ३३१ ॥ सत्यं दुष्टावसानोऽयं यन्मृत्यौ प्रभवत्यपि । जरया गृह्यमाणा अप्यर्थभोगवशंवदाः ॥ ३३२ ॥ सर्वजन्तुहितेऽत्यन्तं, मृत्युवार्धकघातके । जिनोक्ते न प्रवर्तन्ते, धर्मे निर्वाणसाधके ॥ ३३३ ॥ [ युग्मम् ] राज्ञोचे सत्यमेवेदं, सोद्वेगा प्राह तत्प्रिया । मोहनाशेन नौ जातं, कामितं न तु वालयोः ॥ ३३४ ॥ प्रोचे कुमारोऽलं मातरुद्वेगेन यदेतयोः । सम्पन्नं कामितं धन्ये, मोक्षबीजेन सङ्गते ॥ ३३५ ॥ तन्मुखे वीक्षिते देव्या, प्रोचतुस्ते प्रणम्य ताम् । स्नेहमात्रनिमित्तोऽयमुद्वेगो वां मनस्यलम् ॥ ३३६ ॥ अन्यथा त्वार्यपुत्रेण, यदादिष्टं तथैव तत् । सफलं मानुषत्वं नौ, संपन्न कामि-

ताधिकम् ॥ ३३७॥ दध्यौ च देव्यहो! रूपमनयोस्तत्त्ववेदिता । गाम्भीर्यं वाक् शमो भक्तिः, समुदाचरणं तथा ॥ ३३८॥ ऊचे च युवयोर्वत्से!, खड्गसेनेन जातयोः । युक्तमेतद्गुरुजनो, यदेवमनुवर्त्तते ॥ ३३९॥ तदा पुरन्दराख्यस्य, भट्टस्य सदने महान् । आक्रन्दोऽभून्नृपो ज्ञातुं, यावत्कञ्चित्प्रहेष्यति ॥ ३४०॥ तावदुक्तः कुमारेण, तात! ज्ञातमिदं खलु । विजृम्भितं भवस्याऽथ, राज्ञोचे कथय स्फुटम् ॥ ३४१॥ कुमारः प्राह भट्टोऽयमस्त्यर्धोपरतोऽधुना । तद्वेश्मन्यगमाक्रन्दो, नृपः प्रोचेऽद्य सेक्षितः ॥ ३४२॥ कुमारः प्राह ताताऽयमहेतुर्मृत्युधर्मिणाम् । नृपः प्राह न कोऽप्यस्य, व्याधिरासीत्कथं मृतः? ॥ ३४३॥ ऊचे कुमारोऽवक्तव्यस्तात! व्यतिकरो ह्यसौ । निन्द्यो लोकद्वये यस्मादथ प्राह धराधवः ॥ ३४४॥ निन्द्यं किं वा न संसारे?, कौतुकं मम तद्वद । न चाऽत्राऽसज्जनः कश्चिद्यस्माज्ज्ञोप्यं प्रकाशते ॥ ३४५॥ कुमारः प्राह यद्येवं, तातस्तर्हि शृणोत्विदम् । सोऽस्ति नर्मदया पत्न्याऽर्धहतो विपदानतः ॥ ३४६॥ अन्यच्च तद्गृहद्वारनैर्ऋत्यां श्वाऽपि तिष्ठति । तयै-वाऽर्धहतो वैद्यान्, प्रेष्य द्वावपि जीवय ॥ ३४७॥ तात! जीविष्यतोऽवश्यमेकेनैवौषधेन तौ । नृपो दध्यावहो! ज्ञानाति-शयो मत्तनूभुवः ॥ ३४८॥ विषवैद्यानथाऽऽदिश्य, नृपः प्रोचे कुमार! किम् । अस्याऽसद्व्यवसायस्य, तस्या जज्ञे निब-न्धनम्? ॥३४९॥ स प्राह निर्विवेकत्वं, विशेषादपरं पुनः । पुरन्दरस्य साऽतीव, शचीव खलु वल्लभा ॥ ३५०॥ मोहदोषा-न्निजे दासेऽर्जुनाख्ये प्रासजत्पुनः । तत्परंपरया श्रुत्वा, श्रद्दधे स्नेहतो न सः ॥ ३५१॥ अन्यदा तज्जनन्या स्ववंशभ्रंशन-भीतया । न सुन्दरा महेला ते, मोपेक्षस्वेति भाषितम् ॥ ३५२॥ दध्यौ पुरंदरो नैतद्घटतेऽम्बा तु भाषते । तत्पराक्ष इति ध्यात्वैकान्ते सा तेन भाषिता ॥ ३५३॥ राजादेशेन गन्तव्यं, मया कान्ते! महासरः । सम्यगेवाऽऽसितव्यं तत्त्वया क्वापि

वासरान् ॥३५४॥ सा प्रोचे कीदृशं सम्यगार्यपुत्र! त्वया विना?। इत्युक्त्वा रुदती शीघ्रमेष्यामीति प्रबोधिता ॥ ३५५ ॥ द्वितीयदिवसे गत्वा, कैतवेन पुरंदरः। निर्गम्य वासरं रात्रियामयुग्मेऽविशद्गृहम् ॥३५६॥ वासवेश्मप्रविष्टेन, तेनाऽदृश्यत नर्मदा। अर्जुनेन समं सुप्ता, सुरतायासखेदतः ॥ ३५७॥ क्रुद्धो दध्यौ सुधाहारतुल्या नार्योऽतियत्नतः। भोगश्च रक्षणं चाऽऽसां, दुराचारोऽर्जुनः पुनः ॥३५८॥ हन्म्येनं तदिति ध्यात्वा, सुप्तस्तेनाऽर्जुनो हतः। निर्गत्य वासगेहाच्च, बहिः कोणे स्थितः स्वयम् ॥ ३५९ ॥ विबुद्धा नर्मदा रक्तस्पर्शतो ध्यातवत्यथ। हहा!! केनापि पापेन, हतो मे प्राणवल्लभः ॥ ३६० ॥ हताऽहं निहता किं न?, तं विना जीवितेन किम्?। निवृत्ता रतिसौख्यस्य, कथा हृद्बन्धनं गतम् ॥३६१॥ ध्यात्वेति भित्त्यधो गर्ता, कृत्वा न्यस्तस्तया शवः। विलोक्येति स्वकार्याय, निर्जगाम पुरंदरः ॥३६२॥ सा तु कृत्वा स्थलीं तत्र, तन्मूर्तिं देवतामिव। नित्यमर्चति नैवेद्यबलिदीपविधानतः ॥ ३६३ ॥ आश्लिष्यति च मोहेनाऽथोचिते समये समेत्। पुरंदरो न चाऽलक्षि, सावहित्थतया तया ॥३६४॥ दिनैः कतिपयैर्दृष्ट्वा, स्थलीशुश्रूषणोद्यताम्। तामेष दध्यौ मूढत्वमहो! अस्याः सरागता ॥३६५॥ यद्वाऽनधीतशास्त्रः स्त्रीजनो हि भवतीदृशः। सुधाहारसमा नार्यो, मुनिवाक्यमिदं यतः ॥३६६॥ ध्यात्वेति पूर्ववत्सार्धं, तया विषयसेवनात्। अहःसमाः समास्तस्य, द्वादश व्यतिचक्रमुः ॥ ३६७ ॥ इतोऽह्नि पञ्चमेऽतीते, पक्षान्ते प्रस्तुते बलौ। अभुक्तेषु द्विजेष्वेषा, स्थलीबलिविधिं व्यधात् ॥३६८॥ तां वीक्ष्य सस्मितं प्राह, किं तेऽद्यापि हलेऽमुना?। श्रुत्वेति भिन्नचित्ता साऽध्याद्व्यामुखाम्बुजा ॥ ३६९ ॥ मन्ये मम प्रियोऽनेन, हतो हन्मि रिपुं ततः। वैरनिर्यातनां कुर्वे, प्रदाय

---

१ सव्यभिचारिभावत्वेन। २ वर्षाणि। ३ श्यामन्० विम्वा—श्यामेत्यर्थः।

विषभोजनम् ॥ ३७० ॥ ध्यात्वेत्यसौ तथा चक्रे, तात! व्यतिकरो ह्ययम् । स्थल्युपद्रवकर्तुश्च, शुनः कस्याऽप्यदः कृतम्
॥३७१॥ किं च तत्प्रेममोहेन, रक्षितुं स्थल्युपद्रवम् । तया हतोऽर्जुनः सैषः सप्तकृत्वः स्ववल्लभः ॥३७२॥ कृमिपंल्याखुंमण्डूका-
लैसाहिंश्वाँनरूपतः । उत्पन्नः स्थानकस्नेहाद्द्राको निहतस्तया ॥३७३॥ धिक् संसारं युवा यत्र, निजरूपेण गर्वितः । कृमिर्वि-
पद्य जायेत, निज एव कलेवरे ॥३७४॥ तत्प्रेममोहितहृदा, स्त्रियैव च स हन्यते । तथापि जन्तुर्मोहेन, विपयेष्वेव खेलति
॥३७५॥ तदेष श्वानवृत्तान्तः, संविग्नो नृपतिस्ततः । दध्यावहो! भवो भीष्मो, विचित्रा कर्मणां गतिः ॥३७६॥ अहो! विषय-
लोलत्वमहो! चाऽज्ञानजृम्भितम् । अहो! अतत्त्ववेदित्वं, सर्वथा गहनं ह्यदः ॥ ३७७॥ तदा वैद्याः समागत्याऽवदन्देवप्रसा
दतः । पुरंदरः कुक्कुरश्च, देव! द्वावपि जीवितौ ॥ ३७८॥ जीवितौ कथमित्युक्ते, नृपेण भिषजो जगुः । दत्त्वा त्याजनका-
न्युच्चैर्विषं संत्याज्य जीवितौ ॥ ३७९॥ तदा वालातपप्रायं, तेजः पुर्यां विजृम्भितम् । दुन्दुभिर्दिव्यगेयं च, श्रुतेर्हर्षप्रकर्षदे
॥ ३८०॥ राज्ञोचे किमिदं वत्स!, देवोत्पातं स आख्यत । वत्स! कोऽयं सुरः? किं चाऽकाण्डेऽस्योत्पातकारणम्?
॥ ३८१॥ कुमारः प्राह तातैष, गुणधर्मेभ्यनन्दनः । जिनधर्माभिधोऽद्यैव, देवभूयं जगाम सः ॥ ३८२॥ स्वभार्यासुहृदो-
र्बोधायाऽऽगतो बोधितौ च तौ । निजश्रीर्दर्शिता तेनोत्पतता स्वर्गतेः कृते ॥३८३॥ नृपः प्राह कथं वत्साऽद्यैव देवत्वमाप
सः? । कथं वा गृहिणीमित्रे बोधिते तेन? मे वद ॥३८४॥ ऊचे कुमार एषोऽपि, तात! व्यतिकरोऽखिलः । जातः कर्मप-
राधीनसत्त्वचेष्टानुरूपकः ॥३८५॥ तथापि कथ्यते पृष्टस्तातेनेत्यन्यथा कथम् । लोकद्वयविरुद्धं हि, शक्यमाख्यातुमीदृशम्?

१ वमनसाधनानि । २ देवत्वम् ।

कुमारः प्राह यद्येवं, तत्ताताऽऽकर्ण्यतामिदम् ॥ ३८७ ॥
॥ ३८६ ॥ राज्ञोचे वत्स! संसारे, नाऽऽख्येयं किंचिदस्ति किम्? । तन्मित्रं धनदत्ताख्यो, कुशलं भावयत्यलम् ॥ ३८८ ॥ तन्मित्रं धनदत्ताख्यो,
जिनोक्तभावितो ह्येष, भीतः संसारवासतः । विषयेषु निरीहश्च, कुशलं भावयत्यलम् ॥ ३८९ ॥ जिनधर्मस्त्वनाख्याय, निरपेक्षोऽद्य मन्दिरे ।
द्वितीयहृदयोपमः । भार्या च वन्धुला तेन, सङ्गता सा विमोहतः ॥ ३८९ ॥ जिनधर्मस्त्वनाख्याय, निरपेक्षोऽद्य मन्दिरे ।
द्वितीयहृदयोपमः । भार्या च वन्धुला तेन, सङ्गता सा विमोहतः ॥ ३९० ॥ वन्धुलाऽपि तमज्ञात्वा, तत्सङ्केतनिकेतनम् । सलोहकीलं पल्यङ्कं,
आसन्नशून्यगेहेऽस्थात्प्रतिमां सार्वरात्रिकीम् ॥ ३९० ॥ वन्धुलाऽपि तमज्ञात्वा, तत्सङ्केतनिकेतनम् । सलोहकीलं पल्यङ्कं,
आसन्नशून्यगेहेऽस्थात्प्रतिमां सार्वरात्रिकीम् ॥ ३९० ॥ द्विधाऽप्यस्यास्तमोदोपाद्विद्धः कीलेन तत्पदः ॥ ३९२ ॥
ससादाय समागता ॥ ३९१ ॥ जिनधर्मपदस्योपर्यभूत्पर्यङ्कपादकः । द्विधाऽप्यस्यास्तमोदोपाद्विद्धः कीलेन तत्पदः ॥ ३९२ ॥
ससादाय समागता ॥ ३९१ ॥ जिनधर्मपदस्योपर्यभूत्पर्यङ्कपादकः । तद्भारपीलितः कीलो, भित्त्वाऽङ्घ्रिं धरणीमगात् ॥ ३९३ ॥ मूर्च्छितः पीडया ताभ्यां,
तत्रैत्य धनदत्तेन, समं सा वन्धुलाऽवसत् । तद्भारपीलितः कीलो, भित्त्वाऽङ्घ्रिं धरणीमगात् ॥ ३९३ ॥ मूर्च्छितः पीडया ताभ्यां,
तत्रैत्य धनदत्तेन, समं सा वन्धुलाऽवसत् । तद्भारपीलितः कीलो, भित्त्वाऽङ्घ्रिं धरणीमगात् ॥ ३९४ ॥ प्रवृद्धधर्मबुद्धिः सन्, चिन्तयामास
भित्त्यस्त्रस्थो न लक्षितः । सोऽथ सञ्जातचैतन्योऽपश्यद् व्यतिकरं च तम् ॥ ३९४ ॥ प्रवृद्धधर्मबुद्धिः सन्, चिन्तयामास
चेतसि । ईदृशा विषया एते, धर्मबुद्धिविमोहकाः ॥ ३९५ ॥ नाशकाः शीलरत्नस्य, दुर्गदुर्गतिपातकाः । दुश्चिकित्स्या अमी
भावव्याधयश्च शरीरिणाम् ॥ ३९६ ॥ धन्यास्ते त्रिजगत्पूज्यास्तीर्थेशा मुनयोऽपि च । प्रायो न प्राणिनां पापबुद्धिर्यत्सन्निधौ
भवेत् ॥ ३९७ ॥ अधन्योऽहं तु भावोपकारं कर्तुं यदेतयोः । कुक्षिंभरिः क्षमो नास्मि, नित्यसङ्गतयोरपि ॥ ३९८ ॥ अहो!
ममाऽकृतार्थत्वमहो! मे दुःखहेतुता । संक्लिष्टं चेष्टितं हेतुर्दुर्गतेश्च यदेतयोः ॥ ३९९ ॥ मया व्यर्थीकृतं सूक्तं, श्रूयते यच्च
निष्फलः । योगः कल्याणमित्राणां, कीदृक्कल्याणता च मे? ॥ ४०० ॥ यदेतदीदृशं पक्षपाते सत्यपि मेऽनयोः । पक्षपातं च
तं वेत्ति, मदीयं किल केवली ॥ ४०१ ॥ परमेष्ठिमहामन्त्रे, प्रयत्नं तत्करोम्यहम् । तं ध्यायन्नेष हित्वाऽङ्गं, ब्रह्मलोके सुरोऽ-

१ तन्नामा श्रेष्ठिपुत्रः । २ मस्त० कोनक्र ।

भवत् ॥४०२॥ ज्ञात्वाऽवधेरकृत्वाऽपि, देवकृत्यं कृपाभरात् । समायातो विबोधाय, वेगतो मित्रभार्ययोः ॥४०३॥ स्यादेवंविधयोर्बोधिर्विनिपातं विना न हि । तदेवमायया चक्रे, बन्धुलायां विशूचिकाम् ॥४०४॥ तस्याश्च वेदनार्ताया, अशुच्यपि विकुर्वितम् । दुर्गन्धं चिक्कणं स्पर्शे, भिन्ना तेन समन्ततः ॥४०५॥ हा! म्रिये इति जल्पन्ती, धनदत्तमसौ श्रिता । सोऽमेध्यालेपतो जातारतिरेतद् व्यचिन्तयत् ॥४०६॥ अहो! कीदृगिदं जातमित्युद्विग्नो विदूरगः । तयोक्तो मम भज्यन्तेऽङ्गान्यार्त्ताऽहं म्रिये तथा ॥४०७॥ स प्राह किमहं कुर्वेऽसाध्यमेतत्तयोदितम् । संवाहयाऽङ्गं सोऽथ्यैतदुपरोधात्तथा व्यधात् ॥४०८॥ श्लिष्टावशुचिजम्बाले, न च सञ्चरतः करौ । स दध्याविति किं पापं, प्रकर्षमिदमागतम्? ॥४०९॥ ऊचे च किमहं कुर्वे?, यतो न वहतः करौ । सा दध्यौ सत्यमेवं यद्वञ्चितस्तादृशः पतिः ॥४१०॥ कृतं लोकद्वये निन्द्यमिति संवेगमागता । प्रवृत्ता रोदितुं बाढं, हाऽऽर्यपुत्राऽऽर्यपुत्र! हा! ॥४११॥ दध्यौ च धनदत्तो हा! हाऽनार्य धनदत्त! ते । ईदृशे जीवलोकेऽस्मिन्नसारे च शरीरके ॥४१२॥ श्रुत्वा प्रियसुहृद्वाक्यं, प्रसादानुपजीव्य च । किमीदृगुचितं? चेष्टातुल्यं परिणतं च ते? ॥४१३॥ हा! मया मन्दभाग्येन, प्रियमित्र! भवानपि । द्रोहितोऽसीति संवेगसङ्गतो मोहमासदत् ॥४१४॥ विबुध्याऽवधिना बोधकालं संवेगवृद्धये । शवपूजामिषादेवः, प्रत्यक्षः शवमार्चयत् ॥४१५॥ एतौ हृतार्त्तिशोकाग्नी, तं नत्वा हृदि दध्यतुः । अहो! अस्य प्रभावेण, वेदनाऽपगताऽऽवयोः ॥४१६॥ शक्ती रूपं द्युतिः कीर्तिरहो! अस्येति विस्मितौ । पुनर्नत्वोचतुः कस्त्वं?, किंनिमित्तमिहाऽऽगतः? ॥४१७॥ देवोऽहं जिनधर्मार्चापूजार्थं च समागतः । तेनोक्ते

---

१ उपद्रवम् । २ अर्चा० मूर्त्ति ।

र्योग्या, भवेयुः कथमीदृशाः? । योग्याश्च संप्रवर्तन्ते, परिणामे किमीदृशे? ॥ ४३५ ॥ कुमारः प्राह ताताऽत्र, विचित्रा कर्मणां गतिः । किं च तादृश्यकुशले, न्ाऽभून्निर्मग्नचित्तता ॥ ४३६ ॥ जाता कुशलपक्षे तु, सङ्गताऽऽगमसम्पदा । भावसारा व्यतीचारा, निरपेक्षा भवस्थितौ ॥ ४३७ ॥ [ युग्मम् ] ऊचेऽचलापतिर्वत्स !, समीचीनमिदं वचः । अनीदृशी प्रवृत्तिः किं, भिनत्ति भवपञ्जरम्? ॥ ४३८ ॥ कुमारः प्राह तातेन, सम्यगेवाऽवधारितम् । किं च विज्ञपयाम्युच्चैस्तात! मम्प्रति किंचन ॥ ४३९ ॥ रतिर्न मे भवेऽमुष्मिन्नटपेटकसन्निभे । तत्तातानुमतो हातुमिच्छाम्येतं प्रसीद मे ॥ ४४० ॥ वदन्निति पपाताङ्घ्रयोर्नृप उत्सार्य्य तच्छिरः । ऊचे मतं नः सर्वेषामेतत्तत्त्वं मतो मया ॥ ४४१ ॥ अथवा ज्ञानतो भावोपकारात्कारणित्वतः । गुरुस्त्वं पृच्छसि कुतः?, कुरु कारय चोचितम् ॥ ४४२ ॥ उवाच समरादित्यः, प्रसादोऽयं महानभूत् । यत्तातेन व्यवसितमिदं समुचितं मुदा ॥ ४४३ ॥ अथ प्राभातिकं तूर्यं, वन्दिध्वनिवदध्वनत् । वाताः प्रत्यूषवाताश्च, प्रोल्ललासाऽरुणोऽरुणः ॥ ४४४ ॥ तद्भियेव तमोऽनेशद्दिनलक्ष्मीः समागमत् । मिलितानि रथाङ्गानि, विबुद्धं नलिनीवनम् ॥ ४४५ ॥ आगतानाममात्यानां, रात्रिव्यतिकरं नृपः । आख्यच्च निजमाकूतमेतद्बहुमतं च तैः ॥ ४४६ ॥ नृपः पुरुषसिंहोऽथ, जामेयं क्षत्रियोत्तमम् । कुमारं मुनिचन्द्राख्यं, निजराज्ये न्यवीविशत् ॥ ४४७ ॥ दापितं च महादानं, कारितोऽष्टाहिकामहः । मानिताः पौरसामन्ताः पूजिता गुरुवन्दिनः ॥ ४४८ ॥ चतुर्ज्ञानप्रभासान्द्रः, प्रभासाख्यः प्रभुस्तदा । समवासरदुद्याने, नाम्ना पुष्पकरण्डके ॥ ४४९ ॥ कुमारः सुमुहूर्तेऽथ, मूर्तो धर्मः समन्वितः । पितृभ्यां धर्मपत्नीभ्यां, मित्रैर्मन्त्रिजनैरपि ॥ ४५० ॥ पुरन्दरेण सामन्तैरुचितैर्नागरैरपि । याप्य-

---

१ परीक्षकत्वात् । २ अत्र तृतीये पादे षष्ठो वर्गो गुरुस्थाने लघुर्वर्त्तते । ३ रक्तवर्णः । ४ सूर्यः ।

यानं समारूढो, महर्द्धिसमुदायवान् ॥ ४५१ ॥ नदद्भिर्मङ्गलातोद्यैर्नृत्यद्भिः पापमूलकैः । वन्दिभिः स्तूयमानोऽर्थिसार्थस्वेच्छां प्रपूरयन् ॥ ४५२ ॥ सङ्गतो राजलोकेन, वीक्ष्यमाणश्च नागरैः । जनयन्विस्मयं तेषां, संवेगं च प्रवर्धयन् ॥ ४५३ ॥ बोधिबीजं वपंस्तेषु, परिणामविशुद्धिमान् । निर्गत्याऽऽगात्तदुद्यानं, प्रभासाचार्यभासितम् ॥ ४५४ ॥ [ पञ्चभिः कुलकम् ] तदा देवाः समागच्छन्, महानभ्युदयोऽभवत् । पार्श्वे प्रभोः प्रभासस्य, प्रव्रज्यामाददे च सः ॥ ४५५ ॥ नतो नृदेवैर्देवैश्च, मुनिचन्द्रेण पूजितः । अमार्युद्घोषणा जज्ञे, धर्मः सर्वत्र विस्तृतः ॥ ४५६ ॥ अमुं व्यतिकरं मत्वा, गिरिसेनोऽतिपीडितः । प्राच्यकर्मानुभावेन, बाधितश्च क्षुधाऽधिकम् ॥ ४५७ ॥ दध्यावहो! जनो मूढो, यदेतस्मिन्नपण्डिते । राजपुत्रे करोत्येवं, बहुमानममानधीः ॥ ४५८ ॥ विमान्यैनं दुरात्मानं, मानं व्यपनयामि तत् । अस्मादृशामप्यधुना, गतो दर्शनगोचरम् ॥ ४५९ ॥ चिरकालप्रदीप्तं स्वं, मनो निर्वापयामि च । निहत्यैनमिति च्छिद्रान्वेषणं विदधेऽन्वहम् ॥ ४६० ॥ [ कलापकम् ] यतिस्तु समरादित्यो, गुरुपादान्तिके वसन् । हेलयाऽपि हि जग्राह, द्वादशाङ्गीं सदाग्रहः ॥ ४६१ ॥ स्थापितो वाचकपदे प्रभासप्रभुणा ततः । सह शिष्यगणेनाऽगादयोध्यां पुरमन्यदा ॥ ४६२ ॥ तत्र शक्रावताराख्ये, चैत्ये सङ्घसमन्वितः । युते युगादिदेवेन, ययौ पूर्भूविभूषणे ॥ ४६३ ॥ चैत्यं यदश्मगर्भाश्मपीठिकं मणिकुट्टिमम् । सशालभञ्जिकमणिस्तम्भराजिविराजितम् ॥ ४६४ ॥ चन्द्रोदयेषु विन्यस्तमुक्तामालावचूलकम् । गर्भगेहान्तरे दीप्यमानरत्नप्रदीपकम् ॥ ४६५ ॥ पारिजातादिपुष्पौघप्रकरार्चितभूमिकम् । समेतदेवतारब्धतूर्यत्रिकमनोहरम्[3] ॥ ४६६ ॥ दह्यमानागुरुक्षोदामोदवासितदिक्पथम् । चारणश्रमणस्तोत्ररवप्रति-

१ येश्याभि॰ । २ अश्मगर्भ॰ नीलमणि । ३ तूर्यत्रिकम्-गीतनृत्यवादित्राणीत्यर्थः ।

श्चित्राङ्गदो नत्वाऽवदत्प्रभो! । के प्राणिनः कतिविधं, कर्म वध्नन्ति किंस्थिति? ॥५१८॥ स प्रोचे सप्तधा कर्माऽनायुर्बध्नन्ति देहिनः । मोहायुर्वर्जितं सूक्ष्मसंपरायास्तु षड्विधम् ॥५१९॥ वध्नन्ति च जिना वेद्यं, कर्म द्विसमयस्थिति । न संपरायं शैलेशीप्रतिपन्नास्त्ववन्धकाः ॥५२०॥ अप्रमत्तमुनीनां स्यात्, मुहूर्तान्यष्ट तु स्थितिः । उत्कृष्टाना जघन्या तु, मुहूर्तान्तः प्रचक्षते ॥५२१॥ अनाकुट्या प्रमत्ता ये, घ्नन्ति तेषां स्थितिर्मता । उत्कृष्टा वत्सराण्यष्टौ, मुहूर्तान्तः परा पुनः ॥५२२॥ बन्धः सम्यग्दृशां ग्रन्थिं, व्यतियाति कदापि न । उत्कृष्टस्तु भवेन्मिथ्यादृष्टीनां सूत्रभाषितः ॥५२३॥ चित्राङ्गदो जगादाऽथ, तथेति भगवन्निदम् । वाढं चाऽनुगृहीतोऽस्मि, तदिच्छाम्यनुशासनम् ॥५२४॥ आगता कालवेलाऽथ नरनाथादयो गताः । द्वितीयेऽपि दिनेऽभ्येत्य, चैत्यमस्थान्मुनीश्वरः ॥५२५॥ समागादग्निभूत्याख्यो, विप्रः श्रीवृषभप्रभुम् । नत्वा च समरादित्यवाचकं समुपाविशत् ॥५२६॥ ऊचे च भगवन्! देवविशेषं मे समादिश । तदुपास्तिविधिं तस्य, पर्युपास्तेः फलं तथा? ॥५२७॥ भगवानाह यो वीतरागो दोषविवर्जितः । ज्ञानी सुरासुरैः पूज्यः, परमार्थस्य देशकः ॥५२८॥ कृतार्थोऽचिन्त्यमाहात्म्यः, सर्वजीवहितोऽपि च । जन्ममृत्युजराहीनः, परमात्मा स देवता ॥५२९॥ [ युग्मम् ] यथाशक्ति निरीहेण, चित्तेनाऽत्यन्तभावतः । क्रियते निरतीचारं, सारं तदुपदेशितम् ॥५३०॥ दानं प्रदानं शीलस्य, पालनं तपसः क्रिया । भावनाभावनं चेति, तदुपास्तिविधिर्मतः ॥५३१॥ [ युग्मम् ] पर्युपास्तिफलं दिव्याः, कामभोगाः कुलं शुभम् । रूपं मतिः स्थितिर्धर्मे, गतिश्च परमे पदे ॥५३२॥ ऊचेऽग्निभूतिर्यो वीतरागो मध्यस्थ एव सः । कस्यापि कुरुते नोपकारमन्यथाभयात् ॥५३३॥ तं चाऽकुर्वन् कथं सर्वहितो? हेतुमिहाऽऽदिश । उवाच समरादित्यवाचकः शृणु सुन्दर! ॥५३४॥

धर्माधर्मवहिष्कृताः । क्षीणप्राये तृतीयारे, धर्मचक्री तु जायते ॥४८४॥ तत्प्रणीतं विवाहाद्यं, धर्मश्चैव चतुर्विधः । दानशीलतपोभावरूपः श्रेष्ठः प्रवर्तते ॥४८५॥ प्रसन्नचन्द्रभूपाल!, चतुर्थे त्वरके नराः । पूर्वकोट्यायुषः पञ्चधनुःशतसमुच्छ्रयाः ॥४८६॥ पञ्चमे तु वर्षशतायुषः सप्तकरोच्छ्रयाः । द्वयोरप्यनयोर्धर्माधर्मसञ्ज्ञा प्रवर्तते ॥४८७॥ षष्ठे पुनः षोडशाब्दायुषो हस्तसमुच्छ्रयाः । भवत्येषा पुनर्धर्माधर्मसंज्ञा न तादृशी ॥४८८॥ एकान्तदुःखप्रचिता, उत्सर्पिण्यामपीदृशाः । पश्चानुपूर्व्या विज्ञेया, अरेषु किल षट्स्वपि ॥४८९॥ एवं हि भरतक्षेत्रे, प्रथमो धर्मचक्र्ययम् । न पुनः परतो नाऽभूद्धर्मः शर्मभरप्रदः ॥४९०॥ अथाऽऽह नृपतिर्मोहोऽपनीतः प्रभुणा मम । बाढं चाऽनुगृहीतोऽस्मि, तदिच्छाम्यनुशासनम् ॥४९१॥ तदा समागतो वृद्धो, मध्यस्थो भवभीरुकः । इन्द्रशर्माभिधो विप्रो, नत्वाऽपृच्छदतुच्छधीः ॥४९२॥ कर्माऽष्टधा कथं जीवो, वध्नातीति समादिश? । उवाच वाचकः सौम्य!, पठ्यते समये हि नः ॥४९३॥ ज्ञानस्य निह्नवद्वेषप्रत्यूहाशातनादिभिः । विसंवादेन च ज्ञानावरणं कर्म वध्यते ॥४९४॥ दर्शनावरणं तत्र, निह्नवाद्यैस्तु वध्यते । भूतानुकम्पया सातवेदनीयं तु वध्यते ॥४९५॥ जीवानां दुःखतापाद्यैरसातं वध्यते पुनः । तीव्रैः कषायमिथ्यात्वैर्मोहनीयं तु वध्यते ॥४९६॥ वध्नाति नरकायुस्तु, महारम्भात्परिग्रहात् । पञ्चेन्द्रियवधान्मांसाहारादपि च देहभृत् ॥४९७॥ तिर्यगायुर्निबध्नाति, मायथाऽलीकवाक्यतः । कूटया तुलया कूटमानेन च शरीरभृत् ॥४९८॥ स्वभावविनयित्वेन, सानुक्रोशतयाऽपि च । अमत्सरितया जीवो, मनुष्यायुर्निबन्धकः ॥४९९॥ देवायुर्बन्धकोऽकामनिर्जराज्ञानकष्टतः । सरागसंयमाज्जीवः, संयमासंयमादपि ॥५००॥

१ देशविरतेः ।

आर्जवैर्वाङ्मनोङ्गानामविसंवादयोगतः । नामकर्म शुभं बध्नात्यशुभं वैपरीत्यतः ॥५०१॥ उच्चैर्गोत्रं निबध्नाति, जात्यादिमदवर्जितः । जात्यादिमदकर्ता तु, नीचैर्गोत्रस्य बन्धकः ॥५०२॥ स्याद्दानलाभभोगोपभोगवीर्यान्तरायतः । बन्धकस्त्वन्तरायस्य, बन्धः सौम्य ! भवेदिति ॥५०३॥ इन्द्रशर्माऽऽह भगवन् !, एवं सति पुनः किमु । मोक्षबीजं कथं वा तत्, प्राप्यते ? भगवाञ्जगौ ॥५०४॥ मोक्षबीजमिदं तावच्छमाद्यङ्कं सुपावनं । सम्यक्त्वं सत्परीणामरूपं दुष्कर्मनाशनम् ॥५०५॥ तच्चार्हद्दर्शनाद्धर्मश्रुतेः सद्गुणसङ्गमात् । गुणानां पक्षपातेन, तथा भाव्यनियोगतः ॥५०६॥ अनुकम्पादिभावाच्च, क्षयोपशमतोऽपि च । कर्मणां प्राप्यतेऽथाऽऽहेन्द्रशर्मा भगवन् ! कथम् ॥५०७॥ एवं व्यवस्थिते मोक्ष, एकान्तेन सुखात्मकः । दुःखैकसेवनारूपाद्, व्रतानुष्ठानतो भवेत् ? ॥५०८॥ गुरुः प्राह चिकित्सातः, सुखनीरोगता यथा । प्राप्यते संयमान्मोक्षोऽत्यन्तं सुखमयस्तथा ॥५०९॥ न चापि दुःखसेवात्मा, परमार्थेन संयमः । शमसौख्यपरीणामालेश्याशुद्धत्वतोऽपि च ॥५१०॥ किं चैतत्पठ्यते तत्र, चक्रिणो वज्रिणः सुखम् । भवेऽपि यद्भवेत्साधोर्लोकव्यापारवर्जिनः ॥५११॥ प्रश्नः श्रमणनिर्ग्रन्था, येऽमी आर्यतया प्रभो ! । व्यतिव्रजन्ति ते कस्य ?, तेजोलेश्यामथोत्तरम् ॥५१२॥ व्यन्तराणां नवानां च, नागादिभवनौकसाम् । असुराणां ग्रहाणां च, सूर्याचन्द्रमसामपि ॥५१३॥ आनतप्राणतौ हित्वा, कल्पयोश्च द्वयोर्द्वयोः । ग्रैवेयकभवानां चाऽनुत्तराणां सुपर्वणाम् ॥५१४॥ एकादिद्वादशान्तमासपर्यायतः क्रमात् । व्यतिव्रजन्ति ते तेजोलेश्यां गौतमसाधवः ॥५१५॥ [कलापकम्] शुक्ललेश्यस्ततः साधुः, शुक्लध्यानी च सिध्यते । बुध्यते मुच्यते सर्वदुःखान्तं च करोत्ययम् ॥५१६॥ तदेवं परमार्थेन, दुःखरूपो न संयमः । इन्द्रशर्माऽऽह भगवंस्तवेच्छाम्यनुशासनम् ॥५१७॥ अथ पूर्वागत-

रवाकुलम् ॥४६७॥ हारनीहारगोक्षीरकुन्देन्दुसमदीधिति । प्रह्वानिवाऽऽह्वयद्दूराच्चलता ध्वजपाणिना ॥४६८॥ [ पञ्चभिः
कुलकम् ] आरुह्य मणिसोपानमाले तत्राऽभिवन्द्य च । जगत्रयगुरुं चैत्यैकदेशे न्यपदद्गुरुः ॥४६९॥ चारणश्रमणैर्विद्याधरैः
सिद्धैश्च वन्दितः । तदागमं वनीपालोऽवनीपालाय चाऽऽख्यत ॥४७०॥ तं संतोष्य प्रमोदेन, भगवद्वन्दनोत्सुकः ।
आगात्प्रसन्नचन्द्रो द्रागयोध्यायाः पुरोऽधिपः ॥४७१॥ कृत्वा भगवतः पूजां, वन्दित्वा चैत्यसंहतिम् । नत्वा च समरादित्य-
वाचकं समुपाविशत् ॥४७२॥ अपृच्छच्च कथं धर्मचक्र्याद्यो वृपभः प्रभुः ? । कथं धर्मः पुरा नाऽभूत्कथितस्त्वमुनाऽधुना ?
॥४७३॥ भगवानाह भरतेऽवसर्पिण्यामयं प्रभुः । धर्मचक्र्यादिमो नैव, नाऽभूद्धर्मः परेण तु ॥४७४॥ अनादयो जिना
धर्मस्तदाख्यातोऽप्यनादिमान् । नृपः प्रोवाच सर्वत्र, भवत्येपाऽवसर्पिणी? ॥४७५॥ भगवानूचिवान् कर्मभूपञ्चदशकान्तरे ।
भरतैरावतक्षेत्रदशके संभवत्यसौ ॥४७६॥ विदेहेपु सदैव स्युश्चक्रिणो धर्मचक्रिणः । शार्ङ्गिणः सीरिणः सिद्धिस्तत्र कालो
ह्यवस्थितः ॥४७७॥ भरतैरावतक्षेत्रदशके तु प्रवर्तते । कालश्चक्रमिवैतच्च, द्वादशारं प्रचक्षते ॥४७८॥ पडरा अवसर्पिण्यामुत्स-
र्पिण्यां च तेऽन्यथा । एवं द्वादशभिस्तैस्तु, कालचक्रं यदूचिरे ॥४७९॥ तत्रैकान्तसुपमारश्चतस्रः कोटिकोटयः । सागराणां
सुपमा तु, तिस्रस्तत्कोटिकोटयः ॥४८०॥ सुपमदुःपमा ते द्वे, दुःपमसुपमा पुनः । सैका सहस्रैर्वर्पाणां, द्विचत्वारिंशतो-
निता ॥४८१॥ प्रत्येकं कथ्यते वर्पसहस्राण्येकविंशतिः । दुःपमाऽतिदुःपमा च, विलोमोत्सर्पिणी च सा ॥४८२॥
तत्राऽऽद्येऽरत्रये मर्त्यास्त्रिद्व्येकपल्यजीविताः । त्रिद्व्येकगव्यूतोच्छ्रयास्त्रिद्व्येकदिनभोजनाः ॥४८३॥ कल्पद्रुफलसंतुष्टा,

---

१ नीहार० हिम । २ नम्रान् । ३ चक्रवर्त्तिनः । ४ तीर्थङ्कराः । ५ वासुदेवाः । ६ बलदेवाः ।

कथनात्परमार्थस्य, महामोहप्रणाशनम् । न च तस्मात्परः कश्चिदुपकारपरो भवेत् ॥५३५॥ परपीडापरित्यागाद्भगवांस्तं करोति च । एष एवाऽत्र हेतुस्तदग्निभूतिरथाऽवदत् ॥५३६॥ भगवन्नित्युपास्तौ स्यादुपकारोऽस्य कीदृशः? । फलसिद्धिः कथं तस्याऽभावे? तस्माच्च सा कथम्? ॥५३७॥ गुरुः प्राह न खल्वत्र, मता तस्योपकारतः । फलसिद्धिर्भवेत्किंतु, तदुपासनयाऽनया ॥५३८॥ दृष्टं तदुपकारस्याऽभावेऽपि विधिसेवया । चिन्तामण्यग्निमन्त्रेभ्योऽभीष्टार्थफलसेवनम् ॥५३९॥ स्मृतेरनुसृतेर्जापान्न तत्तेभ्यो न जायते । श्रुत्वेति प्रतिबुद्धोऽग्निभूतिराह तथेति च ॥५४०॥ तदा चाऽभिनवः श्राद्धः, समेतपरिजनान्वितः । धनवृद्ध्यभिधः श्रेष्ठी, श्रीनाभेयमपूजयत् ॥५४१॥ नत्वा च वाचकं तस्योपविष्टोऽन्ते तमूचिवान् । भगवन्! सर्वसावद्यव्यापारविरतिर्यतेः ॥५४२॥ स्थूलप्राणातिपातादिरूपाणुव्रतदानतः । श्राद्धानामपरे[1] तस्याऽनुमतिः किं न जायते? ॥५४३॥ गुरुः प्रोवाच विधिना, प्रदाने सा न जायते । स प्राह विधिदानं तत्, कीदृशं? भगवाञ्जगौ ॥५४४॥ कथयित्वा ससंवेगं, भवसात्म्यं[2] यथाविधि । अनवस्थितमेकान्ताद्दुःखधोरणि[3]कारणम् ॥५४५॥ तस्य निर्घातने शक्तमात्यन्तिकरसायनम् । मोक्षसाधकमक्षेपान्[4], मुनिधर्मं यथास्थितम् ॥५४६॥ जनयित्वा शुभं भावं, संवेगस्य प्रवर्धनात् । तमप्रपद्यमानेषु, श्रावकेषु स्वकर्मतः ॥५४७॥ लग्नेष्वणुव्रतादाने, माध्यस्थ्याद्यच्छतो मुनेः । आकाराद्यवदातं तद्विधिदानं प्रकीर्तितम् ॥५४८॥ [कलापकम्] श्रेष्ठ्यूचे भगवन्नेवमपि तस्येतरे[5] कथम् । न स्यादनुमतिः? प्राह, भगवाञ्शृणु सुन्दर! ॥५४९॥ श्रीवसन्तपुराधीशो, जितशत्रुरभून्नृपः । सधर्मचारिणी तस्य, धारिणी शीलधारिणी ॥५५०॥ नाड्यातिशयतस्तस्याः, परितुष्टो धराधिपः ।

---

१ असयमे । २ भवस्वभावम् । ३ धोरणि० परम्परा । ४ जवात् । ५ अविरतौ ।

उवाच क्रियतां किं ते, प्रियं प्रियतमे !? वद ॥ ५५१ ॥ साऽवोचदार्यपुत्राऽत्र प्रसादः कौमुदीमहे । यथेप्सितप्रचारेणाऽन्तःपुराणां विधीयताम् ॥ ५५२ ॥ इति प्रतिश्रुते राज्ञा, दिवसः स समागमत् । सर्वत्रोद्‌घोषितं चेत्थं, पुरे पटहपूर्वकम् ॥ ५५३ ॥ यः कोप्यद्य पुरस्याऽन्तः, पुरुषो निशि वत्स्यति । तस्य दण्डो विधातव्यो, मया विग्रहनिग्रहः ॥ ५५४ ॥ उग्रदण्डं नृपं मत्वा, निर्ययुः पुरुषाः समे । एकस्य श्रेष्ठिनः किंतु, षड् सुता न विनिर्गताः ॥ ५५५ ॥ व्यवहारजुषां तेषां, प्रतोल्यः संवृतास्ततः । ते तत्रैव निलीयाऽस्थू रजन्यामुत्सवोऽभवत् ॥ ५५६ ॥ द्वितीयदिवसे राज्ञा, परिज्ञाय चरैरिमे । क्रुद्धेनाऽवन्ध्यकोपेन वध्यत्वेन निदेशिताः ॥ ५५७ ॥ गृहीता राजपुरुषैः, षडपि श्रेष्ठिनन्दनाः । नीताश्च वध्यमेदिन्यां, श्रेष्ठिना शुश्रुवे च तत् ॥ ५५८ ॥ गृहीत्वाऽथ महारत्नपूर्णं स्थालं समागतः । समीपे नृपतेरित्थं, स च विज्ञो व्यजिज्ञपत् ॥ ५५९ ॥ देव ! मन्तुं क्षमस्वैषामेकवारं विमुञ्च च । अन्येऽप्येवं विधातारो, नेति मुञ्चति भूपतिः ॥ ५६० ॥ मा भूत्कुलक्षय इति, भण्यमानः पुनः पुनः । ज्येष्ठपुत्रं नृपोऽमुञ्चत्पिता तं वह्वमन्यत ॥ ५६१ ॥ अन्ये तु निहता राज्ञा, श्रेष्ठिनः समताजुषः । एकस्य वहुमानेऽस्ति, परेष्वनुमतिः कथम् ? ॥ ५६२ ॥ दृष्टान्तोऽयमुपनयस्त्वस्य श्राद्धो नृपोपमः । साधुः श्रेष्ठिसमः पुत्रतुल्या जीवास्तु षड्विधाः ॥ ५६३ ॥ विज्ञप्तितुल्या विज्ञेया, साधुधर्मस्य देशना । एवं च सूक्ष्मजीवानां, श्रावकस्याऽविमोचने ॥ ५६४ ॥ साधोरनुमतिर्न स्याद्वेदितरथा पुनः । अत एवोक्तमर्हद्भिः, पूर्वं ज्ञानं ततो दया ॥ ५६५ ॥ सर्वं सम्यगनुष्ठानं, ज्ञानपूर्वमतो मतम् । श्रुत्वेति मुदितः श्रेष्ठी, धनवृद्धिरभाषत ॥ ५६६ ॥ यदाऽऽत्थ भगवन् ! सत्यमिदं धर्मो जिनोत्तमैः । सुष्ठु दृष्टो ह्ययमहो !, अहो ! ध्वस्ततमोभरैः ॥५६७॥ तदा पूर्वागतो नत्वाऽशोकचन्द्रोऽब्रवीदिति । भगवन् ! ये खलु स्तोकेऽपि प्रमादस्य चेष्टिते ॥५६८॥

विपाकदारुणाः शास्त्रे, श्रूयन्ते ते तथैव किम्? । उताऽन्यथा? प्रभुः प्राह, शृणु सौम्य! समाहितः ॥५६९॥ सिद्धान्तोक्ता हि सत्या यन्नाऽन्यथावादिनो जिनाः । ये तु सिद्धान्तबाह्याः स्युर्यदृच्छा तेषु सुन्दर! ॥५७०॥ अशोकः प्राह भगवन्!, केषाञ्चिदपि किं ततः । हिंसादिषु प्रवृत्तानां सुविरुद्धकृतामपि ॥५७१॥ संपत्तिरक्षया भोगा, घना दीर्घं च जीवितम् । अल्पेऽपि त्वपराधे स्यादितरेषां विपर्ययः? ॥ ५७२ ॥ [ युग्मम् ] प्रोचे गुरुः परिणतिर्विचित्रा खलु कर्मणाम् । पापानुबन्धिपुण्या ये, जीवा दुर्गतिगामिनः ॥५७३॥ भवाभिनन्दिनः क्षुद्राः, कल्याणस्य पराङ्मुखाः । संपत्त्यादि भवेत्तेषां, पापपूरणहेतवे ॥५७४॥ परमाथान्न सा सम्पत्, परेषां तु महात्मनाम् । उक्तभावविपर्यासाज्ज्ञेयः सर्वविपर्ययः ॥५७५॥ [ विशेषकम् ] तेनाऽथ सत्यमित्युक्ते, नत्वा प्राह त्रिलोचनः । विशिष्टं किमुपष्टम्भप्रदानाभयदानयोः ॥५७६॥ ऊचे भगवता दानमभयस्य विशिष्यते । दृष्टान्तोऽत्राऽऽत्तचौरस्य, राजपत्न्या विमोचनात् ॥५७७॥ अस्त्यत्रैव पुरे ब्रह्मपुरे राजा कुशध्वजः । कमलाख्या महादेवी, तिस्रोऽन्यास्तस्य सन्ति च ॥५७८॥ अन्यदा च गवाक्षस्थस्ताभिश्चतसृभिः सह । अक्षद्यूतविनोदेन, यावदस्ति नरेश्वरः ॥५७९॥ तावन्नैककशाघातदूनं बद्धं च तस्करम् । तलारक्षः समानीय, नृपं विज्ञसवानिति ॥५८०॥ देवाऽनेन परद्रव्यस्याऽपहारो विनिर्मितः । व्यापादयैनमित्युक्ते, राज्ञा संचारितः स तैः ॥५८१॥ प्राणानामथ वाल्लभ्यात्साक्रन्दं तेन भाषितम् । अहो! प्रथमचौर्योऽहं, हन्येऽप्राप्तमनोरथः ॥५८२॥ श्रुत्वेति देव्यो निर्व्याजं, नृपं व्यज्ञपयन्निति । अयं मनोरथेऽपूर्णे, मार्यतामार्यपुत्र! मा ॥५८३॥ किमप्यस्योचितं कुर्म, आर्यपुत्रप्रसादतः । नृपेण कुरुतेत्युक्ते, विमोच्यैका गृहेऽनयत् ॥५८४॥ अभ्यङ्गकुशलैः पुम्भिस्तमभ्यङ्गं विधाप्य सा । गन्धोदकैश्च संस्नाप्य, क्षौमयुग्ममदान्मुदा ॥५८५॥

लग्ना दशसहस्रयस्याः, सर्वद्रव्यव्ययः कृतः । परया पायितः सीधु, घृतपूरांश्च भोजितः ॥५८६॥ विलेप्य यक्षपङ्केन, प्रदत्ता स्वर्णमेखला । सहस्रा विंशतिस्तस्या, लग्नाश्च स्वव्ययः कृतः ॥५८७॥ अन्यया भोजयित्वैष, भोजनं सर्वकामितम् । पायितः पानकान्युच्चैर्भूषितो दिव्यभूषणैः ॥५८८॥ प्रदत्तमथ ताम्बूलं, लक्षं द्रव्यस्य चाऽलगत् । सापि चौरस्य तस्याऽर्थे, सर्वद्रव्यव्ययं व्यधात् ॥५८९॥ रात्रौ कमलिनीवाऽथ, कमलाख्या मुकुल्यभूत् । भणिता च नरेन्द्रेण, किञ्चित्त्वं न ददासि किम् ? ॥५९०॥ सोचे ममाऽऽर्यपुत्राऽर्थो, नास्ति दानेऽस्य सुन्दरि ! । राज्ञोचे तव किं नास्ति ?, मत्प्राणा अपि ते वशाः ॥५९१॥ सोचे महाप्रसादो मे, यद्येवं देवनिर्मितः । आर्यपुत्रानुमत्याऽस्मै, तत्किंचिद्वितराम्यहम् ॥५९२॥ एवं कुर्विति राज्ञोक्ते, बभाषे तस्करस्तया । भद्र ! दृष्टस्त्वयाऽकार्यबीजद्रुकुसुमोद्गमः ॥५९३॥ स प्राह देवि ! दृष्टोऽयं, सुष्ठु तेनाऽनुतापवान् । यावज्जीवं निवृत्तोऽस्म्यकार्याचरणतोऽमुतः ॥५९४॥ देवी प्रोवाच यद्येवं, तद्ददेऽस्याऽभयं मया । सुदत्तमिति राज्ञोक्ते, चौरः स मुदितोऽधिकम् ॥५९५॥ हसितं शेषदेवीभिः, प्रदत्तं सुष्ठु सुन्दरम् ? । कमलोचे हसत किं ? पृच्छतैनं हि सुष्ठु किम् ? ॥५९६॥ ताभिः पृष्टोऽवदच्चौरो, मया मृत्युभयात्पुरा । ज्ञातं किमपि नो वस्तु, साम्प्रतं सुखितः पुनः ॥५९७॥ सर्वाभिः सत्यमित्युक्तं विशिष्टमभयं ततः । हृष्टस्त्रिलोचनः प्रोचे तथेति भगवन्निदम् ॥५९८॥ कालवेलाऽथ सञ्जाता, श्राद्धवर्गो ययौ गृहम् । कृतं भगवता सर्वं, तदात्वसमयोचितम् ॥५९९॥ इत्थं विहृत्य देशेषु, गते काले कियत्यपि । वाचकः समरादित्योऽन्यदाऽवन्त्यां समागमत् ॥६००॥ स जातशिष्यनिष्पत्तिः, सद्योगाराधनाविधौ । अशोकोद्यान

१ मदिरा । २ कर्पूरादिपञ्चवस्तूनां द्रवेण ।

एकान्ते, स्थितः प्रतिमया स्थिरः ॥ ६०१॥ तथास्थो गिरिसेनेन, दृष्टश्च क्लिष्टकर्मणा । हिण्डितोऽयं बहुं कालमित्यत्यन्तं चुकोप सः ॥ ६०२॥ स रौद्रध्यानसन्धानो, दध्यावेतच्च चेतसि । प्रस्तावोऽत्रेप न पुनरीदृशः क्वापि दृश्यते ॥ ६०३॥ हन्म्येनं तद्दुराचारं, पूरयामि मनोरथम् । तथा हन्मि यथा दुःखं, महच्चाऽनुभवत्ययम् ॥ ६०४॥ शीघ्रं कुतश्चिदानीय, वेष्टितः स पटच्चरैः । सिक्तश्च तैलेनैतस्य, लगितोऽथ हुताशनः ॥ ६०५॥ किंचिद्भगवता योगातिशयात्तन्न चेतितम् । प्रवृत्ते देहदाहे तु, समभूद् व्यानसङ्क्रमः ॥६०६॥ दध्यौ चाऽहो! भवो भीमः, कस्याऽपि क्लेशकारणम् । बभूवाऽहमधाऽलं मे, चिन्तितेनाऽमुनाऽधुना ॥ ६०७॥ सुन्दरा समतैवाऽत्र, चिन्तामिति विमुच्य सः । विशुद्धं ध्यानमध्यायद्योगः परिणतस्ततः ॥ ६०८॥ महासामायिकं जज्ञेऽथाऽपूर्वकरणं क्रमात् । क्षपकश्रेणिमारूढो, जीववीर्यं विजृम्भितम् ॥ ६०९॥ ध्यानानलः प्रवृद्धोऽथ, निर्दग्धाः कर्मशत्रवः । दग्धं मोहेन्धनं लब्धा, लब्धयः स्वो विमोचितः ॥ ६१०॥ स्थापितः परमे योगे, घातिकर्माणि तुत्रुटुः । अभूच्च केवलज्ञानं, लोकालोकप्रकाशकम् ॥ ६११॥ गिरिसेनेन मन्येऽहं, तत्तनुर्दीपिका कृता । महातमःप्रभां नाम, दुर्गतिं गन्तुमिच्छता ॥ ६१२॥ सत्यं च व्रतपञ्चास्यधर्मत्रस्त इवाऽन्त्यजः । महर्षेः समरादित्यस्याऽङ्गमुल्मुकमादधात् ॥ ६१३॥ पुत्रा अनुहरन्ते यत्, पितरं नितरामिति । अशठैः पठितं सूक्तं, लोकेऽलीकमजायत ॥ ६१४॥ यतोऽदत्त य एवाऽग्निर्गिरिसेनस्य दुर्गतिम् । तेनैव जातो ध्यानाग्निरन्यस्य शिवदोऽभवत् ॥ ६१५॥ [ युग्मम् ] तत्पूर्वमेव दृष्टाया, देव्याः श्रीकेवलश्रियः । शुशुभेऽस्य विभोर्देहो, ज्वलन्मङ्गलदीपवत् ॥ ६१६॥ तदा केवलिनस्तस्य, प्रभावाच्चलितासनः । दत्त्वोपयोगमवधौ, सविधक्षेत्रसंश्रयः ॥ ६१७॥ अनेकदेवतायुक्तो, गृहीतकुसुमोत्करः । गत्या जव-

नतरयाऽऽगमद्वेलंधरः सुरः ॥ ६१८॥ [युग्मम्] प्रणम्य भगवन्तं स पुष्पवृष्टिमपातयत्। धूमध्वजं च विध्याप्य, जम्बीराण्यपानयत् ॥ ६१९॥ समरादित्यपूर्वाद्रावादित्य इव केवले। उदिते ज्वलनो जज्ञे, निष्प्रभः किं तदद्भुतम्? ॥ ६२०॥ किमेतदिति संक्षुब्धो, गिरिसेनोऽथ भाषितः। वेलंधरेण रे पाप्मन्!, दुराचार! नराधम! ॥ ६२१॥ अद्रष्टव्यमुखाऽश्रेयः, किमिदं विदधे त्वया?। यदेष विश्ववन्द्योऽपि, विश्वनिन्द्य! कदर्थितः ॥ ६२२॥ [युग्मम्] मुनिचन्द्रमहीन्द्रोऽथ, नर्मदादिप्रियान्वितः। महासामन्तसंयुक्तः, समेत्य प्राणमत्प्रभुम् ॥ ६२३॥ राज्ञा वेलंधरः पृष्टः, किमेतदिति सोऽवदत्। प्रभोः प्राणान्तिकं ध्यानमनार्येणाऽमुनाऽग्नितः ॥ ६२४॥ राज्ञोचे मोहसामर्थ्यमहो! अस्य सुदारुणम्। अथाऽस्याऽध्यवसायस्य, कारणं किं नु संभवेत्? ॥ ६२५॥ यद्विभुः सर्वजीवानां, वत्सलो हर्षकारणम्। वर्जकः परपीडाया, अथ वेलंधरोऽवदत् ॥ ६२६॥ कारणं नावगच्छामि, तर्कयामीदृशं पुनः। अशुभः कर्मबन्धोऽस्याऽनन्तसंसारकारणम् ॥ ६२७॥ राज्ञोचे सत्यमेवेदं, भगवानत्र पृच्छ्यते। वेलंधरोऽवदद्राजन्नान्यथा संशयच्छिदा ॥ ६२८॥ अथो ऋभुप्रभुः कर्तुं, महिमानं मुनिप्रभोः। भवता दिव्यनाम्नेनाऽऽगमन्नागमधिश्रितः ॥ ६२९॥ संशोध्य पृथ्वीं सम्पाद्य, समतां गन्धवारिभिः। सिक्त्वा संपूज्य पुष्पैश्च, न्यास्थत्कनकवारिजम् ॥६३०॥ उपविष्टो विभुस्तत्र, देवराजेन वन्दितः। स्तुतश्च भगवन्धन्यो, मोहो व्यपगतस्तव ॥ ६३१॥ निवृत्ताः सर्वसंक्लेशा, विजिताः कर्मशत्रवः। प्राप्ता केवललक्ष्मीश्चोपकृतं भव्यजन्तुषु ॥ ६३२॥ श्रुत्वेति मुदितो बाढं, मुनिचन्द्रो महीपतिः। ववन्दे पुनरप्येनं, देवीसामन्तसङ्गतः ॥ ६३३॥ तदा च किन्नरैर्गीतं, नृत्तं स्वर्गिवधूगणैः। कैवल्यमहिमा जज्ञेऽमुष्य तेनाऽऽगमञ्जनाः ॥ ६३४॥ अहो! महानुभावोऽयं, न चक्रे रुचिरं मया। ध्यात्वेति गिरिसे-

नोऽपि, पुण्यबीजी ततो ययौ ॥६३५॥ ज्ञात्वाऽथ समयं ज्ञानी, प्रारेभे धर्मदेशनाम् । दन्तद्युता सितध्यानवर्णिकामिव
दर्शयन् ॥६३६॥ भो भो भव्यजना ! धर्मशीला ! जन्तुरनादिमान् । काञ्चनोपलवत्कर्ममलेन परिसङ्गतः ॥६३७॥ तद्दो-
षादेव लभते, विकारान् वहुयोनिषु । तत्रोत्पन्नो जरारोगमृत्युभिश्च कदर्थ्यते ॥६३८॥ वेदनां लभते योगवियोगैर्दूयतेऽ-
धिकम् । न मोहबाधितो वेत्ति, त्रिदोषीव हिताहितम् ॥६३९॥ हितं परिहरत्युच्चैरपथ्यं वहुमन्यते । महापदश्च प्राप्नोति,
तस्मादेवं व्यवस्थिते ॥६४०॥ परित्यजत मूढत्वं, तत्त्वं वीक्षध्वमादरात् । देवान् गुरूंश्च महत, विधिदानं प्रयच्छत
॥६४१॥ विमुच्य कुत्सितं मैत्रीमङ्गीकुरुत देहिषु । शीलं शुद्धं प्रपद्यध्वमभ्यस्यत तपो द्विधा ॥६४२॥ भावना भावयध्वं
च, त्यजताऽसद्ग्रहं मुहुः । ततोऽपनयत ध्यानैः, शुभैः कर्ममलं चिरात् ॥६४३॥ एवं जीवेऽत्र कल्याणीभूते कर्ममलक्ष-
यात् । न दुष्कृतविकाराः स्युर्जायते च परं सुखम् ॥६४४॥ उपदिष्टगुणेष्वस्मात्, स्वशक्त्या कुरुतोद्यमम् । श्रुत्वेति
पर्षत्संविग्ना, प्रतिपन्ना गुणान्तरम् ॥६४५॥ अमराः समरादित्यं समरागं शुभाशुभे । नत्वाऽगुरमरावत्याममराधिपसंगताः
॥६४६॥ मुनिचन्द्रोऽथ पप्रच्छ, भगवन् ! किं नैरार्वणः । तस्योपसर्गकारित्वे, कारणं भगवत्यपि ? ॥६४७॥ भगवानाह
पापानुबन्धोऽयं सुमहानभूत् । गुणसेनाग्निशर्मादिकथामकथयत्ततः ॥६४८॥ श्रुत्वेति सर्वं संविग्नमथ वेलंधरोऽवदत् ।
कीदृशः परिणामोऽस्य, भविताऽथ गुरुर्जगौ ॥६४९॥ साम्प्रतं नरकप्राप्तिस्ततोऽनन्तो भवः पुनः । अथाऽऽह नर्मदा देवी,
कीदृशा नरकाः ? प्रभो ! ॥६५०॥ नारकाः कीदृशाः ? कीदृक्, तत्र तीव्रा च वेदना ? । उवाच केवली वाचमाकर्ण्य सुधा-

१ वातपित्तकफवान् । २ मनुष्याधमः ।

मिंकि ! ॥६२१॥ मध्ये वृत्ताश्चतुष्कोणा, वहिर्नित्यतमोवृताः । अधः क्षुरप्रसंस्थानस्थिताः सूर्यादिवर्जिताः ॥६५२॥
नित्यलिप्ततलाः पूतिवसामेदोस्रकर्दमैः । अमेध्यादिकदुर्गन्धा, वह्निवर्णाः सुकर्कशाः ॥६५३॥ सुदुःसंचरवर्त्मानः, सुती-
क्ष्णायसगोक्षुरैः । दुष्प्रेक्षाः कर्तरीचक्रकुन्तशूलासिशक्तिभिः ॥६५४॥ दुर्गन्धा दूरसा दुष्टस्पर्शा दुःशब्दमन्दिराः । घोरास्ते
नरकावासा, यत्र ते सन्ति नारकाः ॥६५५॥ कालाः कालावभासाश्च, भीमा उत्रासना अपि । नित्योद्विग्नाः सुदुःखार्त्ता,
भवं तेऽनुभवन्ति हि ॥६५६॥ विचित्रकर्मजास्तत्र, विचित्रा वेदना इमाः । शीर्षच्छेदशूलभेदौ, करपत्रेण दारणम् ॥६५७॥
असंधिच्छेदजिह्वारुक्तप्ततान्नादिपायनम् । भक्षणं वज्रतुण्डैश्च, शरीरेण बलिक्रिया ॥६५८॥ दृप्तश्वापदजा भीतिर्नयनो-
त्पाटनानि च । प्रवेशो निष्कुटे घोरे, शस्त्रपातश्च सर्वशः ॥६५९॥ सद्यो ध्मातलोहमयपुत्रिकाश्लेषणानि च । ज्वलच्छिला-
निपाताश्च, मूर्च्छया परतन्त्रता ॥६६०॥ इत्यादिका महत्यः स्युर्वेदनाः सहजास्तथा । शीतोष्णवेदनास्तत्रोपमानेन विव-
र्जिताः ॥६६१॥ [पञ्चभिः कुलकम्] सप्तसु क्षेत्रजा पीडा, षष्ठीं यावन्मिथः कृता । तिसृष्वाद्यासु विहिता, स्यात्परा-
धार्मिकैरपि ॥६६२॥ ऊचे सुलसमञ्जर्या, स्वरूपं भगवन् ! दिश । विमानानाममर्त्यानां, तदीयसुखसंपदाम् ॥६६३॥ गुरुः
प्राह विमानास्ते, निष्पङ्कमलधूलयः । सर्वरत्नमया नानासंस्थाना मृदुताजुषः ॥६६४॥ सश्रीकाः सप्रभा दर्शनीया
उल्लोचशालिनः । कलितास्तोरणैश्चित्रैः, किंकरामररक्षिताः ॥६६५॥ सरसश्लक्ष्णगोशीर्षचन्दनन्यस्तहस्तकाः । पञ्चवर्णकपु-
ष्पस्रगुपचारेण राजिताः ॥६६६॥ दह्यमानागुरुक्षोदधूपधूमसुगन्धयः । अप्सरोगणसंकीर्णास्तूर्यध्वनितबन्धुराः ॥६६७॥

१ आरामे । २ उल्लोच० चन्द्रोय ।

[कलापकम्] देवा विचित्रचिह्नाश्च, रूपवन्तो महर्द्धिकाः । महापूर्वयशःसौख्यबलद्युत्यनुभावकाः ॥ ६६८ ॥ सर्वालङ्करणाकीर्णा, विलसद्दिव्यवाससः । माल्यानुलेपनधरा, वनमालाविभूषिताः ॥ ६६९ ॥ वर्णगन्धरसस्पर्शैर्दिव्यैर्द्युत्या च दिव्यया । लेश्यया तेजसा चापि, द्योतयन्तो दिशो दिशः ॥ ६७० ॥ दिव्यवादित्रनादेन, दिव्यगीतरवेण च । दिव्यान् भोगोपभोगांश्च, भुञ्जाना विहरन्ति ते ॥ ६७१ ॥ [कलापकम्] प्रोचे सुलोचना देवा, देवसौख्यं च सुन्दरम् । भगवन्नादिश सिद्धाः, सिद्धसौख्यं च कीदृशम् ? ॥ ६७२ ॥ भगवानूचिवान् धर्मशीलेऽत्र महदन्तरम् । सौन्दर्यं किं हि देवानां ?, येषामङ्गमशाश्वतम् ॥ ६७३ ॥ कषायोत्कटता कर्मबन्धस्य परतन्त्रता । इन्द्रियाण्यवशान्युर्वी, तृष्णा विषयसंभवा ॥ ६७४ ॥ उत्कर्षाश्चापकर्षाश्च, विचित्रा मोहवैशसम् । विरसोऽन्तो भयं मृत्योस्तत्तेषां कीदृशं सुखम् ? ॥ ६७५ ॥ संगीतादिकयोगोऽपि, न सुखं परमार्थतः । गीतं सर्वं विलापो यन्नाट्यं सर्वं विडम्बनम् ॥ ६७६ ॥ अलङ्काराः समे भाराः, कामाः सर्वेऽप्यसातदाः । धर्मशीले ! ततः सिद्धाः, परमार्थेन सुन्दराः ॥ ६७७ ॥ तेषामेव सुखं यत्ते, कर्मबन्धनवर्जिताः । परिनिष्ठितकार्यत्वाद्रहिताश्च मनोरथैः ॥ ६७८ ॥ निर्भयाः सर्वभावानां, ज्ञातारः प्रेक्षकाश्च ते । बुधानां हेतवः सिद्धेर्जन्ममृत्युविवर्जिताः ॥ ६७९ ॥ यद्वा किं नेदृशां सौख्यं, परमानन्दयोगतः । सर्वाबाधानिवृत्तानां ?, सिद्धान्ते हि प्रचक्ष्यते ॥ ६८० ॥ सिद्धस्य सुखराशिः स्यात्सर्वाद्धापिण्डितो यदि । अनन्तवर्गभक्तोऽपि, सर्वाकाशे न माति सः ॥ ६८१ ॥ न च[illegible]स्ति [illegible]नुष्याणां, सर्वेषां च सुपर्वणाम् । सौख्यं यदस्ति सिद्धानामव्याबाधामुपामिति ॥ ६८२ ॥ सुलोचनेति श्रुत्वोच्चैः, [illegible] भगवन्निदम् । सवेगोऽजनि सर्वेषां [illegible] वेलंधरोऽवदत् ॥ ६८३ ॥ भगवन् ! कीदृशं सिद्धस्वरूपं ? भगवानाह । आकारोऽत्रो न

न वृत्तश्चतुरस्रो वा, पञ्चवर्णविवर्जितः । न सुगन्धो न दुर्गन्धो, न च स्त्रीपुं-
दीर्घोऽस्ति, न ह्रस्वो न त्रिकोणकः ॥ ६८४॥ ॥ न वृत्तश्चतुरस्रो वा पञ्चवर्णविवर्जितः । स्निग्धो रूक्षो मृदुश्चण्डो, नोष्णः शीतो गुरुर्लघुः
नपुंसकः ॥ ६८५॥ न तिक्तो न कटुर्नाऽऽम्लो, न स्वादुस्तुवरो न च । स्निग्धो रूक्षो मृदुश्चण्डो, नोष्णः शीतो गुरुर्लघुः
॥ ६८६॥ न सङ्गो न रुहश्चैव, नान्यथाऽस्य च विद्यते । सञ्ज्ञोपमा परिज्ञा वा, नीरूपः सत्तया तु सः ॥ ६८७॥ शब्दो
रूपं रसो गन्धः, स्पर्शश्चाऽस्य न विद्यते । अपदस्य पदं नास्ति, निर्विकार इति ब्रुवे ॥ ६८८॥ समस्तानन्तयोगीन्द्रानन्दसु-
न्दरमन्दिरम् । सर्वप्रपञ्चरहितं, परब्रह्मेति तं विदुः ॥६८९॥ अन्यच्च ज्ञातमस्तीह, धर्मशीला! निशम्यताम् । सुलोचनाऽव-
दत्तस्मादनुगृह्णातु नः प्रभुः ॥ ६९०॥ उवाच वाचकप्रष्ठः, समरादित्यकेवली । क्षितिप्रतिष्ठितं नाम, पुरं सुरपुरप्रभम्
॥ ६९१॥ येनैकधनदानेकधनदाश्रयशालिना । वस्वोकसारा निःसारा, विदधे निजसंपदा ॥ ६९२॥ जितशत्रुर्धरित्रीशस्त-
त्राऽस्त्यन्वर्थनामभृत् । युक्तं तस्य महादेवी, जयश्रीरिति विश्रुता ॥ ६९३॥ तस्य रत्येव कामस्य, तया दयितया सह ।
विषयानुपभुञ्जानस्याऽगात्कालः कियानपि ॥ ६९४॥ महर्द्धिरपि पापर्द्धिकृतेऽसौ निर्गतोऽन्यदा । वाह्लीकमश्वमारूढोऽमन्तू-
ञ्जन्तून्बहूनहन् ॥ ६९५॥ कर्मणेव हृतस्तेन, वाजिना वायुवाजिना । क्षिप्तोऽतिगहने विन्ध्यधरणीधरगह्वरे ॥ ६९६॥ ततो
विषमदेशेऽस्य, प्रसरः स्खलितो महान् । ततः संचरति स्मैप, मन्दमन्दपदस्पदः ॥ ६९७॥ अत्रान्तरे च संनद्धबद्धकङ्कट[2]-
संकटः । निध्याय दध्यौ धात्रीशं, शंबरो[3]ऽनुचरोपमः ॥ ६९८॥ महानुभावः कोप्येष, पुरुषः पतितोऽटवौ । भीमायां तत्क-
रोम्यस्योपचारमुचितोचितम् ॥ ६९९॥ ध्यात्वेति नत्वा भूपालं, खलीने[4] हयमग्रहीत् । अनैषीच्च जलाभ्यर्णमुत्तीर्णः पृथि-

१ अलकानगरी । २ कङ्कट० वर्मन् । ३ भिल्ल० । ४ 'लगाम' इति भाषायाम् ।

वीपतिः ॥७००॥ उत्पर्याण्य तुरङ्गोऽथ, कृतपद्मामबन्धनः । उर्व्यामखर्वदूर्वायां, भिल्लेन मुमुचेऽमुना ॥७०१॥ अकुंण्ठ इव वण्ठोऽयं, स्नपयित्वा नृपं ततः । गत्वा पनसनारङ्गकदलादिफलान्यलात् ॥७०२॥ सुस्वादूनि सुगन्धीनि, तान्यानीयोपनीय च । पतित्वा पादयोः प्राह, प्रसादं कुरु देव! मे ॥७०३॥ सफलानि फलानि त्वमाहारग्रहणात्कुरु । नृपो दध्यावहो! अस्य, वत्सलत्वमकारणम् ॥७०४॥ अहो! वचनविन्यासो, बहुमानो महानहो! । भक्तिश्च विनयश्चाऽहो! महापुरुषचेष्टितम् ॥७०५॥ करोम्यस्य धृतिं तस्मादाहारग्रहणादहम् । मा वैमनस्यमस्य स्यादिति राज्ञा प्रतिश्रुतम् ॥७०६॥ महाप्रसाद इत्युक्त्वा, स पपात पुनः पदोः । कृता राज्ञाऽस्य विज्ञप्तिः, सफला च फलाशनात् ॥७०७॥ तदा परिणते घस्रे, सहस्रांशौ तिरोहिते । सन्ध्याकाले कृतं कृत्यमुचितं जगतीभुजा ॥७०८॥ शबरः स्रस्तरं ध्वस्ततूलिकाविस्तरं व्यधात् । असमैः कुसुमैः शुभ्रं, सौरभ्यभरभासुरम् ॥७०९॥ संयम्य वाजिनं चापव्यग्रपाणिः समागतः । नृपं व्यजिज्ञपच्चैवं, विश्वस्तः स्वपिहि प्रभो! ॥७१०॥ उक्त्वेति पार्श्वतो भ्राम्यन् स तस्थौ नृपतिः पुनः । शिश्ये महानुभावत्वं, शबरस्य विचिन्तयन् ॥७११॥ विभावरी विभाताऽथ, पूर्वाद्रिमरुणोऽरुणत् । तदाऽश्वपदमार्गेणाऽनुपदं सैन्यमागमत् ॥७१२॥ विबुद्धो नृपतिर्वन्दिशब्दैरथ च ढौकितः । महाश्वपतिना तस्य, तौरुष्कतुरगः पुरः ॥७१३॥ नृपस्तं स्वयमारोहदरोहयदमुं हये । वोल्लाहे शबराधीशं, गतश्च नगरं निजम् ॥७१४॥ पौरैर्वर्धापितः स्पर्धानुबन्धेन परस्परम् । प्रविवेश विशामीशः, पुरं लक्ष्म्या पुरंदरः ॥७१५॥ अथ मज्जनवेलायां, ममज्ज शबरान्वितः । विदधे गुरुदेवानामुचितं रुचितं हृदः ॥७१६॥

---

१ पण्डितः । २ आसनम् । ३ सूर्यः । ४ तज्जातीये ।

वासगृहे चित्रवितानै चित्रचित्रके । पञ्चवर्णकपुष्पस्रक्सुगन्धितदिगन्तरे ॥७२६॥ घटिते परितो धूपघटीभिर्मणिदीपकैः ।
नीत्वा सैंदन्तपल्यङ्के, शायितस्तूलिकाजुषि ॥७२७॥ कृतोचितोपचारोऽयं, पायितः कापिशायनम् । दत्त्वा कर्पूरताम्बूलं,
भोगसौख्यं च लम्भितः ॥७२८॥ कियत्यपि गते काले, तेन व्यज्ञपि भूपतिः । देव ! गच्छामि राज्ञोचे, कुरुष्व रुचितं
तव ॥७२९॥ ततो दत्त्वा बहु द्रव्यं, महार्घ्यं वसनादि च । पलिपः प्रहितः पल्लीं, सप्रत्ययनरैः सह ॥७३०॥ स राज-
पुरुषानेतान्, विसृज्य स्वगृहं गतः । कल्पद्रुरिव देवाङ्गवसनाभरणादिभिः ॥७३१॥ समेत्य निजलोकेन, पृष्टः क त्वं
गतोऽभवः ? । स्थितः कालं क चेयन्तं, ? किं किं लब्धं च पलिप ? ॥७३२॥ तेनाऽथ कथितः पृथ्वीनाथनिर्वर्णनादिकः ।

---

१ शलण्डम् । २ पसन्तसुंना । ३ त्त्मसदेय । ४ भद्रग० श्रेष्ठ । ५ मालामधम् । ६ निर्वर्णन० दर्शन ।

पल्लीसमागमप्रान्तः, स्ववृत्तान्तः स्वकाग्रतः ॥७३३॥ स तैः सकौतुकैः पृष्टः, किंरूपं नगरं हि तत्? । कीदृशो नृपतिर्लोकस्तत्र भोगश्च? कथ्यताम् ॥७३४॥ ते तु तस्मिन्ननाख्याति सादृश्यरहिते वने । गुहाद्रुमूलकल्पानि, गृहाणि प्रलपन्त्यलम् ॥७३५॥ भक्ष्याणि फलतुल्यानि, युवतीः शबरीनिभाः । गुञ्जाश्च भूषणप्राया, धातुतुल्यं विलेपनम् ॥७३६॥ यथास्थितान्गुणानेष, न शक्तो वक्तुमञ्जसा । विकास्य वदनं तूष्णीं, शबरः श्रयते पुनः ॥७३७॥ एवमौपम्यहीनोऽत्र, मोक्षो वक्तुं न शक्यते । श्रद्धातव्यः पुनर्येन, नाऽन्यथावादिनो जिनाः ॥७३८॥ श्रुत्वेति मुनिचन्द्रस्य, देवीसामन्तसंयुजः । चारित्रमोहजं कर्म, क्षयोपशममागतम् ॥७३९॥ ऊचुश्च तानि भगवन्!, धर्मदेशनयाऽनया । युष्मच्चरिततश्चाऽभून्निर्वेदो भवचारके ॥७४०॥ तत्कर्तव्यं किमस्माभिर्भगवानादिशत्वदः । उवाच भगवान् यूयं, धन्यानि ज्ञानिसन्निधौ ॥७४१॥ सुप्राप्तं येन युष्माभिर्भवचारकमोक्षदम् । छेदनं स्नेहबन्धानां, मोहधूलिप्रमार्जनम् ॥७४२॥ अङ्गं ज्ञानप्रकर्षस्य, परं निर्वाणकारणम् । भावतः शुद्धचारित्रमतीचारविवर्जितम् ॥७४३॥ [विशेषकम्] कृतं कृत्यं ततस्तत्तु, द्रव्यतोऽपि प्रपद्यताम् । तानि प्रोचुः प्रमाणं हि, प्रभोरादेश एव नः ॥७४४॥ अथ वेलंधरो दध्यौ, धन्यान्येतानि सर्वथा । यत्प्राप्तं भावचारित्रं, सारं मनुजजन्मनः ॥७४५॥ वन्दित्वा हर्षसंयुक्तः, सर्वं तदुचितं व्यधात् । तान्यापुर्भगवच्छिष्यशीलदेवान्तिके व्रतम् ॥७४६॥ अथाऽऽश्चर्यकृपायुक्तोऽपृच्छद्वेलंधरः सुरः । प्रभुं श्रीसमरादित्यं, सम्यगानम्य भावतः ॥७४७॥ उद्दिश्य भगवन्तं स, स्वोपसर्गविधायकः । स्वामिन्नभव्यो भव्यो वा, परुषः पुरुषब्रुवः? ॥७४८॥ भगवानाह भव्योऽयमथ वेलंधरोऽवदत् । आप्तबीजोऽथवाऽनाप्तबीजोऽथ भगवाञ्जगौ ॥७४९॥ अनाप्तबीजः स प्राह, कदा प्राप्स्यत्यथाऽवदत् । केवली

समरादित्यस्तच्चरित्रमनागतम् ॥ ७५० ॥ पुद्गलानां परावर्तेष्वसंख्येषु गतेष्वयम् । नृपशार्दूलशार्दूलसेनस्याऽश्वो भविष्यति ॥७५१॥ तदा प्राप्स्यति येनैष, मामुद्दिश्य व्यचिन्तयत् । अहो! महानुभावोऽयमिति स्वच्छेन चेतसा ॥७५२॥ तेनाऽऽसफलितं बीजं, गुणवत्पक्षपातजम् । तज्जन्मपारंपर्येण, सम्यक्त्वस्य निबन्धनम् ॥७५३॥ अतीतेषु त्वसंख्यातभवेषु भववल्लभः । अयं संख्याभिधो विप्रो, भूत्वा निर्वाणमेष्यति ॥७५४॥ इत्याकर्ण्य सकर्णोऽयं, हृष्टो वेलंधरः सुरः । ज्ञानिनं सम्यगानम्य, निजं सदनमासदत् ॥७५५॥ भव्यान् बोधयतस्तत्रभवतो ज्ञानशालिनः । केवलित्वविहारेण, गतः कालः कियानपि ॥७५६॥ अन्यदा गिरिसेनस्तूज्जयिन्यामेव पुर्ययम् । चौर्यव्यतिकराद्धृत्वा, कुम्भीपाकेन घातितः ॥ ७५७ ॥ मन्येऽस्य गन्तुकामस्य, सप्तमीं नरकावनीम् । कुम्भीपाको महास्नेहादिव संमुखमागमत् ॥७५८॥ उत्पन्नश्च तथारूपप्रभुप्रद्वेषदोषतः । सप्तम्यां नरकावन्यामन्यायकुलसद्म सः ॥ ७५९ ॥ पृथिव्यां विहरन् कालक्रमेण भगवानपि । गतो वृषभतीर्थं द्राग्निर्वाणसमयं विदन् ॥ ७६० ॥ केवलित्वसमुद्घातं, शैलेशीं च प्रपद्य सः । भवोपग्राहिकर्माणि, क्षपयामास तत्क्षणम् ॥७६१॥ भ्रान्त्वाऽऽदित्य इवाऽवनौ स समरादित्यः प्रभुः केवली, सच्चक्रस्य सुखावहः शममहःप्रध्वस्तदोषोदयः । भित्त्वा मोहतमोभरं भवमहाम्भोराशिपारं परं, गत्या सार्जवया जगाम समयेनैकेन निःश्रेयसम् ॥७६२॥ विज्ञातुं हृदि तत्त्वसत्त्वनवके जेतुं कषायेन्द्रिया–रातीनां नवकं द्विधा नवविधब्रह्मव्रतं रक्षितुम् । निर्मातुं नवनोकषायकषणं यद्यस्ति वाञ्छा ततो, जन्मानां नवकं निबोध समरादित्यस्य वृत्ते विभोः ॥७६३॥ इति श्रीहरिभद्रोक्त्या, प्रद्युम्नाचार्यगुम्फिते । समरादित्यसंक्षेपे, नवमोऽनवमो भवः ॥७६४॥



## [ ग्रन्थकर्तुः प्रशस्तिः ]

"चन्द्रप्रभः प्रभुरभूदिह चन्द्रगच्छे, तस्माद्गुरुश्च समयूपुरि पद्मदेव्याः ।
श्रीमान्धनेश्वर इति प्रथितोऽस्य शिष्यः, श्रीशान्तिसूरिरिति तस्य च देवभद्रः ॥ १ ॥
अक्षावलिप्रवरपुस्तकधर्मचिह्न–श्वेताम्बुजस्वरविपञ्चिकरे यदीये ।
शब्दानुशासनविरञ्चिरितः स देवानन्दप्रभुः पुरुषरूपगिरीश्वरोऽभूत् ॥ २ ॥
श्रीरत्नप्रभपरमानन्दौ कनकप्रभः प्रभुश्चास्मात् । श्रीपरमानन्दविभोर्जय–सिंहः सूरिरुदियाय ॥ ३ ॥
शिष्यः श्रीकनकप्रभस्य सुकविः श्रीबालचन्द्रानुजो, ज्यायाञ्श्रीजयसिंहतः प्रतिभया श्रीवस्तुपालस्तुतः ।
विश्वाह्लादनठक्कुरान्वयगुरुर्मत्या सतां सम्मतः, सूरीणां सुकवित्वशोधनविधौ प्रद्युम्नसूरिः कविः ॥ ४ ॥
वर्षे वारिधिपक्षयक्षगणिते (१३२४) श्रीवर्धमानस्थितश्चक्रेऽमुं प्रथमं लिलेख तु जगच्चन्द्रः सुधीः पुस्तके ।
प्राग्वाटान्वयमन्त्रिवाहडसुतश्रीराणिगस्याङ्गजौ, ग्रन्थार्थे रणमल्लसेगसचिवौ स्वं प्रार्थयेतां गुरुम् ॥ ५ ॥
यावद्ग्रन्थरथाश्चतुर्दशशती श्रीहारिभद्रा इमे, वर्तन्ते किल पारियानिकतया सिद्ध्यध्वयानेऽङ्गिनाम् ।
तावत्पुष्परथः स एष समरादित्यस्य मन्त्रिर्मितः, संक्षेपस्तदनुप्लवः प्रचरतु क्रीडाकृते धीमताम् ॥ ६ ॥
यस्मिंश्चक्राणि रत्नत्रितयमृषिगृहिश्रेयसी चोद्धियुग्मं, कारुण्यं स्थालमुच्चैरितरयमचतुःकाष्ठिकागाढबद्धम् ।
संवेगस्वच्छभावौ शिखरकलशकौ शुद्धबुद्धिः पताका, साधुश्राद्धौ च धुर्यौ जयतु शमयुगः स्यन्दनः सैष शास्त्रम् ॥७॥"

